पातञ्जल दर्शनम् with the भाष्य of वेदव्यास and the commentary of वाचस्पति मिश्र — Edited by पं० जीवानन्द विद्यासागर भट्टाचार्य — Slightly pinholes in the margin in few pages. Calcutta, 1874

25

1245

Bill No. 5/07-08

124

2008-0583

# पातञ्जल-दर्शनम्।

———00000———

महर्षि-वेदव्यास-कृतभाष्य-सहितम्।

———000———

वाचस्पतिमिश्र-विरचित-टीकया-न्वितम्।



———0000———

वि, ए, उपाधि-धारिणा

श्रीजीवानन्द-विद्यासागर-भट्टाचार्य्येण

संस्कृतम्।

——————

कलिकाता नगरे

सत्ययन्त्रे-मुद्रितम्।

इं १८७४

# पातंजलदर्शनम् ।

---

## समाधिपादः ।

॥ श्रीं नमोगणेशाय ॥

**अथ योगानुशासनम् ॥ १ ॥**




यस्त्यक्त्वा रूपमाद्यं प्रभवति जगतोऽनेकधानुग्रहाय
प्रक्षीणक्लेशराशिर्विषमविषधरोऽनेकवक्त्रः सुभोगी ।
सर्वज्ञानप्रसूतिर्भुजगपरिकरः प्रीतये यस्य नित्यम्,
देवोऽहीशः स वोऽव्यात् सितविमलतनुर्योगदो योगयुक्तः ॥१॥

अथेत्ययमधिकारार्थः । योगानुशासनं शास्त्रमधि-

नमामि जगदुत्पत्तिहेतवे वृषकेतवे ।
क्लेशकर्मविपाकादिरहिताय हिताय च ॥
नत्वा पतञ्जलिमृषिं वेदव्यासेन भाषिते ।
संक्षिप्तस्पष्टबह्वर्था भाष्ये व्याख्या विधास्यते ॥

इह हि भगवान् पतञ्जलिः प्रारिप्सितस्य शास्त्रस्य संक्षेपतस्तात्पर्यार्थं प्रेक्षा-
वत् प्रवृत्त्यङ्गं श्रोतुञ्च सुखावबोध माचिख्यासुरादाविदं सूत्रं रचयाञ्चकार ।

कृतं। वेदितव्यम्। योगः समाधिः स च सार्व्वभौमः चित्तस्य धर्म्मः। क्षिप्तं मूढ़ं विक्षिप्त मेकाग्रं निरुद्ध मिति चित्तभूमयः। तत्र विक्षिप्ते चेतसि विक्षेपोप-

अथ योगानुशासनं। तत्र प्रथमावयवमथशब्दं व्याचष्टे। अथेत्ययमधिकारार्थोऽथ ज्योतिरितिवत् नत्वानन्तर्य्यार्थः। अनुशासनमिति हि शास्त्रमाह। अनुशिष्यतेऽनेनेति व्युत्पत्त्या। नचास्य शमदमाद्यनन्तरं प्रवृत्तिः। अपितु तत्त्वज्ञानचिख्यापयिषानन्तरम्। जिज्ञासाज्ञानयोस्तु स्यात् यथाम्नायते तस्मात् शान्तो दान्त उपरत स्तितिक्षुः समाहितीभूत्वात्मन्येवात्मानं पश्येदित्यादि शिष्यप्रश्नतप श्चरणरसायनाद्युपयोगानन्तर्य्यस्य च सम्भवेपि नाभिधानम्। शिष्यप्रतीतिप्रवृत्त्योरनुपयोगात्। प्रामाणिकत्वे योगानुशासनस्य तदभावे प्युपेयत्वात्। अप्रामाणिकत्वे च तद्भावेपि हेयत्वात् एतेन तत्त्वज्ञानचिख्यापयिषयोरानन्तर्य्याभिधानं परास्तम्। अधिकारार्थत्वे तु शास्त्रेणाधिक्रियमाणस्य योगस्याभिधानात्। सकलशास्त्रतात्पर्य्यार्थव्याख्यानेन शिष्यः सुखेनैव बोधितश्च प्रवर्त्तितश्च भवतीति निःश्रेयसस्य हेतुः समाधिरिति हि श्रुति स्मृति इतिहास पुराणेषु प्रसिद्धः।

ननु किं सर्व्वं सन्दर्भ गतोऽथ शब्दोऽधिकारार्थः। तथासत्यऽथातो ब्रह्म जिज्ञासेत्यादावपि प्रसङ्ग इत्यत आह। अथमिति॥ ननु हिरण्यगर्भो योगस्य वक्ता नान्यः पुरातन इति योगी याज्ञवल्क्य स्मृतेः कथं पतञ्जलि र्योगशास्त्रकृत्व मित्याशङ्क्य सूत्रकारेणानुशासनमित्युक्तं। शिष्टस्य शासनमनुशासनमित्यर्थः। यदा ऽयमथ शब्दोऽधिकारार्थस्तदैव वाक्यार्थः सम्पद्यते इत्याह॥ योगानुशासनं शास्त्रमधिकृतमिति॥ ननु व्युत्पाद्यमानतया योगोवाधिकृतो न तु शास्त्रमित्यत आह। वेदितव्यं इति। सत्यं व्युत्पाद्यमान तया योगः प्रस्तुतः स तु तद्विषयेण शास्त्रेण करणेन व्युत्पाद्यः करणगोचरश्च व्युत्पादकस्य व्यापारो न कर्म्मगोचर इति। कर्ट-

सर्ज्जनीभूतः समाधिर्न योगपक्षे वर्त्तते यस्त्वेकाग्रे चेतसि सद्भूतमर्थं प्रद्योतयति क्षिणोति च क्लेशान् कर्म्मबन्धनानि

व्यापार विवक्षया योग विषयस्य शास्त्रस्याधिकृतत्वं वेदितव्यं। शास्त्रव्यापार-गोचरतयातु योगएवाधिकृत इति भावः। अधिकारस्य चाथशब्दस्यान्यार्थं नीय-मानोदकुम्भदर्शनमिव श्रवणं मङ्गलायोपकल्पत इति मन्तव्यं।

शब्दसन्देह निमित्तमर्थसन्देहमपनयति॥ योगः समाधिः। युज समाधा वित्यस्माद्व्युत्पन्नः समाध्यर्थो न तु युजिर योगइत्यस्मात् संयोगार्थः इत्यर्थः।

ननु समाधिरपि वक्ष्यमाणस्याङ्गिणो योगस्याङ्गं। नचाङ्गमेवाङ्गीत्यत आह॥ स च सार्व्वभौम चस्त्वर्थोऽङ्गादङ्गिनं भिनत्ति भूमयोऽवस्था वक्ष्यमाणा मधुमती मधुप्रतीका विशोका संस्कारशेषास्ताश्चित्तस्य तासु सर्व्वासु विदितः। सार्व्वभौम श्चित्तनिरोध लक्षण योगस्तदङ्गन्तु समाधि र्नैवंभूतः व्युत्पत्तिनिमित्त मात्राभिधानं चैतद्योगः समाधिरिति। अङ्गाङ्गिनो रभेद विवक्षामात्रेण। प्रवृत्तिनिमित्तन्तु योग शब्दस्य चित्तवृत्ति निरोध एवेति परमार्थः। वृत्तयो ज्ञानान्यात्माश्रयानि अतस्तन्निरोधाप्यात्माश्रयएवेति। ये पश्यन्ति तान्निरासायाह। चित्तस्य धर्म्म इति। चित्तशब्देनान्तः करणं बुद्धिमुपलक्षयति। नहि कूटस्थनित्या चिति शक्तिरपरिणामिनी ज्ञानधर्म्मा भवितुमर्हति। बुद्धिस्तु भवेदिति भावः।

स्यादेतत् सार्व्वभौमश्चेद्योगः हन्त भोः क्षिप्त मूढ विक्षिप्ता अपि चित्त भूमयोऽस्ति च परम्परापेक्षयावृत्ति निरोधोप्यास्विति तत्रापि योगत्व प्रसङ्ग इत्याशङ्क्य हेयोपादेय भूमीरुपन्यस्यति। क्षिप्तमित्यादि॥ क्षिप्तं सदेव रजसा तेषु तेषु विषयेषु क्षिप्यमाण मत्यन्तमस्थिरं। मूढन्तु तमःसमुद्रेकान्निद्रा वृत्तिमत्। विक्षिप्तं क्षिप्ताद्विशिष्टं विक्षिप्तं विशेषोऽस्येम बहुलस्य कादाचित्कः

क्षपयति निरोधमभिमुखं करोति स सम्प्रज्ञातो योगइत्याख्यायते । स च वितर्कानुगतो विचारानुगतोऽस्मितानुगत इत्युपरिष्टात् प्रवेदयिष्यामः । सर्व्ववृत्तिनिरोधे त्वसम्प्रज्ञातः समाधिः ॥ १ ॥

स्थेमा सा चास्या स्थेमबहुलता सांसिद्धिका वा वक्ष्यमाण व्याधिस्त्याना द्यन्तराय जनितावा । एकाग्रमेकतानं । निरुद्धसकल वृत्तिकं संस्कार मात्रशेषं चित्तं निरुद्धं । तत्र क्षिप्तमूढयोः सत्यपि परस्परापेक्षयावृत्तिनिरोधे । पारम्पर्य्येणापि निःश्रेयसहेतुभावाऽभावात् । तदुपघातकत्वाच्च योगपक्षाद्दूरोत्सारितत्वमिति । न तयोर्योगत्वं निषिद्धं । विक्षिप्तस्य तु कादाचित्क सद्भूत विषय स्थेमशालिनः सम्भाव्येत योगत्व मिति निषेधति । तत्र विक्षिप्ते चेतसि समाधिः कादाचित्कः सद्भूत विषयस्य चित्तस्य स्थेमा न योगपक्षे वर्त्तते । कस्मात् यतस्तद्विपक्ष विक्षेपोपसर्जनीभूतः विपक्ष वर्गान्तर्गतस्य हि स्वरूप मेव दुर्लभं प्रागेव कार्य्य करणं । न खल दहनान्तर्गतं वीजं क्षितुरक्षणावस्थित मुप्तमप्यङ्कुराय कल्पत इतिभावः ।

यदि विक्षेपोपसर्जनीभूतः समाधिर्न योगः कस्तर्हि इत्यत आह यस्त्वेकाग्रे चेतसि इति । भूतमिति समारोपितमर्थं निवर्त्तयति । निद्रावृत्तिरपि स्वालम्बने तमसि भूते भवत्येकाग्रेत्यत उक्तम् । सदिति शोभनं नितान्ताविर्भूततत्त्वं तमःसमुद्रेकस्त्वशोभनस्तस्य क्लेशहेतुत्वादिति द्योतनं हि तत्त्वज्ञान मागमाद्वाऽनुमानाद्वा भवदपि परोक्ष रूपतया न साक्षात्कारवती नविद्यामुच्छिनत्ति ।

द्विचन्द्र दिङ्मोहादिष्वनुच्छेदकत्वादत आह । प्रेति । प्रशब्दोहि प्रकर्षं द्योतयन् साक्षात्कारं सूचयति । अविद्यामूलत्वादस्मितादीनां क्लेशानां विद्यायाश्च अविद्याच्छेदरूपत्वात् विद्योदये चाविद्या क्लेशसमुच्छेदो विरोधित्वात्

तस्य लक्षणाभिधित्सयेदं सूत्रं प्रवर्त्तते—

योगश्चित्तवृत्तिनिरोधः ॥ २ ॥

सर्व्वशब्दाग्रहणात् सम्प्रज्ञातोपि योगइत्याख्यायते ।

कारण विनाशाच्चेत्याह । चिणोतिचेति । अतएव कर्म्म रूपाणि बन्धनानि श्लथयति । कर्म्म चात्रापूर्व्वमभिमतं कार्य्ये कारण उपचारात् श्लथयति । स्वकार्य्याद वसादयति । वत्प्रतिहि सति मूले तद्विपाक इति किञ्च निरोधमभिमुख करोत्यभिमुखी करोति । स च संप्रज्ञातश्चतुःप्रकार इत्याह । सचेति । असंप्रज्ञातमाह सर्व्ववृत्तिभिः । रजस्तमोमयी किल प्रमाणादि वृत्तिः सात्विकीं वृत्तिमुपादाय संप्रज्ञाते निरुद्धा । असम्प्रज्ञाते तु सर्व्वासामेव निरोध इत्यर्थः । तदिह भूमिद्वये समाप्ता या मधुमत्यादयो भूमयस्ताः सर्व्वासासु विदितः सार्व्वभौम इति सिद्धं ॥१॥

द्वितीयं सूत्रमवतारति । तस्य लक्षणेति । तस्येति पूर्व्वसूत्रोपात्तं । द्विविधं योगं परामृषति । योगश्चित्तवृत्ति निरोधः । निरुद्धन्ते यस्मिन् प्रमाणादि वृत्तयोऽवस्थाविशेषे चित्तस्य सोवस्थाविशेषो योगः ।

ननु संप्रज्ञातस्य योगस्य व्यापकत्वात् अलक्षणमिद मनिरुद्धाहि तत्र सात्विकी चित्त वृत्ति रित्यत आह । सर्व्वशब्दाग्रहणादिति ॥ यदि सर्व्वचित्तवृत्तिनिरोध इत्युच्यते भवेदव्यापकं संप्रज्ञातस्य क्लेशकर्म्मविपाकाशय परिपन्थी चित्तवृत्तिनिरोधस्तु तमपि संगृह्णाति तत्रापि राजसतामसचित्तवृत्तिनिरोधात्तस्य च तद्भावादित्यर्थः । कुतः पुनरेकस्य चित्तस्य चिप्तादिभूमिसम्बन्धः । किमर्थं चैवमवस्य चित्तस्य वृत्तयोनिरोद्धव्या इत्याशङ्क्य प्रथमंतावदवस्थासम्बन्ध हेतुमुपन्यसति । चित्तं हीति । प्रख्याशीलत्वात् सत्वगुणं । प्रवृत्तिशीलत्वाद्रजोगुणं । स्थितिशीलत्वात्

चित्तं हि प्रख्याप्रवृत्तिस्थितिशीलत्वात् त्रिगुणम्। प्रख्यारूपं हि चित्तसत्वम्। रजस्तमोभ्यां संसृष्टम् ऐश्वर्य्यविषयं प्रियं भवति। तदेव तमसानुविद्धमधर्म्मा-

तमोगुणं। प्रख्याग्रहणमुपलक्षणार्थं तेनान्येपि सात्विकाः। प्रसादलाघवप्रीत्यादयः सूच्यन्ते प्रवृत्त्या च परितापशोकादयो राजसाः प्रवृत्तिविरोधी तमोवृत्तिधर्म्मः स्थितिः। स्थितिग्रहणाद्द गौरवावरणदैन्यादयोपलक्ष्यन्ते। एतदुक्तं भवति एकमपि चित्तं त्रिगुणनिर्म्मिततया गुणानाञ्च वैषम्येण परस्परविमर्दवैचित्र्या द्विचित्रपरिणामं सदनेकावस्थमुपपद्यत इति।

क्षिप्ताद्या एव चित्तस्य भूमिः यथासम्भवमवान्तरावस्थाभेदवती तां दर्शयति। प्रख्यारूपं हीति चित्तरूपेण परिणतं सत्वं चित्तसत्वं तदेवं प्रख्यारूपतया सत्वप्राधान्यं चित्तस्य दर्शितं तत्र चित्ते सत्वात् किञ्चिदूने रजस्तमसी यदा मिथः समे च भवतः तदैश्वर्य्यञ्च विषयाश्च शब्दादयस्तान्येवप्रियाणि यस्य तत्तथोक्तं सत्वप्राधान्यात् खलु चित्तं तत्त्वं प्रणिधित्सदपि तत्वस्य तमसापिहि तत्वादणिमा-द्यिकमेव तत्वमभिमन्यमानं तत्प्रणिधित्सति प्रणिधत्ते च क्षणं अथ रजसाक्षिप्य-माणं। तत्राप्यलब्धस्थिति तत् प्रियमात्रं भवति। शब्दादिषु पुनरस्य स्वरसवाही प्रेमाणि रूढ़ एव। तदनेन विक्षिप्तं चित्तमुक्तं क्षिप्तं दर्शयन् मूढ़मपि सूचयति। तदेवतमसेति। यदाहि तमो रजो विजित्य प्रसूतं। तदा चित्तसत्वावरकतमः समु-त्सारणेऽशक्तत्वात् रजस्तमस्थगितं चित्तमधर्म्माद्युपगच्छति अज्ञानञ्च विपर्य्ययज्ञानं मभावप्रत्ययालम्बनञ्च निद्राज्ञानमुक्तं। ततश्च मूढ़ावस्थापि सूचितेति। अनैश्वर्य्यं सर्व्वत्रेच्छाप्रतिघातः। अधर्म्मादिव्याप्तं चित्तं भवतीत्यर्थः। यदा तु तदेव चित्त-सत्वमाविर्भूतसत्वमपगततमःपटलं सरजस्कं भवति। तदा धर्म्मज्ञानवैराग्यैश्व-र्य्याण्युपगच्छतीत्याह प्रक्षीणेत्यादि। मोहस्तमस्तदेव चावरणं प्रकर्षेण क्षीणं यस्य

ज्ञानवैराग्यानैश्वर्य्योपगं भवति। तदेव प्रक्षीणमोहावरणं सर्व्वतः प्रद्योतमानमनुविद्धं रजोमात्रया धर्म्मज्ञानवैराग्य ऐश्वर्य्योपगं भवति तदेव रजोलेशमलापेतं स्वरूपप्रतिष्ठं सत्त्वपुरुषान्यताख्यातिमात्रं धर्म्ममेघध्यानोपगं भवति। तत्परं प्रसङ्ख्यानमित्याचक्षते ध्यायिनः। चितिशक्तिरपरिणामिन्यप्रतिसङ्क्रमा दर्शितविषया शुद्धा चानन्ता च सत्त्व-

त्त्वं तथोक्तं। अतएव सर्व्वतो विशेषाविशेषलिङ्गमात्राऽलिङ्गपुरुषेषु प्रद्योतमानं तथापि न धर्म्मायैश्वर्य्याय च कल्पते प्रवृत्त्यभावादित्यत आह। अनुविद्धं रजःमात्रया रजसः प्रवर्त्तकत्वादस्ति धर्म्मादिरित्यर्थः। तदनेन संप्रज्ञातसमाधिसम्पन्नयो मधुभूमिकप्रज्ञाज्योतिषोर्मध्यावमयो योगिनोश्चित्तसत्त्वं संगृहीतं संप्रत्यतिक्रान्तभावनीयस्य ध्यायिनश्चतुर्थस्य चित्तावस्थामाह। तदेव चित्तं रजोलेशान्मलादपेतं अत-एव स्वरूपप्रतिष्ठमभ्यासवैराग्यपुटपाकप्रवन्धविधुतरजस्तमो मनस्याह बुद्धिसत्त्वतप-नीयस्वरूपप्रतिष्ठस्य विषयेन्द्रियप्रत्याहृतस्य निवसिताधिकारतया च कार्य्यकारिणो विवेकख्यातिः परं कार्य्यमवशिष्यत इत्याह। सत्त्वपुरुषान्यताख्यातिमात्रं चित्तं धर्म्ममेघध्यानोपगं भवति। धर्म्ममेघस्य वक्ष्यते। अत्रैव योगिजनप्रसिद्धिमाह।

तदिति। सत्त्वपुरुषान्यताख्यातिमात्रं चित्तं धर्म्ममेघपर्य्यन्तं परं प्रसंख्यान-मिति आचक्षते ध्यायिनः चित्तसामानाधिकरण्यं च धर्म्मधर्म्मिणोरभेदविवक्षया द्रष्टव्यं। विवेकख्यातेर्हानहेतुं चितिशक्तेस्तोपदानहेतुं निरोधसमाधिमवतार-यितुं चितिशक्तेः साधुतामसाधुताञ्च विवेकख्यातेर्दर्शयति। चितिशक्तिरित्यादि सुखदुःखमोहात्मकत्वमशुद्धिः। सुखमोहावपि विवेकिनं दुःखाकुरुत। अतो दुःख-वद्धेयो तथाचातिसुन्दरमप्यन्तवत्तदुनोति। तेन तदपि हेयमेव विवेकिनः सेय-मविशुद्धिरन्तस्य। चिति शक्तौ पुरुषेस्य स इत्युक्तं शुद्धा चानन्ता चेति। ननु सुख-

गुणात्मिका चेयम्। अतो विपरीता। विवेकख्यातिरित्यत-स्तस्यां विरक्तं चित्तन्तामपि ख्यातिं निरुणद्धि। तदवस्थं चित्तं संस्कारोपगं भवति। स निर्बीजः समाधिः, न तत्र किञ्चित् सम्प्रज्ञायतइत्यसम्प्रज्ञातः द्विविधः स योगश्चित्त-वृत्तिनिरोध इति ॥ २ ॥

दुःखमोहात्मकशब्दादीनि यं चेतयमाना तदाकारापन्ना कथं विशुद्धा तदाकारपरि-ग्रहपरिवर्ज्जने च कुर्व्वती कथमनन्तेत्यत उक्तं।

दर्शितविषयेति। दर्शितो विषयः शब्दादि यस्यै सा तथोक्ता भवेदेतदेवं। यदि बुद्धिवच्चितिशक्तिर्विषयाकारतामापद्येत। किन्तु बुद्धिरेव विषयाकारेण परिणता सती अतदाकारायैचितिशक्तेर्विषयमादर्शयति ततः पुरुषस्थेत्यत इत्युच्यते। ननुविषयाकारां बुद्धिमनारूढ़ायाः चितिशक्तेः कथं विषयवेदनं विषयारोहे वा कथं न तदाकारापत्तेरिति। अतः उक्तं। अप्रतिसंक्रमेति। प्रतिसंक्रमः सञ्चारः सचिवेर्नास्तीत्यर्थः। स एव कुतोऽस्यां नास्तीत्यत उक्तं। अपरिणामिनीति। न चितेस्त्रिविधोऽपि धर्म्मलक्षणाऽवस्थालक्षणः। परिणामोऽस्ति येन क्रियारूपेण परि-णता सती बुद्धिसंयोगेन परिणमेत चितिशक्तिः असंक्रान्ताया अपि विषयसम्वेदन-मुपपादयिष्यते। तत्सिद्धं चितिशक्तिः शोभनेति विवेकख्यातिस्तु बुद्धिसत्वात्मिका अशोभनेत्युक्तं। अतश्चितिशक्तेर्विपरीतेति। यदा च विवेकख्यातिरपि हेया तदा कैव कथा वृत्त्यन्तराणां दोषबहुलानामिति भावः ततस्तद्धेतो र्नैरोधसमाधेरव-तारो युज्यते इत्याह। अतस्तस्यामिति। ज्ञानप्रसादमात्रेण हि परेण वैराग्येण विवेकख्यातिमपि निरुणद्धीत्यर्थः। अथ अनिरुद्धाऽशेषवृत्तिचित्तं कीदृशमित्यत-आह।

तदवस्थमित्यादि। स निरोधः अवस्था यस्य तत्तथोक्तं। निरोधस्य स्वरूप-

तदवस्थे चेतसि विषयाभावात् बुद्धिबोधात्मा पुरुषः किं स्वभावः ? इति—

## तदा द्रष्टुः स्वरूपेऽवस्थानम् ॥ ३ ॥

स्वरूपप्रतिष्ठा तदानीं चितिशक्तिर्यथा कैवल्ये व्युत्थानचित्ते तु सति तथापि भवन्ति न तथा ।

माह । स निर्वीज इति । क्लेशसहितः कर्माशयो जात्यायुर्भोगबीजं । तस्मान्निर्गत इति निर्वीजः अस्यैव योगिजनप्रसिद्धामन्वर्थसंज्ञामादर्शयति । न तवेति । उपसंहरति । द्विविधः संयोगश्चित्तवृत्तिनिरोध इति ॥ २ ॥

संप्रत्युत्तरसूत्रमवतारयंश्चोदयति । तदवस्थे चेतसीति । किमाक्षेपे तत्तदाकारपरिणतबुद्धिबोधात्मा त्वयं पुरुषः सदानुभूयते । ननु बुद्धिबोधरहितोऽतोऽस्य पुरुषस्य बुद्धिबोधस्वभावः सवितुरिव प्रकाशः न च संस्कारशेषे चेतसि सोऽस्ति न च स्वभावमपहाय भावो वर्त्तितुमर्हति इति भावः । स्यादेतत् संस्कारशेषामपि बुद्धिं कस्मात् पुरुषो न बुद्ध्यते इत्यत आह । विषयाभावादिति । न बुद्धिमात्रं पुरुषस्य विषयोऽपि तु पुरुषार्थवती बुद्धिः । विवेकख्यातिविषयभोगौ च पुरुषार्थौ तौ च निरुद्धावस्थायां नस्त इति सिद्धो विषयाभाव इत्यर्थः । सूत्रेण परिहरति तदाद्रष्टुः स्वरूपेवस्थानं । स्वरूप इत्यारोपितम् । शान्त घोर मूढ स्वरूपं निवर्त्तयात पुरुषस्यहिचैतन्यं स्वरूप मनौपाधिकम् । ननु बुद्धिबोधः शान्तादिरूप औपाधिकः हि सः स्फटिकस्येवस्वभाव स्वच्छधवलस्य जपाकुसुमसन्निधानोपाधिररुणिमा नचोपाधि निवृत्तावुपहित निवृत्ति रतिप्रसङ्गादितिभावः । स्वरूपस्य चाभेदेपि भेदं विकल्प्य अधिकरण भाव उक्त इति । अयमेवार्थोभाष्यकृता द्योत्यते ।

कथन्तर्हि दर्शितविषयत्वात—

वृत्तिसारूप्यमितरत्र ॥ ४ ॥

व्युत्थाने याः चित्तवृः तदविशिष्टवृत्तिः पुरुषः। तथाच सूत्रं "एकमेव दर्शनं" ख्यातिरेव दर्शनमिति। चित्तम्। अयस्कान्तमणिकल्पं सन्निधिमात्रोपकारि दृश्यत्वे न सम्भवति।

स्वरूप प्रतिष्ठेति। तदानीं निरोधावस्थायां न व्युत्थानावस्थायामिति भावः। स्यादेतत् व्युत्थानावस्थाया मप्रतिष्ठिता स्वरूपे चिति शक्ति निरोधावस्थायां प्रतितिष्ठन्ति परिणामिनी स्याद्व्युत्थाने वा स्वरूपप्रतिष्ठाने सति व्युत्थान निरोधयोरविशेष इत्यत आह। व्युत्थानचित्ते त्विति। न जातु कूटस्थनित्या चितिशक्तिः स्वरूपात्च्यवते। तेन यथा निरोधे तथैव व्युत्थानेपि। न खलु शुक्तिकायाः प्रमाण विपर्य्यय ज्ञानगोचरत्वेपि स्वरूपोदयौव्ययौ भवतः प्रतिपत्तातु तथाभूतमप्यतथात्वे नाभिमन्यते। निरोधसमाधिमपेक्ष्य सम्प्रज्ञातोपि व्युत्थानमेवेति ।। ३ ॥

सूत्रान्तरमवतारयितुं पृच्छति। कथन्तर्हि इति। यदि तथा भवन्तौ न तदा केन तर्हिप्रकारेण प्रकाशत इत्यर्थः॥ हेतुपद मध्याहृत्य सूत्रं पठति। दर्शित विषयत्वात्। वृत्तिसारूप्यमितरत्र। इतरत्र व्युत्थाने याश्चित्तवृत्तयः शान्त घोर मूढात्मा एवाविशिष्टा अभिन्नावृत्तयो यस्य पुरुषस्य सतथोक्तः सारूप्य मित्यत्र समव्द एकपर्य्यायः। एतदुक्तं भवति जपा कुसुम स्फटिकयोरिव बुद्धि पुरुषयोः सन्निधानादभेदग्रहे बुद्धि वृत्तीः पुरुषे समारोप्य शान्तोस्मि दुःखितोस्मि मूढोस्मीति अध्यवस्यति। यथा मलिने दर्पणतले प्रतिविम्बितं मुखं मलिनमारोप्य शोचत्यात्मानं मलिनोस्मीति। यद्यपि पुरुष समारोपोपिशब्दादि विज्ञानवत् बुद्धिवृत्तिः यद्यपि च प्राकृतत्वे नाचि-

पुरुषस्य स्वामिनः। तस्माच्चित्तवृत्तिबोधे पुरुषस्यानादि-सम्बन्धोहेतुः ॥४॥

द्रूपतयानुभाव्य स्तथापि बुद्धेः पुरुषत्वमापादयन् पुरुषवृत्तिरिवानुभव इवावभासते तथाचायमविर्य्ययोप्यात्मा विपर्य्ययवानिवाभोक्तापि भोक्तेव विवेकख्याति रहितोपि तत्सहित इवाविवेकख्यात्या प्रकाशते। एतच्च चितेरप्रतिसंक्रमाया सदाकारापत्तौ स्वबुद्धि संवेदनमित्यत्र। सत्वपुरुषयोरत्यन्तासङ्कीर्णयोः प्रत्यया विशेषोभोग इत्यत्र चोपपादयिष्यते। एतच्च मतान्तरेपि सिद्धमित्याह। तथाचेति पञ्चशिखाचार्य्यस्य सूत्रम्। एकमेव दर्शनमिति।

ननु कथमेकं दर्शनं यावता बुद्धेः शब्दादि विषया विवेक विषयाच वृत्तिः प्रकृततया जडत्वेनानुभाव्या दर्शनं ततोऽन्यत् पुरुषस्य चैतन्य मनुभवो दर्शन मित्यत आह ख्यातिरेव दर्शनमिति उदयव्ययधर्म्मिणीं वृत्तिं ख्याति लौकिकी मभिप्रेत्य तदुक्तमेकमेवेति चैतन्यन्तु पुरुषस्य स्वभावो न ख्यातिः। न तु न लोकप्रत्यक्षगोचरोपि त्वागमानुमानगोचर इत्यर्थः। तदनेन व्युत्थानावस्थायां मूलकारणमविद्यां दर्शयता तद्धेतुकसंयोगो भोगहेतुः। स्वस्वामिभावोपि सूचित इति। तमुपपादयन्नाह। चित्तं स्वं भवति। पुरुषस्य स्वामिन इति सम्बन्धः। ननु चित्त-जनितमुपकारं भजमानो हि चेतनश्चित्तस्येशिता। न चास्य तज्जनितोपकार-सम्भवस्तदसम्बन्धादनुपकार्य्यत्वात् तत्संयोगतदुकारभागित्वे परिणामप्रसङ्गादित्यत आह। अयस्कान्तमणिकल्पं सन्निधिमात्रोपकारिदृश्यत्वेनेति। न पुरुषसंयुक्तं चित्तमपितु तत्सन्निहितं सन्निधिश्च पुरुषस्य न देशतः कालतो वा तदसंयोगात् किन्तु योग्यता लक्षणोऽस्ति च पुरुषस्य भोक्तृशक्तिश्चित्तस्य भोग्यशक्तिः। तदुक्तं। दृश्यत्वेनेति। शब्दाद्याकारपरिणतस्य भोग्यत्वेनेत्यर्थः। भोगश्च यद्यपि शब्दाद्या-कारवृत्तिश्चित्तस्य धर्म्मस्तथापि। चित्तचैतन्ययोरभेदसमारोपादृत्तिसारूप्यात् पुरुष-

ताः पुनर्निरोद्धव्या बहुत्वे सति चित्तस्य—

वृत्तयः पञ्चतय्यः क्लिष्टाऽक्लिष्टाः ॥५॥

क्लेशहेतुकाः कर्म्माशयप्रचयक्षेत्रीभूताः क्लिष्टाः । ख्यातिविषया गुणाधिकारविरोधिन्योऽक्लिष्टाः क्लिष्टप्रवाह-पतिता अप्यक्लिष्टाः ॥ क्लिष्टच्छिद्रेष्वप्यक्लिष्टा भवन्ति । अक्लिष्टच्छिद्रेषु क्लिष्टा इति । तथा जातीयकाः संस्काराः वृत्तिभिरेव क्लिश्यन्ते संस्कारैश्च वृत्तय इति एवं वृत्तिसंस्कार चक्रमनिशमावर्त्तते तदेवम्भूतं चित्तमवसिताधिकारमात्म-कल्पेन व्यवतिष्ठते ॥





सित्युक्तं । तस्माच्चित्तेनासंयोगेऽपि तज्जनितोपकारभागिता पुरुषस्यापरिणामिता चेति सिद्धं । ननु स्वस्वामिसम्बन्धो भोगहेतुरविद्यानिमित्तोऽविद्या तु किन्निमित्ता न खलु निर्निमित्तं कार्य्यमुत्पद्यते । यथाहुः । स्वप्नादिवदविद्यायाः प्रवृत्तिः तस्य किं कृतेति शङ्कामुपसंहारव्याजेनोद्धरति । तस्मात् चित्तवृत्तिबोधे शान्तघोरमूढ़ा-कारचित्तवृत्त्युपभोगे अनाद्यविद्यानिमित्तत्वादनादिसंयोगः हेतुः अविद्यावासनयोश्च सन्तानो वीजाङ्कुरसन्तानवदनादिरिति भावः ॥ ४ ॥

स्यादेतत् पुरुषो हि भक्त्या उपदिश्यते । न च वृत्तिनिरोधो वृत्तीरविज्ञाय शक्यो । न च सहस्रेणापि पुरुषायुषै रणभिमाः कश्चित् परिगणयितुमसंख्याताश्च कथं निरोधव्या इत्याशङ्क्य तासामियत्ता स्वरूपप्रतिपादनपरं सूत्रमवतारयति ताः पुनर्निरोद्धव्या बहुत्वे सति चित्तस्य । वृत्तयःपञ्चतय्यः क्लिष्टाऽक्लिष्टाः । वृत्तिरूपोऽव-यव्येकः । तस्य प्रमाणादयोऽवयवा पञ्च ततस्तदवयवा पञ्चतय्यः पञ्चावयवा वृत्ति-र्भवति ताश्च वृत्तयश्चैत्र मैत्रादि चित्त-भेदात् वह्व इति वहुवचन मुपपन्नं एतदुक्तं

प्रलयं गच्छति इति। ताः क्लिष्टाश्च पञ्चधा वृत्तयः ॥५॥

प्रमाण विपर्य्यय विकल्प निद्रा स्मृतयः ॥६॥

तत्र। प्रत्यक्षानुमानागमाः प्रमाणानि ॥ ७ ॥

इन्द्रियप्रणालिकया चित्तस्य वाह्यवस्तूपरागात् तद्वि-
षयासामान्यविशेषात्मनोऽर्थस्य विशेषावधारणं प्रधाना-
वृत्तिः प्रत्यक्षं प्रमाणं फलमविशिष्टः पौरुषेयश्चित्तवृत्तिबोधः

भवति चैत्रीवा मैत्रीवा कश्चित्सर्व्वेषामेव तेषां वृत्तयः पञ्चतय्यः एवनाधिकाइति चि
त्तस्येतिचैक वचनं जात्यभिप्रायं चित्तनामिति तु द्रष्टव्यं तासामवान्तरविशेष मनु-
ष्ठानोपयोगिनं दर्शयति। क्लिष्टाऽक्लिष्टा इति। अक्लिष्टा उपादेयः क्लिष्टा निरो-
द्धव्यास्ता अपि परेण वैराग्येनेति। अस्य व्याख्यानम्। क्लेशहेतुका इति क्लेशा।
अस्मितादयो हेतवः प्रवृत्तिकारणं यासां वृत्तीनान्तास्तथोक्ताः। यद्वा पुरुषार्थप्रधा-
नस्य रजस्तमोमयीनां हि वृत्तिनां क्लेशकारित्वेन क्लेशयैव प्रवृत्तिः क्लेशक्लिष्टम्।
तदासामस्तीति क्लिष्टा इति। यत एव क्लेशोपार्ज्जनार्थममूषां प्रवृत्तीरतएव कर्म्माशय
प्रचय चेत्रीभूताः प्रमाणादिना खल्वयं प्रतिपत्तार्थमवसाय तत्र सक्तोद्विष्टो वा कर्म्मा-
शयमाचिनोतीति भवन्ति धर्म्माधर्म्म प्रचय प्रसव भूमयो वृत्तयः क्लिष्टा इतिह्यक्लिष्टा
व्याचष्टे। ख्यातिविषया इति। विधूतरजस्तमसो वुद्धिसत्वस्य प्रशान्त वाहिनः
प्रज्ञाप्रसादः ख्यातितया विषयिख्यातद्विषयं सत्वपुरुषविवेकमुपलक्षयति तेनसत्व
पुरुष विवक विषया यतो अतएव गुणाधिकार विरोधिन्यः कार्य्यारम्भं हि गुणा-
नामविकारो विवेकख्याति पर्य्यवसानञ्च तदिति चरिताधिकाराणां गुणानामधि-
कारं विरुन्धति इति अतस्ता अक्लिष्टाः प्रमाणप्रभृतयो वृत्तयः।

स्यादेतत् वीतरागजन्मादर्शनात् क्लिष्ट वृत्तय एव सर्व्वे प्राणभृतो न च क्लिष्ट
वृत्तप्रवाहे भवितुमर्हन्त्याक्लिष्टवृत्तयो। नचामूषां भावेपि कार्य्यकारिता विरोधि-
मध्यपातित्वात्। तस्मात् क्लिष्टानामक्लिष्टाभिर्निरोधस्तासां च वैराग्येण परेणेति

बुद्धेः प्रतिसंवेदी पुरुष इत्युपरिष्टात् उपपादयिष्यामः। अनुमेयस्य* तुल्यजातीयेभ्योव्यावृत्तः सम्बन्धोयस्तद्विषया सामान्यावधारणप्रधाना वृत्तिरनुमानम्। यथा देशान्तर प्राप्तेर्गतिमच्चन्द्रतारकं चैत्रवत् विन्ध्यश्चाप्राप्तिरगतिः आप्तेन

मनोरथ मात्रमित्यत आह। क्लिष्टप्रवाहेति। आगमानुमानाचार्य्योपदेश परिशीलन लब्धजन्मनो अभ्यासवैराग्ये क्लिष्टच्छिद्रमन्तरे तत्र पतिताः स्वयमक्लिष्टाएव यद्यपि क्लिष्टप्रवाहे पतिताः। न खलु शालग्रामे किरातशतशङ्कीर्णे प्रतिवसन्नपि ब्राह्मणः किराती भवति। अक्लिष्टच्छिद्रेष्विति निदर्शनम्! क्लिष्टान्तर्वर्त्तितया च क्लिष्टाभिरनभिभूता अक्लिष्टाः स्व संस्कार परिपाकक्रमेणक्लिष्टा एव तावदभि भवन्तीत्याह तथा जातीयका इति। अक्लिष्टाभिर्वृत्तिभिरक्लिष्टाः संस्कारा इत्यर्थः। तदिदं वृत्ति संस्कार चक्रमनिश मावर्त्तते। आनिरोध समाधेः तदेवं भूतञ्चित्तं निरोधावस्थं संस्कारशेषं भूत्वात्मकल्पेनावतिष्ठत इत्यापाततः। प्रलयं वा गच्छतीति परमार्थतः। पिण्डीकृत्य सूत्रार्थमाह। ता इति पञ्चधेत्यर्थः। कथन न तु शब्द वृत्ति व्याख्यानं तयप्रकारेऽस्मरणात्। ताः स्वसंज्ञाभिरुद्दिशति। प्रमाणविपर्य्ययविकल्पनिद्रास्मृतयः। निर्द्देशे यथा वचनं विग्रहश्चार्थे द्वन्द्वसमास इतरेतर योगः। यथाऽनित्याऽशुचिदुःखानात्मसु नित्यशुचि सुखात्मख्यातिरविद्ये तुक्तेपि न दिग्मोहानात चक्रादि विभ्रमा व्युदस्यन्ते। एवमिहापि प्र*णाद्यभिधानेपि वृत्त्यन्तरसद्भावशङ्कानव्युदस्येति। तन्निरासाय वक्तव्यं पञ्चतय्य इति एतावत्य एव वृत्तयोऽन्यापराः सन्तीति दर्शितं भवति।

तत्र प्रमाणवृत्तिं विभजन समान्य लक्षणमाह। प्रत्यक्षानुमानागमा प्रमाणानि। अनधिगत तत्त्वबोधः पौरुषेयो व्यवहारहेतुः प्रमातत् करणं प्रमाणम्। विभाग वचनं न्यूनाधिकसङ्ख्याव्यवच्छेदार्थम्। तत्र सकल प्रमाण मूलत्वात् प्रथमतः प्रत्यक्षं लक्षयति। इन्द्रियेति अर्थस्येति समारोपितत्वं निषेधयति। तद्विषयेति। वाह्यगोचरतया ज्ञानाकारगोचरत्वं चित्तवृत्तिनो ज्ञानाकारस्य वाह्ये न सम्बन्धं दर्शयति। वाह्यवस्तूपरागादिति। व्यवहितस्य तदुपरागे हेतुमाह।

दृष्टोऽनुमितोवार्थः परत्र स्वबोधसंक्रान्तये शब्देनोपदिश्यते। शब्दात्तदर्थविषयावृत्तिः श्रोतुरागमः यस्यागमस्याश्रद्धेयार्थो वक्ता न दृष्टानुमितार्थः स आगमः प्लवते। मूलवक्तरि तु दृष्टानुमितार्थे निर्विप्लवः स्यात् ॥ ७ ॥

इन्द्रियप्रणालिकयेति सामान्यमात्रमर्थस् इत्येके। विशेषा एव इत्यन्ये। सामान्य विशेष तद्वत्ता इत्यपरे वादिनः प्रतिपन्नास्तन्निराशायाह। सामान्यविशेषात्मन् इति न तद्वत्ता किन्तु तादात्म्यमर्थस्य। एतच्चैकान्तानभ्युपगम इत्यत्र प्रतिपादयिष्यते। अनुमानागमविषयात् प्रत्यक्ष विषयं व्यवच्छिनत्ति विशेषावधारण प्रधानेति। यद्यपि सामान्यमपि प्रत्यक्षे प्रतिभासते। तथापि विशेषं प्रत्युपसर्ज्जनीभूतम् इत्यर्थः एतच्च साक्षात्कारीपलक्षणपरम्। विवेकख्यातिरपि लक्षिता भवति। फलविप्रतिपत्तिं निराकरोति। फलं पौरुषेयश्चित्तवृत्तिः बोध इति। ननु पुरुष वर्त्ती बोध कथं चित्तगताया वृत्तेः फलं न हि खदिर गोचर व्यापारेण परशुन-पलाशे छिदा क्रियते इत्यतआह। अविशिष्ट इति। न हि पुरुषगती बोधोजन्यते अपि तु चैतन्यमेव बुद्धिदर्पन प्रतिविम्बितं बुद्धिवृत्त्या अर्थाकारतया तदाकारता मापद्यमानं फलम्। तच्च तथाभूतं बुद्धेरविशिष्टं बुद्ध्यात्मक वृत्तिश्च वृत्तिश्च बुद्ध्यात्मिकेति समानाधिकरण्याद्युक्तः प्रमाण फलभाव इत्यर्थः। एतच्चोपपादयिष्याम इत्याह। प्रतिसंवेदीति। प्रत्यक्षानन्तरम्। प्रवृत्त्यादि लिङ्गक श्रोतु बुद्ध्यनुमान प्रभवसम्बन्ध दर्शन समुत्थतयागमस्यानुमानजन्यत्वादनुमितस्य चागमेनान्वाख्यानादागमात् प्रागनुमानं लक्षयति अनुमेयस्येति। जिज्ञासित धर्म्म-विशिष्टो धर्म्म्यनुमेयस्तस्य तुल्यजातीयाः साध्यधर्म्म सामान्येन समानार्थः सपक्षास्तेष्वनुवृत्तत्वनेन विरुद्धत्वमसाधारणत्वञ्च साधनधर्म्मस्य निराकरोति। भिन्नजातीया असपक्षास्तेच सपक्षादन्ये तद्विरुद्धास्तदभाववन्तश्च तेभ्योव्यावृत्तस्तदनेन साधारणानैकान्तिकत्व मपाकरोति संवध्यत इति सम्बन्धो लिङ्गमनेन पक्षधर्म्मतां दर्शयन्नसिद्धतां निवारयति तद्विषया तन्निवन्धना षिञ् वन्धन इत्यस्माद्विषयपद व्युत्पत्तेः सामान्यावधारणेति। प्रत्यक्ष विषयात् व्यवच्छिनत्ति सम्बन्ध संवेदनाधीन जन्मान-

**विपर्य्ययोमिथ्याज्ञानमतद्रूपप्रतिष्ठम्॥ ८॥**

स कस्मान्नप्रमाणं। यतः प्रमाणेन बाध्यते भूतार्थ विषयत्वात्प्रमाणस्य। तत्र प्रमाणेन बाधनमप्रमाणस्य दृष्टं।

मानं विशेषेषु सम्बन्ध ग्रहणाभावेन। सामान्यमेव सुकरसम्बन्धग्रहणं गोचरयतीति उदाहरणमाह।

यथेति। चोदेत्यर्थो विद्धीगतिर्यतस्तस्मात् तस्याऽप्राप्तिरतो गतिनिवृत्ति देशान्तरप्राप्तेः गतिमच्चन्द्रतारकं चैत्रवदिति सिद्धं। आगमस्य वृत्तेः लक्षणमाह। आप्तेनेति। तत्वदर्शन कारुण्य करण पाटवाभिः सम्बन्ध आप्तस्तया सह वर्त्तत इत्याप्तस्तेन दृष्टोनुमितोवार्थः। अतस्य पृथगनुपादानं तस्य दृष्टानुमित मूलत्वेन ताभ्यामेव चरितार्थत्वात् आप्तचित्तवर्त्ति ज्ञानसदृशस्य ज्ञानस्य श्रोतृचित्ते समुत्पादः स्वबोध संक्रान्तिस्तस्ये अर्थउपदिश्यते श्रोतृहिताहित प्राप्तिपरिहारोपायतया प्रज्ञाप्यते शेषं सुगम्। यस्यागमस्या अद्वेयार्थोवक्ता यथा यामेव दशदाभिमानि षट् पूपा भविष्यन्ति इति नदृष्टानुमितार्थो यथा चैत्यं वन्देत स्वर्गकामइति। नन्वेवं मन्वादिनामप्यागमः प्लवते। न हि तेपि दृष्टानुमितार्था यथाहः। यः कश्चित कस्यश्चिद्धर्म्मो मनुना परिकीर्त्तितः। स सर्वोवाभिहितो वेदे सर्व्वज्ञानमयो हि सः। इत्यत आहः। मूलवक्तरित्विति। मूलवक्ता हि तत्रेश्वरो दृष्टानुमितार्थः। विपर्य्ययोमिथ्याज्ञानमतद्रूपप्रतिष्ठं। विपर्य्यय इति लक्ष्य निर्द्देशो मिथ्याज्ञानमित्यादि लक्षणं यंज्ञानं प्रतिभासिरूपं तद्रूपा प्रतिष्टमेवाह अतद्रूपप्रतिष्ठं यथा अश्याद्वमीजोति। अतः संशयोपि गृहीतः। एतावांस्तु विशेषः। तत्र ज्ञानरूढ़े वा प्रतिष्ठितादि चन्द्रादिस्तु बाधज्ञानेन। नन्वेवं विकल्पोपि तद्रूपा प्रतिष्ठानाइचारतो विपर्य्ययः प्रसज्येतेत्यत आह। मिथ्याज्ञानमिति। अनेन हि सर्व्वजनीनाऽनुभव सिद्धो बाध उक्तः सचास्ति विपर्य्यये न तु विकल्पे पेन व्यवहारात् पण्डितरूपाणा मेव तु विचारयतां तत्र बाध बुद्धिरिति चोदयति। स कस्मान्न प्रमाणं नोत्तरेणोपजात विरोधिना ज्ञानेन पूर्व्वं बाधनीयमपि तु पूर्व्वेणैव प्रथमसुपजातेनानुपजात विरोधिना परमिति भावः परिहरति। यतः प्रमाणेनेति।

तद्यथा द्विचन्द्रदर्शनं सद्विषयेनैकचन्द्रदर्शनेन बाध्यते इति सेयं पञ्चपर्व्वा भवत्यऽविद्याऽस्मितारागद्वेषाऽभिनिवेशा क्लेशाः इति अतएव स्वसंज्ञाभिस्तमोमोहो महामोहस्तामिस्रोऽन्धतामिस्र इति एते चित्तमलप्रसङ्गेनाभिधास्यन्ते ॥ ८ ॥

## शब्दज्ञानानुपाती वस्तुशून्योविकल्पः ॥९॥

स न प्रमाणोपारोही न विपर्य्ययोपारोही वस्तुशून्यत्वेपि शब्दज्ञानमाहात्म्य निबन्धनो व्यवहारो दृश्यते। तद्यथा चैतन्यं पुरुषस्य स्वरूप मिति यदा चितिरेव



यत्र हि पूर्व्वापेक्षा परोत्पत्ति स्तत्रैवं इह तु स्वकारणादन्योन्यानपेक्षे ज्ञाने जायते तेनोत्तरस्य पूर्व्वमनुप मर्द्योदय मनासादयत स्तदपबाधात्मैवोदयो न तु पूर्व्वस्योत्तर बाधात्मा तस्य तदानी मप्रसक्ते स्तस्मादनुपजात विरोधिता बाध्यत्वे हेतुरुपजातविरोधिता च बाधकत्वे तस्माद्भूतार्थ विषयत्वात् प्रमाणे नाप्रमाणस्य बाधनं सिद्धं। उदाहरणमाह।

तत्र प्रमाणेति। अस्य कुत्सितत्वं हानाय दर्शयति। सेयं पञ्चेति। अविद्या सामान्यमविद्याऽस्मितादिषु पञ्चसु पर्व्वस्वित्यर्थः। अव्यक्त महदहङ्कार पञ्च तन्मात्रे ष्वष्टस्वनात्मस्वात्म बुद्धिरविद्या तमः एवं योगिनामष्टस्वनिमादिकेष्वैश्वर्य्येष्वश्रेयःसु श्रेयो बुद्धिरष्टविधो मोहः पूर्व्वस्माज्जघन्यः स चाऽस्मितीच्यते। तथा योगिनाष्टविधं ऐश्वर्य्यमुपादाय सिद्धीभूत्वा दृष्टानुश्रविकान शब्दादीन् दशविषयान् भोक्ष्य इत्येव मात्मिका प्रतिपत्तिर्महामोहो रागः एवमेतेनैवाभिसन्धिना प्रवर्त्तमानस्य केनचित् प्रतिबद्धत्वादनिमादीनामनुत्पत्तौ तन्निबन्धनस्य दृष्टानुश्रविक विषयोपभोगस्यासिद्धेः प्रतिबन्धक विषयः क्रोधः सतामिस्राख्योद्वेषः। एवमणिमादि गुण सम्पत्तौ दृष्टानुश्रविक विषय प्रत्युपस्थाने च कल्पान्ते सर्व्वमेतत्तत्यं च्यतीति

पुरुषः तदा किमत्र केन व्यपदिश्यते भवति च व्यपदेशे वृत्तिः यथा चैतस्य गौरिति। यथा प्रतिषिद्धवस्तुधर्म्मा निष्क्रियः पुरुषः तिष्ठति वाणः स्थास्यति स्थित इति गतिनिवृत्तौ धात्वर्थमात्रं गम्यते॥ तथानुत्पत्तिधर्म्मा पुरुष इति उत्पत्तिधर्म्मस्याभावमात्रमवगम्यते न पुरुषान्वयी धर्म्मः तस्माद्विकल्पितः स धर्म्मस्तेन चास्ति व्यवहार इति ॥ ९॥

यस्मासः सोभिनिवेशोऽन्धतामिस्रः। तदुक्तं। भेदस्तमसोऽष्टविधो मोहस्य च दशविधो महामोहः तामिस्रोऽष्टादशधा तथा भवत्यन्धतामिस्र इति। शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः। ननु शब्दज्ञानानुपाती चेदागमप्रमाणान्तर्गतो विकल्पः प्रसज्येत निर्व्वस्तुकत्वे वा विपर्य्ययः स्यादित्यत आह। सन्नेति। न प्रमाण विपर्य्ययान्तगतः कस्माद् यतो वस्तुशून्यत्वेपीति प्रमाणान्तर्गतं निषेधयति। शब्द ज्ञानमाहात्म्यनिबन्धन इति। विपर्य्ययान्तर्गतिं। तदुक्तं भवति क्वचिदभेदे भेदमारोपयति। क्वचित् पुनर्भिन्नानामभेदं ततो भेदस्याभेदस्य च वस्तुतोऽभावात् तदाभासो विकल्पो न प्रमाणं नापि विपर्य्ययो व्यवहारा विसम्वादादिति शास्त्रप्रसिद्धमुदाहरणमाह। तद्यथेति। किं विशेष्यं केन व्यपदिष्यते विशेष्यतेनाभेदे विशेष्य विशेषण भावो न हि गवा गौर्विशेष्यते। किन्तु भिन्नेन चैवेण तदिदमाह। भवति च व्यपदेशे वृत्तिः। व्यपदेश्य व्यपदेशकयो र्भावो व्यपदेशः विशेषण विशेष्य भाव इति यावत्। तस्मिन् वृत्तिर्वाक्यस्य यथा चवस्य गौरिति। शास्त्रीयमेवोदाहरणान्तरं समुच्चिनोति। तथेति। प्रतिषिद्ध वस्तुनः पृथिव्यादेः धर्म्मः परिस्पन्दो यस्य स तथोक्तः कोसौ निष्क्रिय पुरुषः। न खलु साङ्ख्यीये राद्धान्तेऽभावो नाम कश्चिदस्ति वस्तुधर्म्मो येन पुरुषो विशेष्यतेत्यर्थः। क्वचित्पाठ प्रतिषिद्धा वस्तु धर्म्मा इति तस्यार्थः। प्रतिषेध व्याप्ता प्रतिषिद्धा। न वस्तु धर्म्माणां तद्वत्ता भावा भावयोरसम्बन्धादय च तथा प्रतीतिरिति लौकिक-

अभावप्रत्ययालम्बना वृत्तिर्निद्रा ॥ १० ॥

सा च सम्प्रबोधे प्रत्यवमर्शात् प्रत्ययविशेषः कथं सुखमहमस्वाप्सं प्रसन्नं मे मनः प्रज्ञां मे विशारदीकरोति। दुःखमहमस्वाप्सं स्त्यानं मे मनो भ्रमत्यनवस्थितं। गाढ़ं मूढ़ोऽहमस्वाप्सं गुरूणि मे गात्राणि क्लान्तं मे चित्तमलसं मुषितमिव तिष्ठतीति। स खल्वयं प्रबुद्धस्य प्रत्यवमर्शो न स्यात् असति प्रत्ययानुभवे तदाश्रिताः स्मृतयश्च तद्विषया न स्युः। तस्मात् प्रत्ययविशेषो निद्रा। सा च समाधावितरप्रत्ययवन्निरोद्धव्येति ॥ १० ॥



मुदाहरणमाह। तिष्ठतिवाणइति। यथा हि पठति भिनत्तीत्यत्र पूर्व्वापरीभूतयानस्थान क्रियया वाणाच्छिन्नया वाणस्य व्यपदेश इत्यत आह। गतिनिवृत्तौ धात्वर्थमात्रं गम्यते। गत्तिनिवृत्तिरेव तावत् कल्पिता तस्या अपि भाव रूपत्वं। तत्रापि पूर्व्वापरीभाव इत्यहो कल्पना परंपरेत्यर्थः। अभाव कल्पितो भावइव चानुगतइव च सर्व्वं पुरुषेषु गम्यते न पुरुषो व्यतिरिक्तो धर्म्मः कश्चिदित्युदाहरणान्तरमाह। तथानुत्पत्तिधर्म्मेति। प्रमाण विपर्य्ययाभ्यामन्या न विकल्प वृत्तिरिति वादिनो बहवः प्रतिपेदिरे तत्प्रतिबोधनायोदाहरण प्रपञ्च इति मन्तव्यं। अभावप्रत्ययालम्बना वृत्तिर्निद्रा। अधिकृतं हि वृत्तिपदमनुवादकं प्रमाणे विपर्य्यय विकल्प स्मृतीनां वृत्तित्वं प्रति परीक्षकानामवि प्रतिपत्तेरतस्तदनुद्यते विशेष विधानाय निद्रायान्तु वृत्तित्वे परीक्षकाणामविप्रतिपत्तेरिति वृत्तित्वं विधेयं। न च प्रकृति मनुवादकं विधानाय कल्पत इति पुनर्वृत्ति ग्रहणं जाग्रत् स्वप्नवृत्तीनामभाव स्तस्य प्रत्यय कारणं बुद्धिसत्वाच्छादकं तमस्तदेवालम्बनं विषयो यस्याः सा तथोक्ता वृत्तिर्निद्रा बुद्धिसत्वे हि त्रिगुणे यदा सत्वरजसी अभिभूय समस्त कारणावरकमाविरस्ति तमस्तदा बुद्धेर्विषयाकार परिणामाभावादुद्भूत तमोमयीं

## अनुभूतविषयाऽसंप्रमोषः स्मृतिः ॥ ११ ॥

किं प्रत्ययस्य चित्तं स्मरति। आहोस्वित् विषयस्येति। ग्राह्योपरक्तः प्रत्ययो ग्राह्यग्रहणोभयाकारनिर्भासः। तथा जातीयकं संस्कारमारभते स संस्कारः स्वव्यञ्जका-

बुद्धिमवबुध्यमानः पुरुषः सुषुप्तोन्तः संज्ञ इत्युच्यते। कस्मात्पुन निरुद्ध कैवल्ययो-रिव वृत्त्यभाव एव न निद्रेत्यत आह। सा च सम्प्रबोधे प्रत्यवमर्शात्सोपपत्तिकात् स्मरणात्प्रत्यय विशेषः। कथं यदाहि सत्व सचिवन्तम आविरस्ति तदेदृशः प्रत्यव-मर्शः सुप्तोत्थितस्य भवति। सुखमहमस्वाप्सम्प्रसन्नं मनः प्रज्ञां मे विशारदी करोति स्वच्छीकरोति इति यदातु रजः सचिवन्तमः आविरस्ति तदेदृशः प्रत्यवमर्श इत्याह। दुःखमहमस्वाप्सं स्त्यानं अकर्म्मण्यं मे मनः कस्मात् यतो भ्रमत्यनवस्थितं। नितान्ताभिभूतरजः सत्वे तमः समुल्लासे स्वापे प्रबुद्धस्य प्रत्यवमर्शमाह। गाढ़ं मूढ़ोऽहमस्वाप्सं गुरुणि मे गात्राणि क्लान्तं मे चित्त मलसम्मुषितमिव तिष्ठतीति। साध्य व्यतिरेके हेतु व्यतिरेकमाह। स खल्वयमिति। प्रबुद्धस्य प्रबुद्धमात्यस्य तदा-श्रितास्येति बोधकाले प्रत्ययानुवृत्त्यभावे कारणानुभव इत्यर्थः ननु प्रमाणादयो व्युत्थानचित्ताधिकरणा निरुध्यन्तां समाधिप्रतिपक्षत्वान्निद्रायास्त्वेकाग्रवृत्ति तुल्यायाः कथं समाधि प्रतिपक्षतेत्यत आह। स च समाधिरिति। एकाग्रतुल्यापि तातसत्वेन निद्रा सबीज निर्वीज समाधि प्रतिपक्ष इति सापि निरोद्धव्येत्यर्थः ॥ १० ॥

अनुभूत विषयाऽसम्प्रमोषः स्मृतिः। प्रमाणादिभिरनुभूते विषये योऽसम्प्रमोषः अस्तेयः सा स्मृतिः संस्कारमात्र जन्यस्य हि ज्ञानस्य संस्कार कारणानुभाव भाषितो विषय आत्मीयस्तदधिक विषयपरिग्रहस्तु सम्प्रमोषः स्तेयः कस्मात्सादृश्यात्। मुषस्तेय इत्यस्मात्सम्प्रमोषपदव्युत्पत्तेः। एतदुक्तं भवति। सर्व्वे प्रमाणादयो न धिगतमर्थं सामान्यतः प्रकारतो वाधिगमयन्ति स्मृतिः। पुन र्न पूर्व्वानुभव मर्य्यादामतिक्रामति तद्विषयातदूनविषया वा न तु तदधिक विषया सेयं वृत्त्यन्तराद्विशेषः स्मृतेरिति। विमृषति किंप्रत्ययस्येति ग्राह्य प्रवणत्वात् अनुभवस्य

ज्ञानं तदाकारामेव ग्राह्यग्रहणोभयात्मिकां स्मृतिञ्जनयति । तत्र ग्रहणाकारपूर्व्वा बुद्धिः ग्राह्याकारपूर्व्वा स्मृतिः । सा च द्वयी भावितस्मर्त्तव्या चाभावितस्मर्त्तव्या च । स्वप्ने भावितस्मर्त्तव्या । जाग्रत्समये त्वभावितस्मर्त्तव्येति । सर्व्वाः स्मृतयः प्रमाणविपर्य्ययविकल्पनिद्रास्मृतीनामनुभावात् प्रभवन्ति । सर्व्वाश्चैता वृत्तयः सुखदुःखमोहात्मिकाः सुखदुःखमोहाश्च क्लेशेषु व्याख्येयाः सुखानुशयी रागः दुःखानुशयी द्वेषः मोहः पुनरविद्येति एताः सर्व्वा वृत्तयो निरोद्धव्याः आसां निरोधे सम्प्रज्ञातो वा समाधिर्भवति । असम्प्रज्ञातो वेति ॥ ११ ॥




स्वानुभवाभावात्तज्जः संस्कारो ग्राह्यमेव स्मारयतीति । प्रतिभाति अनुभव भाव जनितत्वाच्चानुभवमेवेति विस्पष्टोऽपपत्तित उभय स्मरणमवधारयति । ग्राह्य-प्रवण तया ग्राह्योपरक्तः परमार्थतस्तु ग्राह्य ग्रहणे एव उभयं तयोराकारं स्वरूपं निर्भासयति प्रकाशयति । स्वव्यञ्जकं कारण मञ्जनमाकारो यस्य स तथोक्तः । स्वकारणाकार इत्यर्थः व्यञ्जकमुद्बोधकं तेनाञ्जनं फणाभिमुखीकरणं यस्येति वेत्यर्थः । ननु यदि कारण विचारेण बुद्धि स्मरणयोः सारूप्यं कस्तर्हि भेद इत्यत आह । तत्र ग्रहणेति । ग्रहणमुपादनं न च गृहीतस्योपादानं सम्भवति तदनेनानधिगत बोधनं बुद्धिरित्युक्तं ग्रहणाकारो ग्रहणरूपं पूर्व्वं प्रधानं यस्याः सा तथोक्ता धिकल्पित स्वायम् अभेदेपि गुण प्रधानभाव इति ग्राह्याकारः पूर्व्वः प्रथमो यस्याः सातथोक्ता इदमेवच ग्राह्याकारस्य ग्राह्यस्य पूर्व्वत्वं यद्वृत्त्यन्तर विषयीकृतत्वमर्थस्य तदनेन वृत्त्यन्तरविषयीकृत गोचरा स्मृतिरित्युक्तं भवति सोयमसं प्रमोष इति । ननु अस्मिन्स्मृतेरपि संप्रमोषः दर्शयति हि पित्रादेरतीतस्य देशकालान्तरानुभूत-स्यानुभूतचर देशकालान्तर सम्बन्धं स्वप्न इत्यत आह । सचाद्वयोति भावित:

**अभ्यासवैराग्याभ्यां तन्निरोधः ॥ १२ ॥**

अथासां निरोधे क उपाय इति—चित्त नदीनामी-भयतोवाहिनी वहति कल्याणाय । वहति पापाय च । या तु कैवल्यप्राग्भाराविवेकविषय निम्ना सा कल्याण-वहा । संसारप्राग्भाराऽविवेकविषयनिम्ना पापवहा. तत्र वैराग्येन विषयस्रोतःखिलो क्रियते विवेकदर्शनाभ्यासेन विवेकस्रोत उद्घाटाते इत्युभयाधीनश्चित्तवृत्तिनिरोधः॥१२॥

**तत्र स्थितौ यत्नोऽभ्यासः ॥१३॥**

चित्तस्यावृत्तिकस्य प्रशान्तवाहिता स्थितिः । तदर्थः प्रयत्नः वीर्य्यमुत्साहः तत्संपिपादयिषया तत्साधनानुष्ठान-मभ्यासः ॥ १३ ॥

कल्पितः स्मर्त्तव्योयया सा तयोक्ता। अभावितोऽकल्पितः पारमार्थिक इति यावत् । नेयं स्मृतिरपितु विपर्य्यतस्तल्लक्षणीयपन्नत्वात् स्मृत्याभासतया तु स्मृति-रुक्ता प्रमाणाभासमिव प्रमाणमिति भावः । कस्मात् पुनरन्ते स्मृतेरुपन्यास इत्यत आह । सर्व्वाः स्मृतय इति अनुभवः प्राप्तिः प्राप्तिपूर्व्वा वृत्तिः स्मृतिस्ततः स्मृतीनामुपजन इत्यर्थः ननु ये पुरुषं क्लिश्नन्ति तेऽनिरोद्धव्याः प्रेक्षावता क्लेशाश्च तथा न च वृत्तयः तत् किमर्थमासां निरोधः इत्यत आह। सर्व्वाश्चैता इति सुगमम् ॥ ११॥

निरोधोपायं पृच्छति अथेति सूत्रेणोत्तरमाह। अभ्यास वैराग्याभ्यां तन्निरोधः। अभ्यासवैराग्ययोर्निरोधे जनितव्ये आन्तर व्यापार भेदेन समुच्चयो न तु विकल्प इत्याह। चित्त नदीति। प्राग्भारः प्रबन्धः निम्नताऽवाधतति यावत् ॥१२॥

**स तु दीर्घकालनैरन्तर्यसत्कारासेवितो दृढभूमिः ॥१४**

दीर्घकालासेवितः निरन्तरासेवितः तपसा ब्रह्मचर्येण विद्यया श्रद्धया च संपादितः सत्कारवान् दृढभूमिर्भवति । व्युत्थानसंस्कारेण द्रागित्येवानभिभूतविषय इत्यर्थः ॥ १४ ॥

**दृष्टानुश्रविकविषयवितृष्णस्य वशीकारसंज्ञा वैराग्यम् ॥१५॥**

स्त्रियोऽन्नपानमैश्वर्यमिति दृष्टविषयवितृष्णस्य स्वर्ग-



अत्राभ्यासस्य स्वरूप प्रयोजनाभ्यां लक्षणमाह । तत्र स्थितौ यत्नोऽभ्यासः । तद्व्याचष्टे चित्तस्यावृत्तिकस्य राजसतामस वृत्तिरहितस्य प्रशान्त वाहिता विमलता सात्विक वृत्तिवाहितैकाग्रता स्थितिः तदर्थं इति स्थिताविति निमित्त सप्तमी व्याख्याता । यथा चर्मणि द्वीपिनं हन्तीति प्रयत्नमेव पर्यायाभ्यां विशदयति वीर्य्यमुत्साह इति तस्येच्छा योनितामाह । तत् संपिपादयिषया तदिति स्थितिं परामृशति । प्रयत्नस्य विषयमाह । तत्साधनेति स्थितिसाधनान्यन्तरङ्गवहिरङ्गानि यम नियमादीनि धानगोचरः कर्तव्यापारो न फलगोचर इति ॥ १३ ॥

ननु व्युत्थान संस्कारेणानादि परिपन्थिना प्रतिवद्धोऽभ्यासः कथं स्थित्यै कल्पत इत्यत आह । स तु दीर्घकाल नैरन्तर्य्य सत्कारासेवितो दृढभूमिः सोयमभ्यासो विशेषण एन सम्पन्नः सन्दृढावस्थो न सहसा व्युत्थान संस्कारैरभिभूत स्थितिरूपविषयो भवति यदि पुनरेवं भूतमप्यभ्यासं कृत्वोपरमेत ततः कालपरिवासेनाभिभवेत् तस्मान्नोपरन्तव्यमितिभावः ॥ १४ ॥

वैराग्यमाह । दृष्टानुश्रविक विषयवितृष्णस्य वशीकार संज्ञा वैराग्यं ।

वैदेहप्रकृतिलयत्वप्राप्तानुश्रविकविषये वितृष्णस्य दिव्यादिव्यविषयसंयोगेऽपि चित्तस्य विषयदोषदर्शिनः प्रसंख्यानबलादनाभोगात्मिका हेयोपादेयशून्या वशीकारसंज्ञा वैराग्यम् ॥ १५ ॥

तत्परं पुरुषख्यातेर्गुणवैतृष्ण्यम् ॥ १६ ॥

दृष्टानुश्रविकविषयदोषदर्शी विरक्तः पुरुषदर्शनाभ्यासात्तच्छुद्धिप्रविवेकाप्यायितबुद्धिर्गुणेभ्यो व्यक्ताव्यक्तधर्मकेभ्यो विरक्त इति तत् द्वयं वैराग्यम्। तत्र यदुत्तरं तत् ज्ञानप्रसादमात्रं यस्योदये प्रत्युदितख्यातिरेवं मन्यते प्राप्तं

चेतनाचेतनेषु दृष्टविषयेषु वितृष्णतामाह स्त्रिय इति ऐश्वर्य्यमाधिपत्यं। अनुश्रवो वेद स्ततोऽधिगता आनुश्रविकाः स्वर्गादयः तत्रापि वैतृष्ण्यमाह स्वर्गेति देहरहिता विदेहाः करणेषु लीनाः तेषां भावो वैदेह्यं अन्ये तु प्रकृतिमेवात्मान मभिमन्यमानाः प्रकृत्युपासकाः प्रकृतौ साधिकारायामेव लीना स्तेषां भावः प्रकृतिलयत्वं। तत्प्राप्तिविषये वितृष्णस्य आनुश्रविक विषये वितृष्णो हि स्वर्गादि प्राप्तिविषये वितृष्ण उच्यते। ननु यदि वैतृष्ण्यमात्रं वैराग्यं हन्तविषयाप्राप्तावपि तदस्तीति वैराग्यं स्यादित्यत आह। दिव्यादिव्येति। न वैतृष्ण्यमात्रं वैराग्यं अपितु दिव्यादिव्यविषय संप्रयोगेऽपि चित्तस्य अनाभोगात्मिका ॥ १५ ॥

तामेव स्पष्टयति हेयोपादेय शून्या सङ्गदोषरहितायापेक्षा बुद्धि वशीकार संज्ञा। कुतः पुनरियमित्यत आह। प्रसङ्ख्यानबलादिति। तापत्रयपरीतता विषयाणां दोष तत्परिभावनया तत्साक्षात्कारः प्रसङ्ख्यानं तद्बलादित्यर्थः यतमानसंज्ञा व्यतिरेक संज्ञा एकेन्द्रिय संज्ञा वशीकार संज्ञाचेति चतस्रः संज्ञा इत्यगमिनः रागादयः। तत्र कषायाश्चितवर्त्तिनस्तैरिन्द्रियाणि यथास्वं विषयेषु

**प्रापणीयं क्षीणाः क्षेतव्याः क्लेशाः छिन्नः श्लिष्टपर्व्वा भव-**

प्रवर्त्तते तन्मा प्रवर्त्तिषतेन्द्रियाणि तत्तद्विषयेष्विति तत्परिपाचनायारम्भः प्रयत्नः
सा यतमानसंज्ञा । तदारम्भे सति केचित्कषायाः पक्वाः पच्यन्ते पक्ष्यन्तेच केचित् —
तत्र पच्यमानेभ्यः पक्वानां व्यतिरेकेणावधारणं व्यतिरेकसंज्ञा । इन्द्रियप्रवर्त्तना-
समर्थतया पक्वानामौत्सुक्यमात्रेण मनसि व्यवस्थानमेकेन्द्रियसंज्ञा । औत्सुक्यमा-
त्रस्यापि निवृत्तिरुपस्थितेष्वपि दिव्यादिव्यविषयेषूपेक्षाबुद्धिः संज्ञात्रयात्परा वशी-
कारसंज्ञा । एतयैवच पूर्व्वासां चरितार्थत्वान्न ताः पृथगुक्ता — इति सर्व्व-
मवदातं ।

अपरं वैराग्यमुक्त्वा परमाह — तत्परं पुरुषख्यातेर्गुणवैतृष्ण्यं । अपरवैराग्यस्य
परवैराग्यं प्रति कारणत्वं । तत्र च द्वारमादर्शयति — "दृष्टानुश्रविकविषय-
दोषदर्शी विरक्तः" इति, अनेनापरं वैराग्यं दर्शितं । पुरुषदर्शनाभ्यासादागमानु-
मानाचार्य्योपदेशसमधिगतस्य पुरुषस्य दर्शनं तस्याभ्यासः पौनःपुन्येन निषेवणं
तस्मात् तस्य दर्शनस्य शुद्धेरजस्तमःपरिहारात् सत्त्वैकतानतया यो गुणपुरुषयोः
प्रकर्षेण विवेकः — पुरुषः शुद्धोऽनन्तः, तद्विपरीतगुणा — इति तेनाप्यायिता
बुद्धिर्यस्य योगिनः स तथोक्तस्तदनेन धर्म्ममेघाख्यः समाधिरुक्तः । स तथाभूतो
योगी गुणेभ्योव्यक्ताव्यक्तधर्म्मकेभ्यः सर्व्वथा विरक्तः सत्त्वपुरुषान्यताख्यातावपि
गुणात्मिकायां यावद्विरक्त — इति, तत्तस्मात् द्वयं वैराग्यं । पूर्व्वं हि वैराग्यं
सत्त्वसमुद्रेकविधूततमसि रजःकणकलङ्कसंपृक्ते चित्तसत्त्वे तच्च तौष्टिकानामपि
समानम् ते हि तेनैव प्रकृतिलया बभूवुः यथोक्तं — "वैराग्यात् प्रतिलय" —
इति । तत्र तयोर्द्वयोर्मध्ये यदुत्तरं, तत् ज्ञानप्रसादमात्रं मात्रग्रहणेन निर्व्वि-
षयतां सूचयति ; तदेव हि तादृशं चित्तसत्त्वं रजोलेशमलेनापि अपरामृष्टमस्याश्रयो
अतएव 'ज्ञानप्रसाद' — इत्युच्यते । चित्तसत्त्वं हि प्रसादस्वभावमपि रजस्तमः-
सम्पर्कात् मलिनतामनुभवति, वैराग्याभ्यासविमलवारिधाराधौतसमस्तरजस्त-
मोमलं अतिप्रसन्नं ज्ञानप्रसादमात्रपरिशेषं भवति । तस्य गुणानुपादेय-
त्वाय दर्शयति, — यस्योदये सति योगी प्रत्युदितख्यातिः ख्यातिविशेषे सति वर्त्तमान-
ख्यातिमानित्यर्थः । प्रापणीयं कैवल्यं प्राप्तं, यथा पश्यति, — "जीवन्नेव विद्वान्मुक्तो

संक्रमो—यस्याविच्छेदात् जनित्वा म्रियते, मृत्वाच जायत इति ज्ञानस्यैव पराकाष्ठा वैराग्यम्—एतस्यैव हि नान्तरीयकं कैवल्यमिति ॥ १६ ॥

अथोपायद्वयेन निरुद्धचित्तवृत्तेः कथमुच्यते सम्प्रज्ञातः समाधिरिति,—

वितर्कविचारानन्दास्मितानुगमात् सम्प्रज्ञातः॥ १७ ॥

भवति" संस्कारमात्रस्य छिन्नमूलस्य सिद्धत्वादितिभावः। कुतः प्राप्तं ?—यतः क्षीणाः चेतव्याः, क्लेशाः अविद्यादयः सवासनाः। नन्वस्ति धर्म्माधर्म्मसमूहो भवस्य जन्ममरण-प्रबन्धस्य संक्रमः प्राणिनां तत् कुतः कैवल्यं ?—इत्यत आह—छिन्न इति। श्लिष्टानि निःसन्धीनि पर्व्वाणि यस्य स तथोक्तः। धर्म्माधर्म्मसमूहस्य समूहिनः पर्व्वाणि, तानि श्लिष्टानि=न हि जातु जन्तुर्मरणजन्मप्रबन्धेन वियुज्यते। सोयं भवसंक्रमः क्लेशक्षये छिन्नः। यथा वक्ष्यति—"क्लेशमूलः कर्म्माशयः" "सतिमूले तद्विपाक"—इति। ननु प्रसङ्ख्यानपरिपाकं धर्म्ममेघञ्च निरोधं अन्तरा किं तदस्ति ?—यत्ज्ञानप्रसादमात्र मित्यत आह—ज्ञानस्यैवेति। धर्म्ममेघभेदएव परं वैराग्यं नान्यत्। यथा वक्ष्यति—'प्रसङ्ख्यानेप्यकुसीदस्य सर्व्वथा विवेकख्यातेर्धर्म्ममेघसमाधिः' 'तदा सर्व्वावरणमला-पेतस्य ज्ञानस्यानन्त्यात् ज्ञेयमल्पमिति' च। तस्मादेतस्य हि नान्तरीयकमविना-भाविकैवल्यमिति ॥ १६ ॥

उपायमभिधाय सप्रकारोपेयकथनाय पृच्छति—अथोपायद्वयेनेति। "वितर्क-विचारानन्दास्मितारूपानुगमात् संप्रज्ञातः"। संप्रज्ञातपूर्व्वकत्वादसंप्रज्ञातस्य—इति प्रथमं संप्रज्ञातोपवर्णनम्। संप्रज्ञातसामान्यम् वितर्कविचारानन्दास्मितानां रूपैरनुगमात् प्रतिपत्तव्यम्।

वितर्कः = चित्तस्यालम्बने स्थूल आभोगः। सूक्ष्मो विचारः। आनन्दो ह्लादः। एकात्मिका संविदस्मिता। तत्र प्रथमश्चतुष्टयानुगतः समाधिः सवितर्कः। द्वितीयो वितर्कविकलः सविचारः। तृतीयो विचारविकलः सानन्दः। चतुर्थस्तद्विकल अस्मितामात्र—इति। सर्व्वे एते सालम्बनाः समाधयः॥१७॥

अथासम्प्रज्ञातसमाधिः किमुपायः? किं स्वभावो वेति,—

## विरामप्रत्ययाभ्यासपूर्व्वः संस्कारशेषोऽन्यः॥१८॥

वितर्कं विवृणोति—चित्तस्येति। स्वरूपसाक्षात्कारवती प्रज्ञा आभोगः, स च स्थूलविषयत्वात् स्थूलः। यथा हि प्राथमिको धानुष्कः स्थूलमेव लक्ष्यं विध्यत्यथ सूक्ष्मं; एवं प्राथमिको योगी स्थूलमेव पाञ्चभौतिकं चतुर्भुजादि ध्येयं साक्षात् करोति अथ सूक्ष्ममिति। एवं चित्तस्यालम्बने सूक्ष्मे आभोगः स्थूलकारणभूतसूक्ष्मपञ्चतन्मात्रलिङ्गालिङ्गविषयो विचारः। तदेवं ग्राह्यविषयं दर्शयित्वा ग्रहणविषयं दर्शयति—आनन्द इति। इन्द्रिये स्थूलआलम्बने चित्तस्याभोग ह्लादः आनन्दः। प्रकाशशीलतया खलु सत्वप्रधानादहङ्कारादिन्द्रियाण्युत्पन्नानि, सत्वं सुखमिति तान्यपि सुखानीति तस्मिन्नाभोग ह्लाद—इति। गृहीतृविषयं संप्रज्ञातमाह—एकात्मिकासंविदिति। अस्मिताप्रभवाणीन्द्रियाणि तेनैषामस्मिता सूक्ष्मरूपं सा चात्मना गृहीत्रा सह बुद्धेरेकात्मिका संविदिति तस्याञ्च गृहीतुरन्तर्भावात् भवति गृहीतृविषयः संप्रज्ञात--इति। चतुर्णामपरमप्यवान्तरविशेषमाह—तत्र प्रथम इति। कार्य्यं कारणानुप्रविष्टं न कारणं कार्य्येण—तदयं स्थूल आभोगः स्थूलसूक्ष्मेन्द्रियास्मिताकारणचतुष्टयानुगतो भवति। उत्तरे तु विद्विकरूपा भवन्ति। असंप्रज्ञाताङ्गिनत्ति—सर्व्वएत इति॥१७॥

क्रमप्राप्तमसंप्रज्ञातमवतारयितुं पृच्छति,—अथेति। 'विरामप्रत्ययाभ्यासपूर्व्वः संस्कारशेषोन्यः। पूर्व्वपदेनोपायकथनमुत्तराभ्याञ्च स्वरूपकथनं। मध्यमं पदं

सर्व्ववृत्तिप्रत्यस्तमये संस्कारशेषोनिरोधश्चित्तस्य समाधिरसम्प्रज्ञातः—तस्य परं वैराग्यमुपायः। सालम्बनोह्यभ्यासस्तत्साधनाय न कल्पते—इति विरामप्रत्ययोनिर्व्वस्तुक आलम्बनी क्रियते, स चार्थशून्यः=तदभ्यासपूर्व्वकं हि चित्तं निरालम्बनमभावप्राप्तमिव भवति—इत्येष निर्व्वीजः समाधिरसम्प्रज्ञातः॥ १८॥

स खल्वयं द्विविधः=उपायप्रत्ययोभवप्रत्ययश्च, तत्रोपायप्रत्ययोयोगिनां भवति,—

**भवप्रत्ययोविदेहप्रकृतिलयानाम्॥ १९॥**



विवृणोति—सर्व्ववृत्ति इति। प्रथमं पदं व्याचष्टे—तस्य परमिति। विरामो वृत्तीनामभावस्तस्य प्रत्ययः कारणं तस्याभ्यासः तदनुष्ठानपौनःपुन्यं तदेव पूर्व्वं यस्य स तथा। अथापरं वैराग्यं निरोधकारणं कस्मान्न भवतीत्यत आह—सालम्बनोहीति। कार्य्यस्वरूपं कारणं युज्यते न विरूपं, विरूपश्चापरं वैराग्यं सालम्बनं निरालम्बनसमाधिना कार्य्येण। तस्मान्निरालम्बनादेव ज्ञानप्रसादमात्रात्मोत्पत्तिर्युक्ता धर्म्ममेघसमाधिरेव हि नितान्तविगलितरजस्तमोमलात् बुद्धिसत्वादुपजातस्तत्तद्विषयातिक्रमेण प्रवर्द्धमानोनन्तोविषयावद्यदर्शी समस्तविषयपरित्यागाच्च स्वरूपप्रतिष्ठः सन्निरालम्बनः संस्कारमात्रशेषस्य निरालम्बनस्य समाधेः कारणमुपपद्यते सारूप्यादिति। आलम्बनीकरणमाश्रयणमभावप्राप्तमिव वृत्तिरूपकार्य्याकरणात् निर्व्वीजोनिरालम्बनः। अथवा वीजं क्लेशकर्म्माशयास्ते निष्क्रान्ता यस्मात् स तथा॥ १८॥

निरोधसमाधेरवान्तरभेदं हानोपादानाङ्गमादर्शयति,—स खल्वयं,=निरोधसमाधिः। द्विविधः=उपायप्रत्ययोभवप्रत्ययश्च। उपायो वक्ष्यमाणः श्रद्धादिः

विदेहानां देवानां भवप्रत्ययः—ते हि स्वसंस्कारमात्रोपयोगेन चित्तेन कैवल्यपदमिवानुभवन्तः स्वसंस्कारविपाकं तथाजातीयकमतिवाहयन्ति। तथा प्रकृतिलयाः=साधिकारे चेतसि प्रकृतौ लीने कैवल्यं पदमिवानुभवन्ति यावन्न पुनरावर्त्तते अधिकारवशाच्चित्तमिति ॥ १९ ॥

प्रत्ययःकारणं यस्य निरोधसमाधेः स तथोक्तः। भवन्ति जायन्तेऽस्यां जन्तव इति भवोऽविद्या—भूतेन्द्रियेषु वा विकारेषु प्रकृतिषु वाऽव्यक्तमहदहङ्कारपञ्चतन्मात्रेष्वनात्मस्वात्मख्यातिकस्तौष्टिकानां वैराग्यसम्पन्नानां।

स खल्वयं भव प्रत्ययः कारणं यस्य निरोधसमाधेः स भवप्रत्ययः, तत्र तयोर्मध्ये उपायप्रत्ययोयोगिनां मोक्षमाणानां भवति। विशेषविधानेन शेषस्य मुमुक्षुसम्बन्धं निषेधति—केषां तर्हि भवप्रत्ययः ?—इत्यत्र सूत्रेणोत्तरमाह,—भवप्रत्ययो-विदेहप्रकृतिलयानां। विदेहाश्च प्रकृतिलयाश्च तेषामित्यर्थः। तद्व्याचष्टे—विदेहानां देवानां भवप्रत्ययोभूतेन्द्रियाणामन्यतमदात्मत्वेन प्रतिपन्नास्तदुपासनया तद्वासनावासितान्तःकरणा पिण्डपातानन्तरमिन्द्रियेषु भूतेषु वा लीनाः=संस्कारमात्रावशेषमनसः, षाट्कौषिकशरीररहिता विदेहाः। ते हि संस्कारमात्रोपयोगेन चित्तेन कैवल्यपदमिवानुभवन्तः प्राप्नुवन्तः विदेहाः। अवृत्तिकत्वञ्च कैवल्येन सारूप्यं। साधिकारसंस्कारशेषता च वैरूप्यः। संस्कारमात्रोपयोगेनेति क्वचित्पाठः, तस्यार्थः—संस्कारमात्रमेवोपभोगोयस्य न तु चित्तवृत्तिरित्यर्थः प्राप्तावधयः स्वसंस्कारविपाकं तथा जातीयकमतिवाहयन्ति अतिक्रामन्ति पुनरपि संसारे विशन्ति। तथाच वायुप्रोक्तं "दशमन्वन्तराणीह तिष्ठन्तीन्द्रियचिन्तकाः। भौतिकास्तु शतं पूर्णमिति" तथा प्रकृतिलयाश्च अव्यक्तमहदहङ्कारपञ्चतन्मात्रेष्वन्यतमदात्मत्वेन प्रतिपन्नास्तदुपासनाय तद्वासनावासितान्तःकरणाः पिण्डपातानन्तरमव्यक्तादीनामन्यतमस्मिन् लीनाः साधिकारे ऽचरितार्थे—एवं हि चरितार्थः चेतःस्यात् यदि विवेकख्यातिमपि जनयेद्! अजनितसत्वपुरुषान्यताख्यातेस्तु चेतसोऽचरितार्थस्यास्ति साधिकारतेति। साधिकारे चेतसि प्रकृतौ लीने कैवल्यपदमिव

उपायप्रत्ययोयोगिनां भवति —

**श्रद्धावीर्य्यस्मृतिप्रज्ञापूर्व्वक इतरेषाम् ॥ २० ॥**

श्रद्धा = चेतसः सम्प्रसादः। सा हि जननीव कल्याणी योगिनं पाति, तस्य हि श्रद्दधानस्य = विवेकार्थिनो वीर्य्य-मुपजायते, समुपजातवीर्य्यस्य स्मृतिरुपतिष्ठते, स्मृत्युपस्थाने च चित्तमनाकुलं समाधीयते, समाहितचित्तस्य प्रज्ञा-

अनुभवन्ति यावन्न पुनरावर्त्तते अधिकारवशाच्चित्तमिति। प्रकृतिसामान्यमुपगतं अप्यवुद्धिं प्राप्य पुनरपि प्रादुर्भवति। ततो विविच्यते—यथा वर्षातिपाते मृद्भावमुपगतोमण्डूकदेहः पुनरम्भोदवारिधारावसेकात् मण्डूकदेहभावमनु-भवतीति। तथाच वायुप्रोक्तं—सहस्रं त्वाभिमानिकाः। बौद्धाः दशसहस्राणि तिष्ठन्ति विगतज्वराः। पूर्णं शतसहस्रन्तु तिष्ठन्त्यव्यक्तचिन्तकाः। पुरुषं निर्गुणं प्राप्य कालसङ्ख्या न विद्यते इति। तदस्य पुनर्भवप्राप्तिहेतुतया हेयत्वं सिद्धम्॥ १९॥

योगिनान्तु समाधेरुपायक्रममाह—श्रद्धावीर्य्यस्मृतिसमाधिप्रज्ञापूर्व्वकइतरेषां"। नन्विन्द्रियादिचिन्तका अपि श्रद्धावन्त एवेत्यत आह – श्रद्धा = चेतसः संप्रसादः, सचा-गमानुमानाचार्य्योपदेशसमधिगततत्त्वविषयोभवति स हिचेतसः संप्रसादः—अभि-रुचिमतीच्छा श्रद्धा, नेन्द्रियादिष्वात्माभिमानिनामभिरुचिरसंप्रसादोहि सः व्यामोह-मूलत्वादित्यर्थः। कुतोऽसावेव श्रद्धेत्यतआह—'साहि जननीवकल्याणीयोगिनंपाति' विमार्गपातजन्मनोऽनर्थात्सोयमिच्छाविशेषः। इष्यमाणविषयं प्रयत्नं प्रसूतेइत्याह—"तस्यहिश्रद्दधानस्य"तस्यविवरणंविवेकार्थिनोवीर्य्यमुपजायते। स्मृतिर्ध्यानमनाकुल-मविक्षिप्तं समाधीयतेयोगाङ्गसमाधियुक्तं भवति। यमनियमादिनान्तरीयकसमाध्युप-न्यासेनचयमनियमादयोपिसूचिताः। तदेवमखिलयोगाङ्गसम्पन्नस्यसंप्रज्ञातोजायते इत्याह— समाहितचित्तस्येति। प्रज्ञायाविवेकःप्रकर्ष उपजायते। संप्रज्ञातपूर्व्वमसं-प्रज्ञातोत्पादनमाह—तदभ्यासात्। तत्रैवतत्तद्भूमिप्राप्तौतत्तद्विषयाच्चवैराग्यादसं-

विवेक उपावर्त्तते—येन यथावद्वस्तु जानाति—तदभ्यासात् तद्विषयाच्च वैराग्यादसम्प्रज्ञातः समाधिर्भवति ॥ २० ॥

ते खलु नवयोगिनोमृदुमध्याधिमात्रोपाया भवन्ति। तद्यथा,—मृदुपायोमध्योपायोऽधिमात्रोपाय—इति। तत्र मृदुपायोऽपि त्रिविधः—मृदुसंवेगोमध्यसंवेगस्तीव्रसंवेग—इति। तथा मध्योपायस्तथाधिमात्रोपाय—इति,—तत्राधिमात्रोपायानां—

**तीव्रसंवेगानामासन्नतमः ॥ २१ ॥**

समाधिलाभः समाधिफलञ्च भवतीति ॥ २१ ॥



**मृदुमध्याधिमात्रत्वात् ततोऽपिविशेषः॥२२॥**

मृदुतीव्रोमध्यतीव्रोऽधिमात्रतीव्र—इति,ततोपि विशेषः = मृदुतीव्रसंवेगस्यासन्नः, ततोमध्यतीव्रसंवेगस्यासन्नतरः,

प्रज्ञातः समाधिर्भवतिसहिकैवल्यहेतुसत्वपुरुषान्यताख्यातिपूर्व्वोंहिनिरोधश्चित्तमखिलकार्य्यकारणेनचरितार्थमधिकारादवसादयति ॥ २० ॥

ननुश्रद्धादयाश्चेद्योगोपायास्तर्हिसर्व्वेषामविशेषेणसमाधितत्फलेस्यातांदृश्यतेतु-कस्यचित्सिद्धिः कस्यचिदसिद्धिः कस्यचिच्चिरेण सिद्धिः कस्यचिच्चिरतरेण सिद्धिः कस्यचित्क्षिप्रमित्यतआह,— "तेखलुनवयोगिन" – इति। उपायाः श्रद्धादयोमृदु-मध्याधिमात्राः प्राग्भवीयसंस्कारादृष्टवशाद् येषां ते तथोक्ताः। संवेगोवैराग्यं तस्यापि मृद्रुमध्यतीव्रता प्राग्भवीयवासनादृष्टवशादेवेति तेषुयादृशां चेप्रीयसी सिद्धिस्ता दर्शयति सूत्रेण,– "तीव्रसंवेगानामासन्नः' इति सूत्रं। शेषं भाष्यं। समाधेः संप्रज्ञातस्य फलमसंप्रज्ञातं तस्यापि कैवल्यम् ॥२१॥

तस्मात् अधिमात्रतीव्रसंवेगस्याऽधिमात्रोपायस्याप्यासन्नतमः समाधिलाभः समाधिफलञ्चेति ॥ २२ ॥

किमेतस्मादेवासन्नतमः समाधिर्भवति? अथास्य लाभे भवत्यन्योऽपि कश्चिदुपायो नवा?—इति

**ईश्वरप्रणिधानाद्वा ॥ २३ ॥**

प्रणिधानाद्भक्तिविशेषादावर्जितईश्वरस्तमनुगृह्णात्यभिध्यानमात्रेण—तदभिध्यानमात्रादपि योगिनः आसन्नतरः समाधिलाभः फलञ्च भवतीति ॥ २३ ॥

अथ प्रधानपुरुषव्यतिरिक्तः कोऽयमीश्वरोनामेति?,—



**क्लेशकर्म्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः ॥ २४ ॥**

मृदुमध्याधिमात्रत्वात्ततोपिविशेषः। निगदव्याख्यातेनभाष्येनव्याख्यातमिति॥२२॥

सूत्रान्तरम्पातयितुं विमृशति—किमेतस्मादेवेति। नवाशब्दः संशयनिवर्त्तकः। ईश्वरप्रणिधानाद्वा। व्याचष्टे —प्रणिधानाद्भक्तिविशेषान्मानसाद्वाचिकात्कायिकाद्वा आवर्जितोऽभिमुखीकृतस्तमनुगृह्णाति अभिध्यानमनागतेऽर्थेइच्छा = इदमस्याभिप्रेतमस्त्विति तन्मात्रेण न व्यापारान्तरेण, शेषंसुगमम् ॥ २३ ॥

ननु चेतनाऽचेतनाभ्यामिवव्यूढं नान्येन विश्वं, ईश्वरश्चेदचेतनस्तर्हिप्रधानं,प्रधानविकाराणामपिप्रधानमध्यपातात्तथाच नतस्यावर्ज्जनमचेतनत्वादथचेतनस्तथापि चितिशक्तेरौदासीन्यादसंसारितयाचास्मितादिविरहात्कुतआवर्ज्जनं?कुतश्चाभिध्यान? मित्याशयवानाह,—अथप्रधानेति। अत्र सूत्रेणोत्तरमाह—“क्लेशकर्म्मविपाकाशयै-

अविद्यादयः क्लेशाः। कुशलाऽकुशलानि कर्म्माणि। तत्फलं विपाकः। तदनुगुणा वासना आशयाः। ते च मनसि वर्त्तमानाः पुरुषे व्यपदिश्यन्ते—स हि तत्फलस्य भोक्तेति। यथा जयः पराजयोवा योद्धृषु वर्त्तमानः स्वामिनि व्यपदिश्यते—योह्यनेन भोगेनाऽपरामृष्टः स पुरुषविशेष ईश्वरः।

• कैवल्यं प्राप्तास्तर्हि सन्ति च बहवः केवलिनः? ते हि त्रीणि बन्धनानि छित्वा कैवल्यं प्राप्ताः—ईश्वरस्य च तत्सम्बन्धो

रपरामृष्टःपुरुषविशेषईश्वरः"अविद्यादयः क्लेशाः,—क्लिश्यन्ति खल्वमी पुरुषं सांसारिकं विविधदुःखप्रहारेणेति। "कुशलाकुशलानीति"। धर्म्माधर्म्मास्तेषाञ्च कर्म्मजत्वादुपचारात् कर्म्मत्वं। विपाकोजात्यायुर्भोगाः विपाकानुगुणा वासनास्ता-श्चित्तभूमौ आशेरत—इतिआशयाः नहिकरभजातिनिवर्त्तकं कर्म्म प्राग्भवीयकरभ-भोगभावितांभावनांनयावदभिव्यनक्तितावत्करभोचितायभोगायकल्पते, तस्मात्तत्रति-करभजात्यनुभवजन्माभावनाकरभविपाकानुगुणेति। नन्वमी क्लेशादयोबुद्धि-धर्म्माणंकथञ्चिदपिपुरुषं परामृशन्ति तस्मात् पुरुषग्रहणादेव तदपरामर्शसिद्धेः कृतंक्लेशकर्म्मइत्यादिनेत्यतआह,— "तेचमनसिवर्त्तमानाः सांसारिके पुरुषे व्यपदिश्यन्ते—कस्मात्? "सहितत्फलस्यभोक्ताचेतयितेति"। तस्मात्पुरुषत्वादीश्वर-स्यापितत्सम्बन्धः प्राप्त—इतितत्प्रतिषेधउपपद्यतेइत्याह,—योह्यनेन बुद्धिस्थेनापिपुरुष-मात्रसाधारणेन भोगेनापरामृष्टःसपुरुषविशेषईश्वरः। विशिष्यतेइति विशेषः पुरुषा-न्तराद्व्यवच्छिद्यते।

विशेषपदव्यावर्त्त्यं दर्शयितुकामः परिचोदनापूर्व्वं परिहरति—कैवल्यं प्राप्तास्तर्हि—इति। प्रकृतिलयानांप्राकृतोबन्धः, वैकारिकोविदेहानां, दक्षिणादि-बन्धोदिव्यादिव्यविषयभोगभाजाम्। तान्यमूनित्रीणिबन्धनानिप्रकृतिभावनासंस्कृत-मनसोहिदेहपातानन्तरमेवप्रकृतिलयतामापन्नाइतीतरेषां पूर्व्वाबन्धकोटिः प्रज्ञायते तेनोत्तरकोटिविधानमात्रमिहतुपुर्व्वापरकोटिनिषेध—इतिसंक्षिप्यविशेषं दर्शयति—

नभूतो न भावो—यथा मुक्तस्य पूर्व्वाबन्धकोटिः प्रज्ञायते नैवमीश्वरस्य, यथावा प्रकृतिलीनस्योत्तरा बन्धकोटिः सम्भाव्यते नैवमीश्वरस्य—स तु सदैव मुक्तः, सदैवेश्वर—इति।

योऽसौ प्रकृष्टसत्वोपादानादीश्वरस्य शाश्वतिकः उत्कर्षः—स किं सनिमित्तः? आहोस्विन्निर्निमित्त?

"सतुसदैवमुक्तः सदैवेश्वर"इति। ज्ञानक्रियाशक्तिसम्पदैश्वर्य्यः। अत्रपृच्छति—योऽसाविति। ज्ञानक्रिये हि न चिच्छक्तेरपरिणामिन्याःसम्भवत इति। रजस्तमोरहितविशुद्धचित्तसत्वाश्रयेवक्तव्ये।

नचेश्वरस्यसदामुक्तस्याविद्याप्रभवचित्तसत्वसमुत्कर्षेणसहस्वस्वामिभावसम्बन्धः सम्भवतीत्यतउक्तं, —प्रकृष्टसत्वोपादादिति। नेश्वरस्य पृथक्जनस्येवाविद्यानिबन्धनश्चित्तसत्वे नस्वस्वामिभावः, किन्तुतापत्रयपरीतान् प्रेत्यभावमहार्णवात् जन्तूनुद्धरिष्यामिज्ञानधर्म्मोपदेशेन। नचज्ञानक्रियासामर्थ्यातिशयसम्पत्तिमन्तरेणतदुपदेशो नचेयमपहतरजस्तमोमलविशुद्धसत्वोपादानंविनेत्याशोच्यसत्वप्रकर्षमुपादत्ते भगवान् - परामृष्टोऽप्यविद्ययाऽविद्याभिमानोवाविद्यायास्तत्वमविद्वान्भवति नपुनरविद्यामविद्यात्वेनसेवमानः नखलुशैलूषोरामत्वमारोप्यतात्ताश्चेष्टादर्शयन्भ्रान्तोभवति तदिदमाहार्यमस्यरूपनतात्विकमिति।

स्यादेतदुद्दिधीर्षयाभगवतासत्वमुपादेयं तदुपादानेनचतदुद्दिधीर्षा अस्या अपिप्राक्तत्वात्तथाचान्योन्यसंश्रयइत्यतउक्तं,—शाश्वतिकइति। भवेदेतदेवं यदीयं प्रथमता सर्गस्यभवेदनादौतुसर्गसंहारप्रबन्धे सर्गान्तरसमुत्पन्नसञ्जिहीर्षावधिसमयेपूर्णेमयासत्वप्रकर्षउपादेयइतिप्रणिधानंकृत्वाभगवाञ्जगत्सञ्जहार, तदाचेश्वरचित्तसत्वंप्रणिधानवासनावासितप्रधानसाम्यमुपगतमपिपरिपूर्णेमहाप्रलयावधौप्रणिधानवासनावशात्तथैवेश्वरचित्तसत्वभावेनपरिणमतेयथा चैत्रःश्वःप्रातरेवो त्थातव्यंमयेतिप्रणिधायसुप्तस्तदैवोत्तिष्ठति प्रणिधानसंस्कारात्, तस्मादनादित्वादीश्वरप्रणिधानसत्वोपादानयोः शाश्वतिकत्वे न नान्योन्यसंश्रयः। नचेश्वरस्य चित्तसत्वं महाप्रलयेपिन प्रकृतिसाम्यमुपैतीति वाच्यं? यस्य हि न कदाचिदपि प्रधानसाम्यं न तत्प्राधानिकं नापिचिति-

—इति तस्य शास्त्रं, शास्त्रं पुनः किं निमित्तं ? एतयोः शास्त्रोत्कर्षयोरीश्वरसत्त्वे वर्त्तमानयोरनादिः

—

शक्तिः अज्ञत्वात्--इत्यर्थान्तरमप्रामाणिकमापद्येत। तच्चायुक्तं, प्रकृतिपुरुषव्यतिरेके-णार्थान्तराभावात्। सोऽयमीदृशईश्वरस्य शाश्वतिक उत्कर्षः किं सनिमित्तः—सप्रमाणक ? आहोस्विन्निर्निमित्तः—निष्प्रमाणक?—इति। उत्तरम्—तस्य शास्त्रं निमित्तं—श्रुतिस्मृतीतिहासपुराणानि शास्त्रं। चोदयति—शास्त्रं पुनः किं निमित्तं? प्रत्यक्षानुमानपूर्व्वं हि शास्त्रम्? नचेश्वरस्य सत्त्वप्रकर्षे कस्यचित् प्रत्यक्षमनुमानं वास्ति। नचेश्वरप्रत्यक्षप्रभवं शास्त्रमितियुक्तं—कल्पयित्वापिद्वयं स्वयं ब्रूयादात्मैश्वर्य्यप्रकाशनायेतिभावः। परिहरति—प्रकृष्टसत्त्वनिमित्तम्। अयमभिसन्धिः—मन्त्रायुर्वेदेषु तावदीश्वरप्रणीतेषु प्रवृत्तिसामर्थ्यादर्थाव्यभिचारविनिश्चयात् प्रमाण्यं सिद्धम्। नचौषधिभेदानां तत्संयोगविशेषाणाञ्च मन्त्राणाञ्च तत्तद्वर्णावापोद्धारेण बहुशेणापि पुरुषायुषैर्लौकिकप्रमाणव्यवहारी शक्तः कर्त्तुं मन्वयव्यतिरेकौ, नचागमादन्वयव्यतिरेकौ, ताभ्यां चागमसत्त्वसन्तानयोरनादित्वादिति प्रतिपादयितुं युक्तं; महाप्रलये तत्सन्तानयोर्व्विच्छेदात्—नच तद्भावे प्रमाणाभावः। अभिन्नं प्रधानविकारो जगदिति हि प्रतिपादयिष्यते। सदृशपरिणामस्य विसदृशपरिणामता दृष्टा। यथा क्षीरेश्वरसादेर्दधिगुड़ादिरूपं। विसदृशपरिणामस्य पूर्व्वसदृशपरिणामता च दृष्टा। तदिह प्रधानेनापि महदहङ्कारादिरूपविसदृशपरिणामेन सता भाव्यं। कदाचित् सदृशपरिणामेन सदृशपरिणामश्चास्य साम्यावस्था सच महाप्रलयस्तस्मान्मन्त्रायुर्व्वेदप्रणयनात् तावद्भगवता रजस्तमोमलावरणतया परितः प्रद्योतमानं बुद्धिसत्त्वमास्थेयं। तथाचास्य दृष्टानिःश्रेयसोपदेशपरोपि वेदराशिरीश्वरप्रणीतस्तद्बुद्धिसत्त्वप्रकर्षादेव भवितुमर्हति। न च सत्त्वोत्कर्षे रजस्तमःप्रभवौ विभ्रमविप्रलम्भौ सम्भवतस्तत् प्रकृष्टसत्त्वनिमित्तं शास्त्रमिति। स्यादेतत् प्रकर्षकार्य्यतया प्रकर्षं बोधयच्छास्त्रम् शेषवदनुमानं भवेन्नत्वागम इत्यत आह,—एतयोरिति। न कार्य्यत्वेन बोधयति अपितु नादिवाच्यवाचकभावसम्बन्धेन बोधयतीत्यर्थः। ईश्वरसत्त्वेहि बुद्धिसत्त्वे प्रकर्षोवर्त्तते, शास्त्रमपि तद्वाचकत्वेन तत्र वर्त्तते—इति उपसंहरति,—

सम्बन्धः।/एतस्मादेतद्भवति सदैवेश्वरः सदैव मुक्त—इति। तच्च तस्यैश्वर्य्यं साम्यातिशयविनिर्मुक्तः न तावदैश्वर्य्यान्तरेण तदतिशय्यते,—यदेवातिशयि स्यात्तदेव तत् स्यात्। तस्माद् यत्र काष्ठाप्राप्तिरैश्वर्य्यस्य स ईश्वरः, न च तत्समानमैश्वर्य्यमस्ति। कस्मात्?—द्वयोरेकस्मिन् युगपत् कामितेऽर्थे नवमिदमस्तु पुराणमिदमस्त्विति एकस्य सिद्धावितरस्य प्राकाम्यविघातादूनत्वं प्रसक्तं, द्वयोश्च तुल्ययोर्युगपत्कामितार्थप्राप्तिर्नास्ति, अर्थस्य विरुद्धत्वात्; तस्माद् यस्य साम्यातिशयविनिर्मुक्तमैश्वर्य्यं स ईश्वरः, स च पुरुषविशेषः—इति॥ २४॥





एतस्मात् ईश्वरबुद्धिसत्वप्रकर्षवाचकाच्छास्त्रादेतद्भवतिज्ञायते विषयेण विषयिनोलक्षणात्। सदैवेश्वरः सदैव मुक्तः—इति। तदेव पुरुषान्तराद्व्यवच्छिद्य ईश्वरान्तरादपि व्यवच्छिनत्ति—तच्च तस्येति। अतिशयविनिर्मुक्तिमाह—नतावदिति। कुतः?—यदेवेति। कस्मात् सर्व्वातिशयविनिर्मुक्तं तदैश्वर्य्यं?—इत्यत आह,—तस्माद्यत्रेति। अतिशयनिष्ठामप्राप्तानामौपचारिकमैश्वर्य्यमित्यर्थः। साम्यविनिर्मुक्तिमाह—न च तत्समानमिति। प्राकाम्यमविहतेच्छता तद्विघातादूनत्वम्, अनूनत्वे वा द्वयोरपि प्राकाम्यविघातः कार्य्यानुत्पत्तिरुत्पत्तिर्वा विरुद्धधर्म्मसमालिङ्गितमेकदा कार्य्यमुपलभ्येतेत्याशयवानाह—द्वयोश्चेति। अविरुद्धाभिप्रायत्वे वा अन्येकमीश्वरत्वे कृतमन्यैरेकेनैवेशनायाः कृतत्वात्; सम्भूयकारित्वे वा न कश्चिदीश्वरः परिषद्वत् नित्येशनायोगिनाञ्च पर्य्यायायोगात्, कल्पनागौरवप्रसङ्गाच्चेति द्रष्टव्यं; तस्मात् सर्व्वमवदातम्॥ २४॥

किञ्च,—

## तत्र निरतिशयं सर्व्वज्ञबीजम् ॥ २५ ॥

यदिदमतीतानागतप्रत्युत्पन्नप्रत्येकसमुच्चयातीन्द्रियग्रहणमल्पं बह्विति सर्व्वज्ञबीजमेतद्विवर्द्धमानं यत्र निरतिशयं स सर्व्वज्ञः—अस्ति काष्ठाप्राप्तिः सर्व्वज्ञबीजस्य, सातिशयत्वात्—परिमाणवदिति—यत्र काष्ठाप्राप्तिर्ज्ञानस्य स सर्व्वज्ञः स च पुरुषविशेष—इति। सामान्यमात्रोपसंहारे कृतोपक्षयमनुमानं न विशेषप्रतिपत्तौ समर्थमिति। तस्य संज्ञादिविशेषप्रतिपत्तिरागमतः पर्य्यन्वेष्या। तस्यात्मानुग्रहाभावेऽपि भूतानुग्रहः प्रयोजनं। ज्ञानधर्म्मोपदेशेन कल्पप्रलयमहाप्रलयेषु संसारिणः पुरुषानुद्धरिष्यामीति। तथा-

एवमस्य क्रियाज्ञानशक्तौ शास्त्रं प्रमाणमभिधाय ज्ञानशक्तावनुमानं प्रमाणयति,—किञ्च—"तत्र निरतिशयं सर्व्वज्ञबीज"। व्याचष्टे—यदिदमिति। बुद्धिसत्त्वावरकतमोपगमतारतम्येन यदिदमतीतानागतप्रत्युत्पन्नानां प्रत्येकञ्च समुच्चयेन च वर्त्तमानानामतीन्द्रियाणां ग्रहणं—तस्य विशेषणमल्पं बह्विति सर्व्वज्ञबीजं कारणं, कश्चित् किञ्चिदेवातीतादि गृह्णाति, कश्चिद्बहुतरं, कश्चिद्बहुतममिति ग्राह्यापेक्षया ग्रहणस्याल्पत्वं बहुत्वं कृतम्—एतद्विवर्द्धमानं यत्र निष्क्रान्तमतिशयात् स सर्व्वज्ञ—इति। तदनेन प्रमेयमात्रं कथितं। अत्र प्रमाणयति—"अस्तिकाष्ठाप्राप्तिः सर्व्वज्ञबीजस्येति" साध्यनिर्द्देशः निरतिशयत्वं काष्ठा यतः परमतिशयवत्ता नास्तीति। तेन नावधिमात्रेण सिद्धसाधनं सातिशयत्वादितिहेतुः। यत्सातिशयं तत्तत्सर्व्वं निरतिशयं यथा कुवलामलकविल्वेषु सातिशयं महत्त्वमात्मनि निरतिशयमिति व्याप्तिं दर्शयति—परिमाणवत्। न च गरिमादिगुणैर्व्यभिचारइति साम्प्रतं—न खल्वऽवयव-

चोक्तम्—“आदिविद्वान्निर्म्माणचित्तमधिष्ठाय कारुण्याद्भगवान् परमर्षिरासुरये जिज्ञासमानाय तन्त्रं प्रोवाचेति” ॥ २५ ॥

गरिमावयविनः, किन्त्वापरमाणुभ्य आत्यावयविभ्यो यावन्तः केचन तेषाम्प्रत्येकवर्त्तिनो परिमाणः समाहृत्य गरिमवर्धमानाभिमानः ज्ञानन्तुप्रतिज्ञेयं समाप्यत--इत्येकद्वित्वह विषयतया युक्तं सातिशयमिति न व्यभिचारः। उपसंहरति,—यत्र, काष्ठा — इति। ननु सन्ति बहवस्तीर्थकरा बुद्धार्हतकपिलर्षिप्रभृतयस्तत् तस्मात् एव सर्व्वज्ञा न भवन्त्यस्मादनुमानादित्यत आह, — सामान्येति। कुतस्तर्हि तद्विशेषप्रतिपत्तिरित्यत-आह, — तस्येति। बुद्धादिप्रणीत आगमाभासो नत्वागमः, सर्व्वप्रमाणबाधितक्षणि-कनैरात्म्यादिमार्गोपदेशकत्वेन विप्रलम्भकत्वादितिभावः। तेन श्रुतिस्मृतीतिहास पुराणलक्षणादागमतः आगच्छन्ति बुद्धिमारोहन्ति। अस्मादभ्युदयनिःश्रेयसो-पाया—इत्यागमः। तस्मात्संज्ञादिविशेषप्रतिपत्तिः संज्ञाविशेषः शिवेश्वरादिः श्रुत्या-दिषु प्रसिद्धः। आदिपदेन षड़ङ्गतादशाव्ययते संगृहीते। यथोक्तं वायुपुराणे— “सर्व्वज्ञता तृप्तिरनादिबोधः स्वतन्त्रता नित्यमलप्तशक्तिः। अनन्तशक्तिश्च विभोर्वि-धिज्ञाः षड़ाहुरङ्गानि महेश्वरस्य। तथा ज्ञानं वैराग्यमैश्वर्य्यं तपः सत्यं क्षमा धृतिः। स्रष्टृत्वमात्मसंबोधोह्यधिष्ठातृत्वमेव च। अव्ययानि दशैतानि नित्यं” तिष्ठन्ति शङ्करे—इति। स्यादेतन्नित्यतृप्तस्य भगवतो वैराग्यातिशयसम्पन्नस्य स्वार्थं तत्रासम्भवात्, कारुणिकस्य च सुखैकतानजनसर्ज्जनपरस्य दुःखबहुलजीवलोक-जननानुपपत्तेरप्रयोजनस्य च प्रेक्षावतः प्रवृत्त्यनुपपत्तेः—क्रियाशक्तिशालिनोपि न जगत् क्रियेत्यत आह,—तस्यात्मानुग्रहाभावेपीति। भूतानां प्राणिनामनुग्रहः प्रयोजनं शब्दाद्युपभोगविवेकख्यातिरूपकार्य्यकरणात् किल, चरितार्थं चित्तं निवर्त्तते ततः पुरुषः केवली भवति अतस्तत्प्रयोजनाय कारुणिकोविवेकख्यात्युपायं कथयति तेनाचरितार्थत्वात् चित्तस्य जन्तूनीश्वरः पुण्यापुण्यसहायः सुखदुःखे भावयन्नपि नाकारुणिकः विवेकख्यात्युपायकथनाय भूतानुग्रहद्वारमाह—ज्ञानधर्म्मोपदेशेनेति। ज्ञानञ्च धर्मश्च ज्ञानधर्म्मौ तयोरुपदेशेन ज्ञानधर्म्मसमुच्चयालब्धविवेकख्यातिपरि-

सएषः—

## पूर्व्वेषामपि गुरुः कालेनानवच्छेदात्॥२६॥

पूर्व्वे हि गुरवः कालेनावच्छिद्यन्ते यत्रावच्छेदार्थेन। कालोनोपावर्त्तते, स एष पूर्व्वेषामपि गुरुः यथास्य सर्गस्यादौ प्रकर्षगत्या सिद्धः तथातिक्रान्तसर्गादिष्वपि प्रत्येतव्यः॥ २६ ॥

पाकात्। कल्पप्रलये ब्रह्मणोदिनावसाने,यत्र सत्यलोकवर्जंजगदस्तमेति। महाप्रलये ससत्यलोकस्य ब्रह्मणोऽपि निधने संसारिणः स्वकारणगामिनोऽतस्तदा मरणदुःखभाजः कल्पेत्युपलक्षणं। अन्यदपि स्वार्जितकर्म्मपाकवसेन जन्ममरणादिभाजः पुरुषानुद्धरिष्यामीति कैवल्यं प्राप्य पुरुषा उद्धृता भवन्तीत्यर्थः। एतच्च करुणाप्रयुक्तस्य ज्ञानधर्म्मोपदेशनं कपिलानामपि सिद्धमित्याह,—"तथाचोक्तं आदिविद्वान्कपिल" इति। आदिविद्वानिति पञ्चशिखाचार्य्यवचनं। आदिमुक्तस्वसन्तानादिगुरुविषयं नत्वनादिमुक्तपरमगुरुविषयं, आदिमुक्तेषु कदाचिन्मुक्तेषु विद्वत्सु कपिलोऽस्माकमादिविद्वान्मुक्तः स एवच गुरुरिति। कपिलस्यापि जायमानस्य महेश्वरानुग्रहादेव ज्ञानप्राप्तिः। श्रूयते हि कपिलोनाम विष्णोरवतारविशेषः प्रसिद्धः; स्वयम्भूस्तु हिरण्यगर्भः तस्यापि साङ्ख्ययोगप्राप्तिर्वेदे श्रुयते—इति—स एवेश्वरः आदिविद्वान् कपिलोविष्णुः स्वयम्भूरितिभावः। स्वायम्भुवादीनामस्तीश्वर—इति भावः॥ २५॥

सम्प्रति भगवतो ब्रह्मादिभ्योविशेषमाह,—स एष इति। पातनिका स एस इति। सूत्रं—"पूर्व्वेषामपिगुरुः कालेनावच्छेदात्"। व्याचष्टे,—पूर्व्वे हीति। कालसुप्रतवर्षादिः, अवच्छेदार्थेन अवच्छेदनप्रयोजनेन नोपावर्त्तते, न वर्त्तते प्रकर्षस्यगतिः प्राप्तिः प्रत्येतव्य आगमात्तदनेन प्रबन्धेन भगवानीश्वरोदर्शितः॥२६॥

## तस्य वाचकः प्रणवः॥२७॥

वाच्य ईश्वरः। प्रणवस्य किमस्य सङ्केतकृतं वाच्यवाचकत्वम्? अथ प्रदीपप्रकाशवदवस्थितमिति। स्थितोऽस्य वाच्यस्य वाचकेन सह सम्बन्धः सङ्केतस्त्वीश्वरस्य स्थितमेवार्थमभिनयति। यथावस्थितः पितापुत्रयोः सम्बन्धः सङ्केतेनावद्योत्यते अयमस्य पिता, अयमस्य पुत्र इति। सर्गान्तरेष्वपि वाच्यवाचकशक्त्यपेक्षस्तथैव सङ्केतः क्रियते, ॥२७

सम्प्रतित त्प्रणिधानं दर्शयितुं तस्य वाचकमाह,—तस्य वाचकः प्रणवः। व्याचष्टे,—वाच्य इति। तत्र परेषां मतं विमर्षद्वारेणोपन्यस्यति,—किमस्येति वाचकत्वं प्रतिपादकत्वं इत्यर्थः। परे हि पश्यन्ति— यदि स्वाभाविकः शब्दार्थयोः सम्बन्धः सङ्केतेनास्माच्छब्दादयमर्थः प्रत्येतव्य इत्येवमात्मकेनाभिव्यज्येत ततोयत्र नास्ति स सम्बन्धस्तत्र सङ्केतशतेनापि न व्यज्येत—न हिप्रदीपव्यङ्गीघटोयत्र नास्ति तत्र प्रदीपसहस्रेणापि शक्यो व्यक्तुं। कृतसङ्केतस्तु करभशब्दोवारणे वारणप्रतिपादकोदृष्टः सङ्केतं कृतमेव वाचकत्वमिति विम्दश्याभिमतमवधारति,—स्थितोऽस्येति। अयमभिप्रायः सर्व्वएव शब्दा सर्व्वाकारार्थाभिधानसमर्था— इति स्थित एवैषां सर्व्वाकारैरर्थैः स्वाभाविकः सम्बन्धः। ईश्वरसङ्केतस्तु प्रकाशकस्य नियामकश्च, तस्य ईश्वरसङ्केतासङ्केतकृतश्चास्य वाचकापभ्रंशविभागस्तदिदमाह,—सङ्केतस्त्वीश्वरस्येति। निदर्शनमाह,—यथेति। ननु शब्दस्य प्राधा निकस्य महाप्रलयसमये प्रधानभावमुपगतस्य शक्तिरपि प्रलीना ततोमहदादिक्रमेणोत्पन्नस्य वाचकस्येव महेश्वरेण सङ्केतेन न शक्या वाचकशक्तिरभिज्वलयितुं विनष्टशक्तित्वादित्यतश्राह,—सर्गान्तरेष्वपीति। यद्यपि सह शक्त्या प्रधान साम्यमुपगतः शब्दस्तथापि पुनराविर्भावं तच्छक्तियुक्त एवाविर्भवति. वर्षातिपातसमधिगतस्वभावद्वीङ्गिभीमेघविसृष्टवारिधारावसेकात्तेन पूर्व्वसम्बन्धसङ्केतानुसारेण सङ्केतः क्रियते भगवता—इति—

सम्प्रतिपत्तिनित्यतया नित्यः शब्दार्थसम्बन्ध इत्यागमिनः प्रतिजानते विज्ञातवाच्यवाचकत्वस्य योगिनः,—

**तज्जपस्तदर्थभावनम्॥ २८॥**

प्रणवस्य जपः। प्रणवाभिधेयस्य चेश्वरस्य भावनं। तदस्य योगिनः प्रणवं जपतः, प्रणवार्थञ्च भावयतश्चित्तमेकाग्रं सम्पद्यते। तथाचोक्तं।

स्वाध्यायाद् योगमासीत योगात् स्वाध्यायमामनेत्।
स्वाध्याययोगसम्पत्त्या परमात्मा प्रकाशते इति॥२८॥

किञ्चास्य भवति? —

**ततः प्रत्यक्चेतनाधिगमोऽप्यन्तरायाभावश्च॥ २९॥**

तस्मात्सम्प्रतिपत्तेः सदृशव्यवहारपरम्परयानित्यतया नित्यःशब्दार्थयोः सम्बन्धः न कूटस्थनित्य—इत्यागमिकाः प्रतिजानते, न पुनरागमनिरपेक्षाः; सर्गान्तरेष्वपि तादृश एव सङ्केत—इति प्रतिपत्तुमीशत इति भावः॥ २७॥

वाचकमाख्याय प्रणिधानमाह,—तज्जपः स्तदर्थभावनम्। व्याचष्टे,–प्रणवस्येति। भावनं पुनःपुनश्चेतसि निवशनम्। ततः किं सिद्ध्यति—इत्यत आह,—प्रणवमिति। एकस्मिन् भगवति आरमति चित्तम्। अत्रैव वैयासिकीं गाथामुदाहरति,—तथा चेति। ततः ईश्वरः समाधितत्फललाभेन तमनुगृह्णाति॥ २८॥

किञ्चापरमस्मात् —ततः प्रत्यक्चेतनाधिगमोऽप्यन्तरायाभावश्च। प्रतीपं विपरीतमञ्चति—विजानाति इति प्रत्यक् स चासौ चेतनश्चेति प्रत्यक्चेतनोऽविद्या-

ये तावत् अन्तरायाः व्याधिप्रभृतयः ते तावदीश्वर-प्रणिधानान्न भवन्ति, स्वरूपदर्शनमप्यस्य भवति । यथैवेश्वरः पुरुषः शुद्धः प्रसन्नः केवलोऽनुपसर्गः । तथायमपि बुद्धेः प्रतिसंवेदी यः पुरुष एव अधिगच्छति ॥ २९ ॥

अथ केऽन्तरायाः ? ये चित्तस्य विक्षेपकाः ? के पुनस्ते, कियन्तोवेति —

**व्याधिस्त्यानसंशयप्रमादालस्याऽविरतिभ्रान्ति-दर्शनाऽलब्धभूमिकत्वाऽनवस्थितत्वानि चित्तविक्षे-पास्तेऽन्तरायाः ॥ ३० ॥**

नवान्तरायाश्चित्तस्य विक्षेपाः । सहैते चित्तवृत्तिभि



वान् पुरुषः तदनेनेश्वरात् शाश्वतिकसत्वोत कर्षसम्पन्नात् विद्यावतीनिवर्त्तयति । प्रतीचश्चेतनस्याधिगमोज्ञानं स्वरूपतोऽस्य भवति । अन्तराया वक्ष्यमानास्तद भावश्च । अस्यविवरणं ये—तावदिति । स्वमात्मातस्य रूपं रूपग्रहणेनाविद्या-समारोपितान् धर्म्मान्निषेधति । नन्वीश्वरप्रणिधानमीश्वरविषयं, कथमिव प्रत्यक्-चेतनं साक्षात् करोत्यतिप्रसङ्गादित्यत आह,— यथैवेश्वर इति । शुद्धः कुटस्थनि-त्यतयोदयव्ययरहितः प्रसन्नः क्लेशवर्ज्जितः केवलोधर्म्माधर्म्मापेतः, अतएवानुपसर्गः उपसर्गाःजात्यायुर्भोगाः । साद्दश्यस्य किञ्चिद्भेदाधिष्ठानत्वादीश्वरात भिनत्ति,— बुद्धेः प्रतिसंवेदीति । तदनेन प्रत्यक्ग्रहणं व्याख्यातं अत्यन्तविधर्म्मिणोरन्यतरार्था-नुचिन्तनं न तदितरस्य साक्षात्काराय कल्पते ; सदृशार्थानुचिन्तनन्तु सादृश्या-न्तरसाक्षात्कारोपयोगितामनुभवति, एकशास्त्राभ्यास इव तत् सदृशार्थशास्त्रान्तर ज्ञानोपयोगितां । प्रत्यासत्तिस्तु स्वात्मनिसाक्षात्कारहेतुर्न परात्मनी सर्व्व-सुवदातम् ॥ २९ ॥

भवन्ति एतेषामभावे न भवन्ति पूर्व्वोक्ताश्चित्तवृत्तयः। व्याधिर्धातुरसकरणवैषम्यं। स्त्यानं अकर्म्मण्यता चित्तस्य। संशयः—उभयकोटिस्पृग्विज्ञानं = स्यादिदं एवं, नैवं स्यादिति। प्रमादः—समाधिसाधनानामभावनं। आलस्यं—कायस्य चित्तस्य च गुरुत्वादप्रवृत्तिः। अविरतिः—चित्तस्य विषयसंप्रयोगात्मा गर्द्धः। भ्रान्तिदर्शनं—विपर्य्ययज्ञानं। अलब्धभूमिकत्वं—समाधिभूमेरलाभः। अनवस्थितत्वं—यल्लब्धायां भूमौ चित्तस्याप्रतिष्ठा = समाधिप्रतिलम्भे हि सति तदवस्थितं स्यादिति—एते चित्तविक्षेपाः नव योगमलाः योगप्रतिपक्षा—योगान्तराया इत्यभिधीयन्ते॥३०॥

पृच्छति—अथक इति। सामान्योत्तरं—य इति। विशेषसंख्ये पृच्छति—क इति। उत्तरं—व्याधीत्यादि सूत्रम्। अन्तरायाः नव, एताश्चित्तवृत्तयोयोगान्तरायाः = योगविरोधिनश्चित्तस्य विक्षेपकाः। चित्तं खल्वमी व्याध्यादयोयोगाद्विक्षिपन्ति अपनयन्तीति विक्षेपाः। योगप्रतिपक्षत्वे हेतुमाह,—सहेत इति। संशयभ्रान्तिदर्शने तावद्वृत्तितया वृत्तिनिरोधप्रतिपक्षौ येपि न वृत्तयोव्याधिप्रभृतयस्तेपि वृत्तिसाहचर्य्यात्तत्प्रतिपक्षा इत्यर्थः। पदार्थान् व्याचष्टे,—व्याधिरिति। धातवोवातपित्त श्लेषाणः शरीरधारणात्। अशितपीताहारपरिणामविशेषोरसः। करणानीन्द्रियाणि। तेषां वैषम्यं न्यूनाधिकभाव इति। अकर्म्मण्यता कर्म्मानर्हता। संशय उभयकोटिस्पृग्विज्ञानं सत्यप्यतद्रूपप्रतिष्ठत्वेनसंशयविपर्य्यासयोरभेदे उभयकोटिस्पर्शास्पर्शरूपाऽवान्तरविशेषविवक्षयात्र भेदोपन्यासः अभावनमकरणं तत्राप्रयत्नइति यावत्। कायस्य गुरुत्वं कफादिना चित्तस्य गुरुत्वं तमसा। गर्द्धस् तृष्णा। मधुमत्यादयः समाधिभूमयः लब्धभूमेर्य्यदि तावतैव सुस्थितं मन्यस्य समाधिभ्रेषः स्यात्ततस्तस्या अपि भूमेरपायः स्यात्! तस्मात् समाधिप्रतिलम्भे तदवस्थितं स्यात्तस्मात्तत्र प्रयतितव्यमिति॥३०॥

### दुःखदौर्मनस्याङ्गमेजयत्वश्वासप्रश्वासाः वि-क्षेपसहभुवः ॥ ३१ ॥

दुःखमाध्यात्मिकं आधिभौतिकं आधिदैविकञ्च । येना-भिहताः प्राणिनस्तदुपघाताय प्रयतन्ते तत् दुखं । दौर्मनस्यं इच्छाविघाताच्चेतसः क्षोभः । यदङ्गान्येजयति—कम्पयति, तदङ्गमेजयत्वं । प्राणोयद्बाह्यं वायुमाचामति स श्वासः । यत्कौष्ठ्यं वायुं निःसारयति स प्रश्वासः । एते विक्षेप-सहभुवः—विक्षिप्तचित्तस्यैते भवन्ति, समाहितचित्तस्यैते न भवन्ति ॥ ३१ ॥



अथैते विक्षेपाः समाधिप्रतिपक्षाः, ताभ्यामे-वाभ्यासवैराग्याभ्यांनिरोद्धव्याः—तत्राभ्यासस्य विषयमुप-संहरन्निदमाह,—

### तत्प्रतिषेधार्थमेकतत्वाभ्यासः ॥ ३२ ॥

न केवलः नवान्तरायाः दुःखादयोप्यस्य तत्सहभुवोभवन्तीत्याह दुःख इत्यादि । प्रतिकूलवेदनीयं दुःखं आध्यात्मिकं, शारीरं व्याधिवशात्, मानसञ्च कामा-दिवशात्, आधिभौतिकं । व्याघ्रादिजनितं, आधिदैविकं ग्रहपीड़ादिजनितं । तच्चेदं दुःखं प्राणिमात्रस्य प्रतीकुलवेदनीयतया हेयमित्याह,—येनाभिहता इति । अनिच्छतः प्राणोयद्बाह्यं वायुमाचामति पिवति प्रवेशयतीति यावत् स श्वासः समाध्यङ्गरेचकविरोधी । अनिच्छतोपि प्राणोयत् कौष्ठ्यं वायुं निःसारयति स प्रश्वासः समाध्यङ्गपूरकविरोधी ॥ ३१ ॥

विक्षेपप्रतिषेधार्थमेकतत्त्वावलम्बनं चित्तमभ्यसेत् । यस्य तु प्रत्यर्थनियतं प्रत्ययं क्षणिकञ्च चित्तं, तस्य सर्व्वमेव चित्तं एकाग्रं, नास्त्येव विक्षिप्तं । यदि पुनरिदं सर्व्वतः प्रत्याहृत्य एकस्मिन्नर्थे समाधीयते ! तदा भवत्येकाग्र-मित्यतो न प्रत्यर्थनियतं । योऽपि सदृशप्रत्ययप्रवाहेन-चित्तमेकाग्रं मन्यते—तस्यैकाग्रता यदि प्रवाहचित्तस्य धर्म्मः तदैकं नास्ति, प्रवाहचित्तं, क्षणिकत्वात् । अथ प्रवाहांशस्यैव प्रत्ययस्य धर्म्मः ? स सर्व्वं सदृशप्रत्ययप्रवाही वा विसदृशप्रत्ययप्रवाही वा ?प्रत्यर्थनियतत्वादेकाग्र एवेति विक्षिप्तचित्तानुपपत्तिः ; तस्मादेकमनेकार्थमवस्थितं चित्त-मिति । यदि च चित्तेनैकेनानन्विताः स्वभावभिन्नाः प्रत्यया जायेरन् अथ कथमन्यप्रत्ययदृष्टस्यान्यः स्मर्त्ता भवेत् ! अन्य-प्रत्ययोपचितस्य कर्म्माशयस्यान्यः प्रत्यय उपभोक्ता भवेत् ! कथञ्चित् समाधीयमानमप्येतद्गोमयपायसीय न्यायमाक्षि-पति ।

किञ्च स्वात्मानुभवापह्नवः चित्तस्यान्यत्वे प्राप्नोति, कथं यदहमद्राक्षं तत् स्पृशामि, यच्चास्प्राक्षं तत्पश्या-मीति—अहमिति प्रत्ययः सर्व्वस्य प्रत्ययस्य भेदे सति प्रत्य-यिन्यभेदेनोपस्थितः एकप्रत्ययविषयोयं अभेदात्मा अह-मिति प्रत्ययः—कथं अत्यन्तभिन्नेषु चित्तेषु वर्त्तमानः सामान्यमेकं प्रत्ययिनमाश्रयेत् !—स्वानुभवग्राह्यश्चायं अभे-दात्मा अहमिति प्रत्ययः । न च प्रत्यक्षस्य माहात्म्यं प्रमा-

णान्तरेणाभिभूयते—प्रमाणान्तरञ्च प्रयत्नबलेनैव व्यवहारं लभते ; तस्मादेकमनेकार्थमवस्थितञ्च चित्तं ॥ ३२ ॥

उक्तार्थोपसंहारसूत्रमवतारयति,—अथैत इति। अथोक्तार्थानन्तरमुपसंहरन्निदं सूत्रमाहेति सम्बन्धनिरोद्धव्यत्वे हेतुरुक्तः। समाधिप्रतिपक्षा इति। यद्यपीश्वर प्रणिधानादित्यभ्यासमात्रमुक्तं तथापि वैराग्यमिह तत्सहकारितया ग्राह्य-मित्याह,—ताभ्यां उक्तलक्षणाभ्यामेवाभ्यासवैराग्याभ्यां निरोद्धव्याः। तत्र—तयोरभ्यासवैराग्ययोर्मध्ये अभ्यासस्यानन्तरोक्तस्येति तत्प्रतिषेधार्थमित्यादि। एकं तत्त्वमीश्वरः प्रकृतत्वादि, वैनाशिकानां तत्सर्व्वमेकाग्रमेव चित्तं नास्ति किञ्चिद्वि-क्षिप्तमिति। तदुपदेशानां तदर्थानाञ्च प्रवृत्तीनां वैयर्थ्यमिति। यस्यत्विति—यस्य मते प्रत्यर्थे अर्थ्यमाणे एकस्मिन्ननेकस्मिन् वा नियतं यावदर्थाभासमुत्पन्नं तत्रैव समाप्तमनन्यगामि।अर्थान्तरं तावत्प्रथमं गृहीत्वार्थान्तरमपि पश्चात् कस्मान्नगृह्णातीत्यत आह,—

"क्षणिकञ्च"। क्षणस्याभेद्यत्वेन पूर्व्वपश्चाद्भावस्याप्यभावः। अस्मन्नयेत्वऽक्षणिकं चित्तं—स्वविषये एकस्मिन्ननेकस्मिन्वानवस्थितं प्रतिक्षणं तत्तद्विषयोपादानपरित्या-गाभ्यां विषयाणि यतः विक्षिप्तमतोविक्षेपपरिणाममपनीय शक्यकाग्रताधातुमिति तदुपदेशप्रवृत्त्योर्नानर्थक्यमित्याह,—यदिपुनरिदमिति। उपसंहरति। अतोनेति। वैनाशिकमुत्थापयति—योपीति। माभूदेकस्मिन् क्षणिकेचित्ते एकाग्रताधानप्रयत्नः, चित्तसन्तानेत्वनादावक्षणिके विक्षेपमपनीय एकाग्रता धास्यत इत्यर्थः। तदेतद्वि-कल्पा दूषयति,—तस्य दर्शने एकाग्रता यदि प्रवाहचित्तस्य चित्तसन्तानस्य वा धर्म्मः? तत्रैकं क्रमवदुत्पादेषु प्रत्ययेष्वनुगतं नास्ति प्रवाहचित्तम्। कुतो यदि यावदस्ति तस्य सर्व्वस्य क्षणिकत्वादक्षणिकस्य चासत्वाद्भवतां दर्शने—इति भावः। द्वितीयं कल्पं गृह्णाति—अथेति। सांवृतस्य प्रवाहस्यांशः प्रत्ययः परमार्थसन् तस्य प्रत्ययस्यैकाग्रता प्रयत्नसाध्योधर्म्मः। दूषयति—स सर्व्वः सांवृतप्रवाहापेक्षया सदृश-प्रवाही वा विसदृशप्रवाही वा?—अतः परमार्थसता रूपेण प्रत्यर्थनियतत्वात् यदा-र्थाभास उत्पन्नस्तत्र समाप्तत्वादेकाग्र एवेति विक्षिप्तचित्तानुपपत्तिः। यदपनयेनैका-ग्रता प्रतीयते—इति। उपसंहरन्ति,—तस्मादिति। इतोऽपि चित्तमेकमनेकार्थ-

मवस्थितं चेत्याह,—ग्रदिति। यथाहि मैत्रेणाधीतस्य न चैवः स्मरति, यथा मैत्रेणोपचितस्य पापस्य वा कर्म्माशयस्य फलं तदसम्बन्धी चैवो न भुङ्क्ते। एवं प्रत्ययान्तरदृष्टस्य प्रत्ययान्तरं न स्मरेत्, प्रत्ययान्तरोपचितस्य वा कर्म्माशयस्य फलं न प्रत्ययान्तरमुपभुञ्जीतेत्यर्थः। ननु नातिप्रसज्यते कार्य्यकारणभावे सतीति विशेषणात् श्राद्धवैश्वानरीयेष्ट्यादावकर्तृमातृपितृपुत्रादिगामिफलदर्शनात् मधुररसभावितानां वा आम्रबीजादीनां परम्परया फलमाधुर्य्यनियमादित्यत आह,—समाधीयमानमप्येतदिति। अयमभिसन्धिः—कः खल्वेकसन्तानवर्त्तिनां प्रत्ययानां सन्तानान्तरवर्त्तिभ्यः प्रत्ययेभ्योविशेषो येनैकसन्तानवर्त्तिना प्रत्ययेनानुभूतस्योपचितस्य च कर्म्माशयस्य तत्सन्तानवर्त्त्येव प्रत्ययःस्मर्त्ता भोक्ता च स्यात् नान्यसन्तान वर्त्ती — नहि सन्तानी नाम कश्चिदस्ति वस्तु सत् यएनं सन्तानिनं सन्तानान्तरवर्त्तिभ्यो भिन्द्यात्। नच काल्पनिकोभेदः क्रियायामापद्यते--नखलुकल्पिताग्निभावोमाणवकः पचति। न च कार्य्यकारणसम्बन्धोपि वास्तवः सहभूवोसव्येतरविषाणयोरिवाभावात् असहभुवोरपि प्रत्युत्पन्नाश्रयत्वायोगात्=नह्यतीतानागतोव्यासज्य प्रत्युत्पन्नं वर्त्तितुमर्हतः। तस्मात् सन्तानेन वा कार्य्यकारणभावेन वा स्वाभाविकेनानुपहिताः परमार्थसन्तः प्रत्यया परस्परासंस्पृष्टत्वेन स्वसन्तानवर्त्तिभ्यः परसन्तानवर्त्तिभ्योवा प्रत्ययान्तरेभ्यो न भिद्यन्ते=सोयं गोनयच्च पायसञ्चाधिकृत्य प्रवृत्तोन्यायोगोमयं पायसं गव्यत्वादुभयसिद्धपायसवदिति तमाक्षिपति। न्यायाभासत्वेन ततोप्यविकल्पादिति=नचात्र कृतनाशाकृताभ्यागमं चोद्यं=यतश्चित्तमेव कर्म्मणां कर्त्तृ=तदेव तज्जनिताभ्यां सुखदुःखाभ्यां युज्यते; सुखदुःखेच चितिच्छायापन्नं चित्तं भुङ्क्ते--इति पुरुषे भोगाभिमानः चितिचित्तयोरभेदग्रहादिति। स्वप्रत्ययं प्रतीत्य समुत्पन्नानां स्वभावएवैषां तादृशो यत्त एव स्मरन्ति, फलं चोपभुञ्जते=नत्वन्ये। नच स्वभावा नियोगपर्य्यनुयोगावर्हन्ति एवं भवतुमैवम्भूत इति वा कस्मान्नैवमिति चेति यः पूर्व्वोक्ते न परितुष्यति तंप्रत्याह,=किञ्चस्वात्मेति। उदयव्ययधर्म्माणामनुभवस्मृतीनाञ्च नानात्वेपि तदाश्रयमभिन्नं चित्तमहमिति प्रत्ययः प्रतिसन्धानः कथमत्यन्तभिन्नान् प्रतयानालम्बेत। ननुग्रहणस्मरणरूपकारणभेदात् पारोक्ष्यापारोक्ष्यरूपविरुद्धधर्म्म संसर्गाद्वा न प्रत्यभिज्ञानं नामैकःप्रत्ययः=यतः प्रत्ययिनश्चित्तस्यैकता स्यादित्यत आह,=स्वानुभवेति। ननु कारणभेदे विरुद्धधर्म्मसंसर्गोवेवबाधकावुक्तौ-

यस्य चित्तस्यावस्थितस्येदं शास्त्रेण परिकर्म्म निर्द्दिश्यते, तत्कथं ?—

**मैत्रीकरुणामुदितोपेक्षाणां सुखदुःखपुण्यापुण्यविषयाणां भावनातश्चित्तप्रसादनम्॥ ३३॥**

तत्र सर्व्वप्राणिषु सुखसम्भोगापन्नेषु मैत्रीं भावयेत्। दुःखितेषु करुणां। पुण्यात्मकेषु मुदितां। अपुण्यशीलेषु-पेक्षाम्:—एवमस्य भावयते शुक्लोधर्म्मउपजायते—ततश्चित्तं प्रसीदति प्रसन्नमेकाग्रं स्थितिपदं लभते ॥३३॥



**प्रच्छर्द्दनविधारणाभ्यां वा प्राणस्य ॥३४॥**

कौष्ठस्य वायोर्नासिकापुटाभ्यां प्रयत्नविशेषात् वमनं प्रच्छर्द्दनं विधारणं प्राणायामः ताभ्यां वा मनसः स्थितिः संप्रसादयेत् ॥ ३४ ॥

विल्लत आह,—नच प्रत्यक्षस्येति। प्रत्यक्षानुसारतएवसामग्रभेदः पारीक्षापारीक्षधर्म्माविरोधश्ची पयादितोन्याय कणिकायां अक्षणिकस्यचार्थक्रियान्यायकणिका ब्रह्मतत्वसमीक्षाभ्यामुपपादितेति सर्व्वमवदातम् ॥३२॥

अपरिकर्म्मितमनसोसूयादिमतसमाधितदुपायसम्पत्त्यनुत्पादात् चित्तप्रसादनोपायानसूयादिविरोधिनः प्रतिपादयितुमुपक्रमते—यस्य,—चित्तस्यावस्थितस्येदमिति। मैत्रीकरुणेत्यादि प्रसादनान्तम्। सुखितेषु मैत्री सौहार्द्दं भावयेत ईर्षाकालुष्यं निवर्त्तते चित्तस्य। दुःखितेषुच करुणामात्मनीव परस्मिन दुःख प्रहाणेच्छां

विषयवती वा प्रवृत्तिरुत्पन्ना मनसः स्थिति निबन्धनी ॥ ३५ ॥

नासिकाग्रे धारयतोऽस्य या दिव्यगन्धसंवित्सा गन्धप्रवृत्तिः जिह्वाग्रे रससम्वित् तालुनि रूपसंवित् जिह्वामध्ये स्पर्शसंवित् जिह्वामूले शब्दसंवित् इत्येताः प्रवृत्तय उत्प-

भावयतः परापकारचिकीर्षाकालुष्यं चेतसोनिवर्त्तते। पुण्यशीलेषु प्राणिषु मुदितां हर्षं भावयतः असूयाकालुष्यं चेतसो निवर्त्तते। अपुण्यशीलेषु चोपेक्षां माध्यस्थ्यं भावयतोऽमर्षकालुष्यं चेतसोनिवर्त्तते। ततश्चास्य राजसतामसधर्म्म-निवृत्तौ सात्विकः शुक्लोधर्म्म उपजायते। सत्वोत्कर्षसम्पन्नः सम्भवति। वृत्ति-विरोधपक्षे तस्य प्रसादस्वाभाव्याच्चित्तं प्रसीदति प्रसन्नञ्च वक्ष्यमाणेभ्य उपायेभ्यः एकाग्रं स्थितिपदं लभते। असत्यां पुनर्मैत्र्यादिभावनायां नतेऽपायाः स्थित्यै कल्पन्ते—तानिदानीं स्थित्युपायानाह॥ ३३॥

वाशब्दो वक्ष्यमाणोपायान्तरापेक्षो विकल्पार्थेन मैत्रादिभावनापेक्षया तया सह समुच्चयात्। प्रच्छर्द्दनं विवृणोति—कौष्ठ्यस्येति। प्रयत्नविशेषात् योग-शास्त्रविहितात् येन कौष्ठ्योवायुर्नासिकापुटाभ्यां शनैरेच्यते। विधारणं विवृणोति विधारणं प्राणायामः रेचितस्य कौष्ठ्यस्य वायोर्यदायामो वहिरेव स्थापनं न तु सह साप्रवेशनं तदेताभ्यां प्रच्छर्द्दनविधारणाभ्यां वायोर्लघुकृतशरीरस्य मनः स्थितिपदं लभते। अत्रचोत्तरसूत्रगतात्स्थितिनिबन्धनीतिपदात् स्थितिग्रहणमाकृष्य सम्पा-दयेदित्यर्थं प्राते न सम्बन्धनीयः॥ ३४॥ स्थितावुपायान्तरमाह

विषयवती वा प्रवृत्तिरुत्पन्ना मनसः स्थितिनिबन्धनी। व्याचष्टे—नासिकाग्रे धारयत इति। धारणाध्यानसमाधीन् कुर्व्वतस्तज्जयात् या दिव्यगन्धसंवित् साक्षात् कारः एवमन्यास्वपि प्रवृत्तिषु योज्यं। एतच्चागमात् प्रत्येतव्यं नोपपत्तितः। स्यादेतत् किमेतादृग्भिः वृत्तिभिः कैवल्यं प्रत्यनुपयोगिभिरित्यत आह। एतावृत्तयोऽल्पेनैव कालेनोत्पन्नाश्चित्तमीश्वरविषयां वा विवेकख्यातिविषयांवा स्थितिं निवध्नन्ति

श्चित्तं स्थितौ निबध्नन्ति संशयं विधमन्ति समाधिप्रज्ञा-
यां च द्वारीभवन्तीति। एतेन चन्द्रादित्यग्रहमणिप्रदीप-
रश्म्यादिषु प्रवृत्तिरुत्पन्ना विषयवत्येव वेदितव्या। यद्यपि
हि तत्तच्छास्त्रानुमानाचार्य्योपदेशैरवगतमर्थतत्त्वं सद्भूत-
मेव भवति एतेषां यथाभूतार्थप्रतिपादनसामर्थ्यात्तथापि
यावदेकदेशोपि कश्चित् न स्वकरणसंवेद्यो भवति तावत्
सर्व्वं परोक्षमिव अपवर्गादिषु सूक्ष्मेष्वर्थेषु न दृढां बुद्धि-
मुत्पादयति तच्छास्त्रानुमानाचार्य्योपदेशोपोद्बलनार्थमेवा-
वश्यं कश्चित् विशेषः प्रत्यक्षीकर्त्तव्यः, तत्र तदुपदिष्टार्थैक-
देशप्रत्यक्षत्वे सति सर्व्वं सुसूक्ष्मविषयमप्यापवर्गात् श्रद्धी-
यते। एतदर्थमेवेदं चित्तपरिकर्म्म निर्द्दिश्यते। अनियतासु
वृत्तिषु तद्विषयायां वशीकारसंज्ञायां उपजातायां समर्थं
स्यात् तस्य तस्यार्थस्य प्रत्यक्षीकरणायेति। तथाच सति
श्रद्धावीर्य्यस्मृतिसमाधयोऽस्याः प्रतिबन्धेन भविष्यन्तीति॥

नन्वस्य विषयावृत्तिः कथमन्यत्र स्थितं निबध्नातीत्यत आह— संशयं विधमन्ति अप-
सारयन्ति अतएव समाधिप्रज्ञायां इतिवृत्त्यन्तराणामप्यागमसिद्धानां विषयवत्त्वमति-
देशयति। एतेनेति। नन्वागमादिभिरवगतेष्वर्थेषु कुतः संशय इत्यत आह।

यद्यपीहीति। श्रद्धामूलोहि योग उपदिष्टार्थैकदेशप्रत्यक्षीकरणे च श्रद्धा-
तिशयी जायते तन्मूलाश्च ध्यानादयोस्याप्रत्यूहं भवन्तीत्यर्थः। विशोका वा ज्योति-
ष्मती। विगतशोका दुःखरहिता ज्योतिष्मती ज्योतिरस्या अस्तीति ज्योतिष्मती
प्रकाशरूपा हृदयपुण्डरीक इति। उदरउरसोर्मध्ये यत्पद्ममधोमुखं तिष्ठति अष्ट-
दलं रेचकप्राणायामेन तदूर्द्ध्वमुखं कृत्वा तत्र चित्तं धारयेत् तन्मध्ये सूर्य्यमण्डल
मकारो जागरितस्थानं तस्योपरि चन्द्रमण्डलं उकारः स्वप्नस्थानं तस्योपरि वह्नि-
मण्डलं मकारःसुषुप्तिस्थानं तस्योपरि परं व्योमात्मकं ब्रह्मनादं तुरीयस्थानं अर्द्धमात्र

विशोका वा ज्योतिष्मती ॥ ३६ ॥

प्रवृत्तिरुत्पन्ना मनसः स्थितिनिबन्धनीति अनुवर्त्तते हृदयपुण्डरीके धारयतो या बुद्धिसंवित् बुद्धिसत्वं हि भास्वरमाकाशकल्पं तत्र स्थितिवैशारद्यात् प्रवृत्तिः सूर्येन्दुग्रहमणिप्रभारूपाकारेण विकल्पते। तथास्मितायां समापन्नं चित्तं निस्तरङ्गं महोदधिकल्पं शान्तमनं तमस्मिता मात्रं भवति। यत्रेदमुक्तं—तमनुमात्रमात्मानमनुविद्यास्मीति एवं तावत् प्रतिजानीते इत्येषद्वयी विशोका विषयवती अस्मिता मात्रा च प्रवृत्तिर्ज्योतिष्मतीत्युच्यतेऽत आह। यो योगिनश्चित्तं स्थितिपदं लभते इति ॥ ३६ ॥



मुदाहरन्ति ब्रह्मवादिनः। तत्कर्णिकायामुर्द्धमुखी सूर्य्यादिमण्डलमध्यगा ब्रह्मनाड़ी ततोप्यूर्द्ध्वं प्रवृत्ता सुषुम्ना नाम नाड़ी तया खलु वाह्यान्यपि सूर्य्यादीनि मण्डलानि प्रोतानि साहि चित्तस्थानं तस्यां धारयतो योगिनश्चित्तसंवित् उपजायते ॥ उपपत्तिपूर्व्वकं बुद्धिसंविदः आकारमादर्शयति। बुद्धिसत्वं हीति आकाशकल्पमिति व्यापितामाह।

सूर्य्यादीनां प्रभास्तासां रूपं तदाकारेण विकल्पते नानारूपा भवति। मनसश्चात्र बुद्धिरभिमतं न तु महत्तत्वं तस्य च सुषुम्नास्थस्य वैकारिकाहङ्कारजन्मनः सत्वबहुलतया ज्योतीरूपता विवक्षिता तत्तद्विषयगोचरतया च व्यापित्वमपि सिद्धं ॥ अस्मिता कार्य्ये मनसि समापत्तिं दर्शयित्वाऽस्मितासमापत्तेः स्वरूपमाह।

तथेति। शान्तमपगतरजस्तमस्तरङ्गं अनन्तं व्यापि अस्मितामात्रं न पुनर्नानाप्रभारूपं आगमान्तरेण स्वमतं समीकरोति। यत्रेदमुक्तं पञ्चशिखेन तमणुं दुरधिगमत्वादात्मानमहङ्कारास्पदमनुविद्यानुचिन्त्यास्मीत्येवं तावज्जानीत इति—

वीतरागविषयं वा चित्तम् ॥ ३७ ॥

स्वप्ननिद्राज्ञानालम्बनं वा ॥ ३८ ॥

यथाभिमतध्यानाद्वा ॥ ३९ ॥

वीतरागचित्तालम्बनोपरक्तं वा योगिनश्चित्तं स्थितिपदं लभते इति ॥ ३७ ॥

स्वप्नज्ञानालम्बनं निद्राज्ञानालम्बनं वा तदाकारं योगिनश्चित्तं स्थितिपदं लभते इति ॥ ३८ ॥

यदेवाभिमतं तदेव ध्यायेत् तत्र लब्धस्थितिकमन्यत्रापि स्थितिपदं लभत इति ॥ ३९ ॥



स्यादेतत् नानाप्रभारूपी भवतु ज्योतीष्मती कथं अस्मितामात्ररूपा ज्योतिष्मतीत्यत आह ।

एषाद्वयीति । विधूतरजस्तमोमलास्मितैव सत्वमयी ज्योतिरितिभावः । द्विविधाया अपि ज्योतिष्मत्याः फलमाह ।

यथेति । वीतरागविषयं वा चित्तं । वीतरागाः कृष्णद्वैपायनप्रभृतयः तेषां चित्तं तदेवालम्बनं तेनोपरक्तमिति । स्वप्ननिद्राज्ञानावलम्बनं वा । यदा खल्वयं स्वप्ने-विविक्तवनसन्निवेशवर्त्तिनीमुत्कीर्णमिव चन्द्रमण्डलात् कोमलमृणालशकलानुकारिभिरङ्गप्रत्यङ्गैरुपेतामभिजाय चन्द्रकान्तमणिमयीमतिसुरभिमालतीमल्लिकामालाहारिणीं मनोहरां भगवती महेश्वरस्य प्रतिमामाराधयन्नेव प्रबुद्धप्रसन्नमनास्तदा तामेव स्वप्नज्ञानालम्बनीभूतामनुचिन्तयतस्तस्य तदेकाकार मनसस्तत्रैव चित्तं स्थितिपदं लभते । निद्रा चेह सात्विकीग्रहीतव्या यस्यां प्रबुद्धस्य सुखमहमस्वाप्स मिति प्रत्यवमर्षो भवति । एकाग्रं हि तस्यां मनोभवति तावन्मात्रेण चोक्तं । एतदेव ब्रह्मविदो ब्रह्मणोरूपमुदाहरन्ति ।

परमाणुपरममहत्वान्तोऽस्य वशीकारः॥४०॥

सूक्ष्मे निविशमानस्य परमाण्वन्तं स्थितिपदं लभतइति स्थूले निविशमानस्य परममहत्वान्तं स्थितिपदं चित्तस्य एवं तामुभयीं कोटिमनुधावतोयोस्याप्रतिघातः सपरोवशीकारः तद्वशीकारात् परिपूर्णं योगिनश्चित्तं न पुनरभ्यासकृतं परिकर्म्मापेक्षत इति ॥ ४० ॥

अथ लब्धस्थितिकस्य चेतसः किं स्वरूपा किं विषया वा समापत्तिरिति,तदुच्यते—

क्षीणवृत्तेरभिजातस्येवमणेर्ग्रहीतृग्रहणग्राह्येषु तत्स्थतदञ्जनता समापत्तिः॥ ४१ ॥

क्षीणवृत्तेरिति प्रत्यस्तमितप्रत्ययस्येत्यर्थः अभिजातस्येव मणेरिति दृष्टान्तोपादानं । यथा—स्फटिक उपाश्रयभेदात्

सुषुप्तावस्थेति । ज्ञानञ्च ज्ञेयरहितं न शक्यं गोचरयितुमिति ज्ञेयमपि गोचरीक्रियते ॥ ३९ ॥

किं बहुना यदेवाभिमतं तत्तद्देवतारूपमिति कथं पुनः स्थितिपदमावौ भावोवगन्तव्य इत्यत आह ।

परमाणु परममहत्वान्तोऽस्यवशीकारः । व्यचष्टे । सूक्ष्म इति उक्तमर्थं पिण्डीकृत्य वशीकारपदार्थमाह—एवं तामुभयीमिति । वशीकारस्यावान्तरफलमाह ।

तद्वशीकारादिति । तदेवं चित्तस्थितेरुपाया दर्शिताः । लब्धस्थितिकस्य वशीकारोपि दर्शितः । सम्प्रति लब्धस्थितिकस्य चेतसः किं विषयः किं रूपश्च सम्प्रज्ञातो भवतीति पृच्छति—अथेति । अनोत्तरं सूत्रमवतारति तदुच्यत इति॥ ४०॥

तत्तद्रूपोपरक्त उपाश्रयरूपाकारेण निर्भासते। तथा ग्राह्यालम्बनोपरक्तं चित्तं ग्राह्यसमापन्नं ग्राह्यस्वरूपाकारेण निर्भासते। तथा भूतसूक्ष्मोपरक्तं भूतसूक्ष्मसमापन्नं भूतसूक्ष्मस्वरूपाभासं भवति। तथा स्थूलालम्बनोपरक्तं स्थूलरूपसमापन्नं स्थूलरूपाभासं भवति। तथा विश्वभेदोपरक्तं विश्वभेदसमापन्नं विश्वरूपाभासं भवति। तथा ग्रहणेष्वपीन्द्रियेष्वपि द्रष्टव्यं। ग्रहणालम्बनोपरक्तं ग्रहणसमापन्नं ग्रहणस्वरूपाकारेण निर्भासते। तथा गृहीतृपुरुषालम्बनोपरक्तं गृहीतृपुरुषसमापन्नं गृहीतृपुरुषस्वरूपाकारेण निर्भासते। तथा मुक्तपुरुषालम्बनोपरक्तं मुक्तपुरुषसमापन्नं मुक्तपुरुषस्वरूपाकारेण निर्भासते। तदेवमभिजात-

सूत्रं पठति—क्षीणवृत्तेरित्यादि समापत्तिरन्तम्। तद्व्याचष्टे क्षीणेति। अभ्यासवैराग्याभ्यांक्षीणराजसतामसप्रमाणादिवृत्तेश्चित्तस्य व्याख्यानं। प्रत्यस्तमितप्रत्ययस्येति। तदनेन चित्तसत्वस्य स्वभावस्वच्छस्य रजस्तमोभ्यामनभिभव उक्तः दृष्टान्तं स्पष्टयति। यथेति। उपाश्रय उपाधिःजपाकुसुमादिः उपरक्तस्तच्छायापन्नः उपाश्रयस्य यदात्मीयं रूपं लोहितनीलादि तदेवाकारस्तेन लक्षितो निर्भासते। दार्ष्टान्तिके योजयति। तथाग्राह्येति। ग्राह्यञ्च तदालम्बनञ्च तेनोपरक्तं तदनुविद्धं तदनेन ग्रहीतृग्रहणाभ्यां व्यवच्छिनत्ति। आत्मीयमन्तःकरणरूपमपिधाय ग्राह्यसमापन्नं ग्राह्यतामिव प्राप्तमिति यावत् अतोग्राह्यस्वरूपाकारेण निर्भासते ग्राह्योपरागमेव स्थूलसूक्ष्मताभ्यां विभजते। भूतसूक्ष्मेति विश्वभेदश्चेतनाचेतनस्वभावो गवादि र्घटादिश्च द्रष्टव्यः तदनेन वितर्कविचारानुगतौ समाधी दर्शितौ तथा ग्रहणेष्वपीन्द्रियेष्विति गृह्यन्ते एभिरर्था इति ग्रहणानीन्द्रियाणि एतदेव स्पष्टयति। ग्रहणालम्बनेति। ग्रहणञ्चालम्बनञ्च तदिति ग्रहणालम्बनं। तेनोपरक्तमनुविद्धमात्मीयमन्तःकरणरूपमपिधाय ग्रहणमिव वहिः करणमिवापन्नमिति। तदनेनानन्दानु

मणिकल्पस्य चेतसो गृहीतृग्रहण-ग्राह्येषु पुरुषेन्द्रियभूतेषु या तत्स्थतदञ्जनता, तेषु स्थितस्य तदाकारापत्तिः सा समापत्तिरित्युच्यते ॥ ४२ ॥

तत्र शब्दार्थज्ञान विकल्पैः संकीर्णा सवितर्का समापत्तिः ॥ ४३ ॥

तद्यथा—गौरिति शब्दो गौरित्यर्थो गौरिति ज्ञान मित्यविभागेन विभक्तानामपि ग्रहणं दृष्टं—विभजमाना

गतमुक्तास्थितानुगतमाह तथा ग्रहीतृ पुरुषेति । अस्मितास्पदं हि ग्रहीता पुरुषइति भावः । पुरुषत्वाविशेषादनेनैवमुक्तोपि पुरुषः शुकप्रह्लादादिः समाधिविषयतया संग्रहीतव्य इत्याह । तथासु क्तेति उपसंहरणतत्स्थ तदञ्जनता पदं व्याचष्टे । तदेवमिति । तेषु ग्रहीतृ ग्रहण ग्राह्येषु स्थितस्य धारितस्य ध्यानपरिपाकवशाद-पहृतरजस्तमोमलस्य चित्तसत्वस्य या तदञ्जनता तदाकारता सा समापत्तिःसम्प्रज्ञात-लक्षणो योगउच्यते । तत्र च गृहीतृग्रहणग्राह्येष्विति सौत्रः पाठक्रमोर्थक्रम-विरोधान्नादर्त्तव्यः एवं भाष्ये पि प्रथमं भूतसूक्ष्मोपन्यासोप्यनादरणीय इति सर्व्वं रमणीयम् ।

सामान्यतः समापत्तिरुक्ता सेयमवान्तरभेदाच्चतुर्व्विधा भवति । तद्यथा सवितर्का निर्व्वितर्का सविचारा निर्व्विचाराचेति । तत्र सवितर्कायाः समापत्ते-र्लक्षणमाह । तत्रेत्यादि । तासु समापत्तिषु मध्ये सवितर्का समापत्तिः प्रतिप-त्तव्या कीदृशी शब्दस्य अर्थस्य ज्ञानच तेषां विकल्पः वस्तुतो भिन्नानामपि शब्दादी-नामितरेतराध्यासात् विकल्पोप्येकस्मिन् भेदमादर्शयति भिन्नेषु चाभेदं तेन शब्दार्थज्ञानविकल्पैः सङ्कीर्णा व्यामिश्रेत्यर्थः । तद्यथा गौरिति शब्द इति । गौरितुप्रपात्तयोः अर्थज्ञानयोः शब्दाभेदविकल्पितदर्शितगौरित्यर्थ इति गौरितु-

श्रन्ये शब्दधर्म्मा अन्येऽर्थधर्म्मा अन्येविज्ञानधर्म्मा इत्येतेतषां विभक्ताः पन्थाः, तत्र समापन्नस्य योगिनोयोगवाद्यर्थः समाधिप्रज्ञायां समारूढः सचेत्शब्दज्ञानविकल्पानुविद्ध उपावर्त्तते सा संकीर्णा समापत्तिः=सवितर्केत्युच्यते। यदा पुनः शब्दसङ्केतस्मृतिपरिशुद्धौ श्रुतानुमानज्ञानविकल्पशून्यायां समाधिप्रज्ञायां स्वरूपमात्रेणावस्थितोऽर्थस्तत्स्वरूपाकारमात्रतयैवावच्छिद्यते सा च निर्व्वितर्का समापत्तिः

शान्तयोः शब्दज्ञानयोरर्थाभेदविकल्पगौरितिज्ञानमिति गौरितुशपात्तयोः शब्दार्थयो ज्ञानाभेदविकल्पन्तदेव विनिर्भागेन विभक्तानामपि शब्दार्थज्ञानानां ग्रहणं लोके दृष्टं द्रष्टव्यम्। यद्यविभागेन ग्रहणं। कुतस्तर्हिविभाग इत्यत आह। विभाव्यमानाश्चान्वयव्यतिरेकाभ्यां परिक्षकैरन्ये शब्दधर्म्मा ध्वनिपरिणाममात्रस्य शब्दोदात्तादयो धर्म्माः अन्ये अर्थस्य जड़त्वमूर्त्तादयः अन्ये प्रकाशमूर्त्ति विरहादयो ज्ञानस्य धर्म्माः इति तस्मादेतेषां विभक्ताःपन्थाः स्वरूपभेदोन्नयनमार्गाः। तत्र विकल्पिते गवाद्यर्थे समापन्नस्येति तदनेन योगिनो परं प्रत्यक्षमुक्तं शेषं सुगमम्। सूत्रं योजयितुं प्रथमतस्तावन्निर्व्वितर्कां व्याचष्टे—यदापुनरिति। परिशुद्धिरपनयः शब्दसङ्केतः स्मरणम्। पूर्व्वे खल्वागमानुमाने प्रवर्त्तेते। सङ्केतश्चायं गौरिति शब्दार्थज्ञानानामितरेतराध्यासात्मा ततश्चागमानुमानविकल्पौ भवतः। तेन तत्पूर्व्वा समाधिप्रज्ञा सवितर्का। यदा पुनरर्थमात्रप्रवणेन चेतसार्थमात्राहतेन तदभ्यासान्नान्तरीयकतामुपगता सङ्केतस्मृतिस्त्यक्ता तत् त्यागे च श्रुतानुमानज्ञान विकल्पौ तत् मूलौ त्यक्तौ तदा तच्छून्यायां समाधिप्रज्ञायां स्वरूपमात्रेणावस्थितोऽर्थ तत् स्वरूपमात्रतयैव नतुविकल्पितेनाकारेण परिच्छिद्यते, सा निर्व्वितर्का समापत्तिरिति तद्योगिनां परं प्रत्यक्षम् असदारोपगन्धस्याप्यभावात्। स्यादेतत्—परेण प्रत्यक्षेणार्थतत्वं गृहीत्वा योगिन उपपादयन्ति उपदिशन्ति च कथं अतद्विषयाभ्यामागमपरार्थानुमानाभ्यां सोऽर्थं उपदिश्यते उपपाद्यते च तस्मादागमानुमाने तद्वि-

तत् परं प्रत्यक्षं, तच्च श्रुतानुमानयोर्बीजं ततः श्रुतानु-
माने प्रभवतः। नच श्रुतानुमानज्ञानसहभूतं तद्दर्शनं
तस्मादसङ्कीर्णं प्रमाणान्तरेण योगिनो निर्व्वितर्कसमाधिजं
दर्शनमिति ॥४३॥ निर्व्वितर्कायाः समापत्तेरस्याः सूत्रेण
लक्षणं द्योत्यते—

**स्मृतिपरिशुद्धौ स्वरूपशून्येवार्थमात्रनिर्भासा**
**निर्व्वितर्का ॥ ४४ ॥**

या शब्दसङ्केतश्रुतानुमानज्ञानविकल्पस्मृतिपरिशुद्धौ
ग्राह्यस्वरूपोपरक्ता प्रज्ञा स्वमिव प्रज्ञारूपं ग्रहणात्मकं



षये ते च विकल्पाविति परमपि प्रत्यक्षं विकल्प एवेत्यत आह—तच्च श्रुतेति। यदि
हि सवितर्कमिति श्रुतानुमानसहभूतं तदनुषक्तं स्यात्भवेत् सङ्कीर्णं तयोस्तु बीजमेवै-
तत् ततोहि श्रुतानुमाने प्रभवतः। नच यद्यस्य कारणं तत्तद्विषयं भवति। न
हि धूमज्ञानं वह्निज्ञानकारणमिति वह्निविषयं। तस्मादविकल्पेन प्रत्यक्षेण
गृहीत्वा विकल्पोपदिशति च उपसंहरति—तस्मादिति ॥ ४३ ॥

व्याख्येयसूत्रं योजयति निर्वितर्काया इति।

स्मृतिपरिशुद्धावित्यादि सूत्रं। शब्दसङ्केतश्च श्रुतञ्चानुमानं च तेषां ज्ञानमेव
विकल्पः तस्मात् स्मृतिः तस्याः परिशुद्धिरपगमः तस्यां। अत्र च सङ्केतस्मृति-
परिशुद्धिर्हेतुः श्रुतादिज्ञानस्मृतिपरिशुद्धिश्च हेतुमती अनुमानशब्दश्च कर्म्म-
साधनोनुमेयवाचकः। स्वमिवेति। इवकारः भिन्नक्रमः। त्यक्तेति पदान्तरं।
द्रष्टव्यविषयविप्रतिपत्तिं निराकरोति—तस्या एकेति। एकां बुद्धिमुपक्रमते आर-
भत इत्येकबुद्ध्युपक्रम तदनेन परमाणवो नानात्मनो न वितर्कविषया इति उक्तं

त्यक्त्वा पदार्थमात्रस्वरूपा ग्राह्यस्वरूपापन्नेव भवति, सा निर्व्वितर्का समापत्तिः। तथाच व्याख्यातं। तस्या एकबुद्ध्युपक्रमो ह्यर्थात्मा अनुप्रचयविशेषात्मा गवादिर्घटादिर्व्वा लोकः सच संस्थानविशेषो भूतसूक्ष्माणां साधारणोधर्म्म आत्मभूतफलेन व्यक्तेनानुमितः स्वव्यञ्जकाञ्जनः प्रादुर्भवति। धर्म्मान्तरोदये च तिरोभवति— सएषधर्म्मो अवयवीत्युच्यते

भवति योग्यत्वेऽपि तेषां परमसूक्ष्माणां नानाभूतानां महत्वैकार्थसमतैकत्व निर्भासप्रत्ययविशेषत्वायोगात्। अस्तुतर्हि परमार्थसत्सु परमाणुषु सा वृत्तिः प्रतिभासधर्म्मः स्थौल्यामित्यत आह। अर्थात्मेति। नासति बाधके स्थूलत्वमनुभवसिद्धं शक्यापह्नवमिति भावः। तत्र ये पश्यन्ति द्व्यणुकादिक्रमेण गोघटादयउपजायन्ते इति तान प्रत्याह। अणुप्रचयेति। अणूनां प्रचयः स्थूलरूपपरिणामः स च विशिष्यतेऽन्यस्मात् परिणामान्तरात् सएवात्मा स्वरूपं यस्य स तथोक्तःगवादिभोगायतनं घटादिर्विषयः तच्चैतदुभयमपि लोक्यते इति लोकः। नन्वेषभूतसूक्ष्मेभ्योभिन्नोऽभिन्नः वा स्यात् भिन्नश्चेत् कथं तदाश्रयः कथञ्चतदाकारः नहि घटः पटादन्यःतदाकारः तदाश्रयो वा—अभिन्नश्चेत् तद्वदेव सूक्ष्मोसाधारणश्च स्यात् अत आह सचेति। अयमभिप्रायः नैकान्ततः परमाणुभ्योभिन्नघटादिरभिन्नो वा भिन्नत्वे गवाश्ववद्धर्म्मधर्म्मिभावानुपपत्तेः अभिन्नत्वे धर्म्मिरूपवत्तदनुपपत्तेः तस्मात् कथञ्चिद्भिन्नः कथञ्चिदभिन्नश्चास्थेय स्तथाच सर्व्वमुपपद्यते भूतसुक्ष्माणामिति षष्ठ्या कथञ्चिद्भेदं फलेन व्यक्तेन तदनुभवलक्षणेन तद्व्यवहारलक्षणेन च व्यक्तेन विप्रतिपन्नप्रत्यनुमापितकारणाभेदेच कारणाकारतोपपन्नेत्याह। स्वव्यञ्जकाञ्जन इति। स किं तदात्मभूतो धर्म्मीनित्यो?—नेत्याह धर्म्मान्तरस्य कपालादेरुदय इति। तस्यावयविनः परमाणुभ्यो व्यावृत्तं रूपमादर्शयति सएष इति। परमाणुसाध्यायाः। क्रियाया अन्यक्रियामधूदकादिधारणलक्षणा तद्धर्म्मक इति न केवलमनुभवात् अपि तु व्यवहारतोपि तन्निबन्धनत्वाल्लोकयात्राया इत्याह। तेनेति। अदेतात्

योऽसावेकश्च महांश्च अणीयांश्च स्पर्शवांश्च क्रियाधर्मकश्च अनित्यश्च• तेनावयविना व्यवहाराः क्रियन्ते। यस्य पुनरवस्तुकः स प्रचयविशेषः सूक्ष्मञ्च कारणमनुपलभ्यं तस्यावयव्यभावात् अतद्रूपप्रतिष्ठं मिथ्याज्ञानमिति प्रायेन सर्व्वमेवप्राप्तं मिथ्याज्ञानमिति। तदाच सम्यक् ज्ञानमपि किं स्यात् विषयाभावात्। यद्यदुपलभ्यते तत्त-

असति बाधके अनुभवो अवयविनं व्यवस्थापयेत्–अस्ति च बाधकं यत् सत् तत् सर्व्वमनवयवं यथा विज्ञानं सङ्गीघटादीति स्वभावहेतुः सत्वं हि विरुद्धधर्म्मसंसर्ग रहितत्वेन व्याप्तं तद्विरुद्धश्च विरुद्धधर्म्मसंसर्गः सावयवे उपलभ्यमानो व्यापक विरुद्धोपलभ्या सत्वमपि निवर्त्तयति अस्तिचावयविनि तद्देशता तद्देशत्वानावृतत्व रक्तारक्तत्वचलाचलत्वलक्षणो विरुद्धधर्म्मसंसर्ग इत्यत आह। यस्य पुनरिति। अयमभिप्रायः अनुभवसिद्धं सत्वं हेतुः क्रियते यत् किलपांसुलपादकोहालिकोपि प्रतिपद्यते अन्यथा अनुभवसिद्धात् तचान्यदसिद्धत्वादहेतुः अनुभवसिद्धन्तु घटादीनां सत्वमर्थक्रियाकारित्वरूपं न स्थूलादन्यं सोयं हेतुः स्थूलादन्यं सोयं हेतुः स्थूलत्वं मपाकुर्व्वन्नात्मानमेवव्याहन्ति। ननु नस्थूलत्वमेव सत्वं अपितसतो व्यावृत्तिःअस्थौल्य व्यावृत्तिश्च स्थौल्यं व्यावर्त्त्य भेदाच्च व्यावृत्तयो भिद्यन्ते अतः स्थौल्याभावेपि न सत्वव्याहतिः अन्यत्वाद्भवतु व्यावर्त्त्यभेदादवसाय विषयभेदः यत् पूर्व्वकस्त्ववसाया स्तस्यानुभवस्याविकल्पस्य प्रमाणस्य को विषय इति निरूपयतु भवान् रूप परमाणवो निरन्तरोत्पादा गृहीतपरमसूक्ष्मतत्वा इति चेत् हन्तैते गन्धरसस्पर्शपरमाणु भिरन्तरितान् निरन्तनरा: तस्मादन्तराणाग्रहे एकघनवनप्रत्ययवत् परमाणवालम्बनः सन्नयं विकल्पो मिथ्येतितत्भवा विकल्पानपारंपर्य्येणापि वस्तुप्रतिवद्धा इति कुतस्तदवसितस्य सत्वस्यानवयवत्वसाधकत्वं तस्मादविकल्पस्य प्रत्यक्षस्य प्रमाणभिरूता तदनुभूयमानस्थौल्यस्यैव सत्वमविकल्पावसेयमकामयताप्यभ्युपेयम्। तथाच यत्तद्बाधमानं सत्वमात्मानमेवाप्रवाध्येत। परमसूक्ष्माः परमाणवो विजातीय परमाणवनन्तरिता अनुभवविषया इति व्याहतमङ्गीकरणं तदिदमुक्तं यस्यपुनरवस्तुक

द्वयवित्त्नोग्रातं तस्मादस्त्ववयवी योमहत्वादिव्यावहारा-पन्नः समापत्तेर्निर्व्वितर्कायाः विषयोभवति ॥ ४४ ॥

**एतयैव सविचारा निर्व्विचारा च सूक्ष्मविषया व्याख्याता ॥ ४५ ॥**

तत्र भूतसूक्ष्मेष्वभिव्यक्तधर्म्मकेषु देशकालनिमित्तानु-भवावच्छिन्नेषु या समापत्तिः सा सविचारेत्युच्यते। तत्रा-प्येकबुद्धिनिर्ग्राह्यमेवोदितधर्म्मविशिष्टं भूतसूक्ष्ममालम्बनी-भूतं समाधिप्रज्ञायामुपतिष्ठते। या पुनः सर्व्वथा सर्व्वतः

सप्रचयविशेषो निर्व्विकल्पविषयः सन्तु तर्हि सूक्ष्माः परमाणवो निर्व्विकल्पविषया इत्यत आह। सूक्ष्मञ्च कारणमनुपलभ्यमविकल्पस्येति तस्यावयव्यभवाद्धेतोरतद्रूपप्रतिष्ठं मिथ्याज्ञानमिति लक्षणेन सर्व्वमेव प्राप्तं मिथ्याज्ञानं यत् स्थौल्यालम्बनं यच्च तदधिष्ठानं सत्वालम्बनमित्यर्थः। नन्वेतावतापि न ज्ञानमात्मनि मिथ्या भवति तस्यावयवित्वेना प्रकाशादित्यत आह। प्रायेणेति ननु किमेतावतापीत्यत आह। तदा चेति। सत्वादिज्ञानं चेन्मिथ्यातदासत्वादिहेतुकमनवयवित्वादि ज्ञानमपि मिथ्यैव तस्यापि हि निर्व्विकल्पगोचरस्थूलमेवावसेयतया विषयः सचनास्तीति तात्पर्य्यार्थः विषयाभाव एव कुत इत्यत आह। यद्वयदिति। विरोधश्च परिणामवैचित्र्येण भेदाभेदेन चोक्तोपपत्त्यनुसारेण उद्धर्तव्यः इति सर्व्वं रमणीयं ॥ ४४ ॥

एतयैव सविचारानिर्व्विचाराचसूक्ष्मविषया व्याख्याता। अभिव्यक्तोघटादिधर्म्मो येस्ते तथोक्ताः घटादिधर्म्मोपगृहीता इति यावत् देशउपर्य्यधः पार्श्वादिः कालोवर्त्तमानः निमित्तं पार्थिवस्य परमाणोर्गन्धतन्मात्रप्रधानेभ्यः पञ्चतन्मात्रेभ्यः उत्पत्तिः। एवमापस्यपरमाणोर्गन्धतन्मात्रवर्ज्जितेभ्योरसतन्मात्रप्रधानेभ्यःचतुर्भ्यः। एवं तैजसस्य गन्धरसतन्मात्र रहितेभ्यो रूपतन्मात्रप्रधानेभ्य स्त्रिभ्यः एवं वायवीयस्य गन्धादितन्मा

शान्तोदिताव्यपदेश्यधर्म्मानवच्छिन्नेषु सर्व्वधर्म्मानुपातिषु सर्व्वधर्म्मात्मकेषु समापत्तिः सानिर्व्विचारेत्युच्यते। एवं स्वरूपं हि तत् भूतसूक्ष्मं एतेनैव स्वरूपेणालम्बनीभूतमेव समाधिप्रज्ञास्वरूपमुपरञ्जयति प्रज्ञाच स्वरूपशून्येव अर्थमात्रा यदा भवति तदा निर्व्विचारेत्युच्यते। तत्र महद्वस्तुविषया सवितर्का निर्व्वितर्काच सूक्ष्मविषया सविचारा निर्व्विचाराच। एवमुभयोरेतयैव निर्व्वितर्कया विकल्पहानिर्व्याख्यातेति ॥ ४५ ॥



त्त्वहीनाभ्यांस्पर्श प्रधानाभ्यां स्पर्शशब्दतन्मात्राभ्यां। एवं लाभमस्य शब्दतन्मात्रादेवैकस्मात्तदिदंनिमित्तभूतसूक्ष्माणामेतेषां देशकालनिमित्तानामनुभवःतेनावच्छिन्नेषु नानुभूतविशेषणाविशेष्यबुद्धिरुपजायत इत्यर्थः। ननु सवितर्कया सह किं सारूप्यं सविचाराया इत्यत आह। तत्रापीति। पार्थिवोहि परमाणुः पञ्चतन्मात्र प्रचयात्मा एक बुद्धि निर्ग्राह्यः एवमाप्यादयोपि चतुस्त्रिद्व्येक तन्मात्रात्मान एकबुद्धिनिर्ग्राह्या वेदितव्याः उदितोवर्त्तमानो धर्म्मस्तेनविशिष्टं एतावता चात्रसङ्केतस्मृत्यागमानुमानविकल्पानुवेधः सूचितः नहि प्रत्यक्षेण स्थूले दृश्यमाने परमाणवः प्रकाशन्ते अपित्वागमानुमानाभ्यां तस्मादुपपन्नमस्याः सङ्कीर्णत्वमिति। निर्व्विचारामाह। या पुनरिति। सर्व्वथा सर्व्वेण नीलपीतादिना प्रकारेण। सर्व्वत इति सार्व्वविभक्तिकस्तसि सर्व्वैर्देशकालनिमित्तानुभवैरित्यर्थः तदनेन स्वरूपेण कालानवच्छेद परमाणूनामिति दर्शितं नापि तदारब्धधर्म्मद्वारेण इत्याह। शान्ता अतीता उदिता वर्त्तमाना अव्यपदेश्या भविष्यन्तो धर्म्मास्तैरनवच्छिन्नेषु अनवच्छिन्ना धर्म्मैः परमाणवः किमसंबद्धा एव तैरित्यतआह। सर्व्वधर्म्मानुपातिष्विति कतमेन सम्बन्धेन धर्म्मानुपतन्ति परमाणव इत्यत आह। सर्व्वधर्म्मात्मकेषु कथञ्चिद्भेदः कथञ्चिदभेदः धर्म्मीणां परमाणुभ्य इत्यर्थः कस्मात् पुनरिषं समापत्तिरेतद्विषयेत्यत आह। एवं स्वरूपं

सूक्ष्मविषयत्वं चालिङ्गपर्य्यवसानम्॥ ४६॥

पार्थिवस्याणो गन्धतन्मात्रं सूक्ष्मोविषयः आप्यस्य रस-तन्मात्रं तैजसस्य रूपतन्मात्रं वायवीयस्य स्पर्शतन्मात्रं आकाशस्य शब्दतन्मात्रमिति तेषामहङ्कारः अस्यापि लिङ्गतन्मात्रं सूक्ष्मोविषयः लिङ्गमात्रस्याप्यलिङ्गं सूक्ष्मो विषयः न चालिङ्गात् परं सूक्ष्ममस्ति नन्वस्ति पुरुषः सूक्ष्म इति। सत्यं यथा लिङ्गात् परमलिङ्गस्य सौक्ष्मां नचैवं पुरुषस्य किन्तु लिङ्गस्यान्वयिकारणं पुरुषो न भवति हेतुस्तु भवतीति अतः प्रधाने सौक्ष्मं निरतिशयं व्याख्यातम्॥ ४६॥

हीति वस्तुतत्व ग्राहिणीनातत्वे प्रवर्त्तत इत्यर्थः। विषयमभिधायाऽस्याः स्वरूपमाह। प्रज्ञाचेति सङ्कलय्य स्वरूपभेदोपयोगि विषयमाह तत्रेति। उपसंहरति एव-मिति। उभयोरात्मनश्चेति॥ ४५॥

किम्भूतसूक्ष्मएवग्राह्यविषया समापत्तिः समाप्यते न किन्तु सूक्ष्मविषयत्वञ्चालिङ्ग-पर्य्यवसानं। पार्थिवस्य परमाणोः सम्बन्धिनी या गन्धतन्मात्रा सा समापत्तेः सूक्ष्मोविषयः एवमुत्तरत्रापि योज्यं लिङ्गमात्रं महत्तत्वं तद्धि लयं गच्छति प्रधानइति अलिङ्गं प्रधानं तद्धि न कचिल्लयं गच्छतीत्यर्थः। अलिङ्ग पर्य्यावसानत्व-माह। नचालिङ्गात् परमिति। चोदयति ननु पुरुषोपि सूक्ष्मो नालिङ्गमेवे-त्यर्थः। परिहरति सत्यमिति उपादानतया सौक्ष्ममलिङ्गमेव नान्यत्रेत्यर्थः तत्र-पुरुषार्थनिमित्तत्वान् महदहङ्कारादेः पुरुषोपि कारणलिङ्गवदिति कुत एवं लक्षण-मलिङ्गस्येव सौक्ष्ममित्याशयवान् पृच्छति किन्त्विति। उत्तरमाह लिङ्गस्येति सत्य-कारणं नतूपादानं यथाहि प्रधानं महदादिभावेन परिणमते न तथा पुरुषः तद्धेतुरपीत्यर्थः उपसंहरति। अतः प्रधानं एव सौक्ष्मं निरतिशयं व्याख्यातं॥४६॥

ता एव सबीजः समाधिः ॥ ४७॥

निर्व्विचारवैशारद्येऽध्यात्मप्रसादः ॥ ४८ ॥

ताश्चतस्रः समापत्तयो बहिर्व्वस्तुबीज इति समाधि-रपि सबीजः तत्र स्थूलेऽर्थे सवितर्को निर्व्वितर्कः सूक्ष्मेऽर्थे सविचारो निर्व्विचार इति चतुर्द्धोपसङ्ख्यातः समाधि रिति ॥ ४७ ॥

अशुद्ध्यावरणमलापेतस्य प्रकाशात्मनो बुद्धिसत्वस्य रज-स्तमोभ्यामनभिभूतः स्वच्छः स्थितिप्रवाहो वैशारद्यं यदा निर्व्विचारस्य समाधेर्वैशारद्यमिदं जायते तदा योगि-नोभवति अध्यात्मप्रसादः भूतार्थविषयः क्रमाननुरोधी स्फुटप्रज्ञालोकः। तथाचोक्तं—"प्रज्ञाप्रासादमारुह्य अशोच्यः शोचतोजनान्। भूमिष्ठानिव शैलस्थः सर्व्वान् प्राज्ञोनुप-श्यति ॥ ४८ ॥

चतसृणामपि समापत्तीनां ग्राह्यविषयाणां सम्प्रज्ञातत्वमाह ताएव सबीजः समाधिः एवकारोभिन्नक्रमः सबीजे इत्यस्यानन्तरं द्रष्टव्यः ततश्चतस्रः समापत्तयो ग्राह्यविषया सबीजतया नियम्यन्ते सबीजतात्व नियता ग्रहीतृग्रहणगोचरायामपि समापत्तौ विकल्पाविकल्पभेदेनानिषिद्धा व्यवतिष्ठते तेन ग्राह्ये चतस्रः समापत्तयो ग्रहीतृग्रहणयोश्च चतस्रः इत्यष्टौ ते भवन्ति इति निगदव्याख्यातं भाष्यं चतसृषु समापत्तिषु ग्राह्यविषयासु निर्व्विचारायाः शोभनत्वमाह ॥ ४७ ॥

निर्व्विचारवैशारद्येऽध्यात्मप्रसादः। वैशारद्यपदार्थमाह। अशुद्धीति रजस्तमसो-रूपचयो शुद्धिः सैवावरणलक्षणमलस्तस्मादपेतस्य प्रकाशात्मनः प्रकाशस्वभावस्य बुद्धिएतस्य अतएवानभिभूत इति। स्यादेतत् ग्राह्यविषया चेत् समापत्तिः कथमात्म-

ऋतम्भरा तत्र प्रज्ञा ॥ ४८ ॥

तस्मिन् समाहितचित्तस्य या प्रज्ञा जायते तस्या ऋतम्भरेति संज्ञा भवति अन्वर्था च सा सत्यमेव विभर्त्ति न तत्र विपर्य्यासज्ञानगन्धोप्यस्तीति। तथाचोक्तम्—"आगमेनानुमानेन ध्यानाभ्यासवशेन च। त्रिधा प्रकल्पयन् प्रज्ञां लभते योगमुत्तममिति" ॥ ४८ ॥

सा पुनः—

श्रुतानुमानप्रज्ञाभ्यामन्यविषयाविशेषार्थत्वात् ॥ ५० ॥

श्रुतमागमविज्ञानं तत् सामान्यविषयं न ह्यागमेन शक्योविशेषोभिधातुं कस्मात् नहिविशेषेण कृतसङ्केतः शब्द

विषयप्रसाद इत्यत आह। भूतार्थविषय इति नात्मविषयः किन्तु तदाधार इत्यर्थः क्रमाननुरोधी युगपदित्यर्थः। अत्रैव पारमर्षीं गाथामुदाहरति। तथा चेति। ज्ञानालोकप्रकर्षेणात्मानं सर्व्वेषामुपरि पश्यन् दुःखत्रयपरीतान् शोच-तीजनान् जानाति ॥ ४८ ॥

अत्रैव योगिजनप्रसिद्धान्वर्थसंज्ञाकथनेन योगिसंमतिमाह। ऋतम्भरा तत्र प्रज्ञा। सुगमं भाष्यं। आगमेनेति। वेदविहितं श्रवणमुक्तं। अनुमानेनेति मननं ध्यानं चिन्ता तथाभ्यासः पौनःपुन्येनानुष्ठानं तस्मिन् रस आदरः तदनेन निदिध्यासनमुक्तं ॥ ४९ ॥

आदेशत् आगमानुमान गृहीतार्थे विषय भावना प्रकर्ष लुब्धजन्मा

इति। तथानुमानं सामान्यविषयमेव यत्र प्राप्तिस्तत्र गति: यत्राप्राप्तिस्तत्र न भवति गतिरित्युक्तम् अनुमानेन च सामान्येनोपसंहार: तस्मात् श्रुतानुमानविषयो न विशेष: कश्चिदस्तीति न चास्य सूक्ष्मव्यवहितविप्रकृष्टस्य वस्तुनोलोकप्रत्यक्षेण ग्रहणं। न चास्य विशेषस्याप्रमाणकस्याभावोस्तीति समाधिप्रज्ञानिर्ग्राह्यएव सविशेषो

निर्व्विचारा आगमानुमान विषयमेव गोचरयेत् नखल्वन्यविषयानु भव जन्मा संस्कार: शक्तोन्यच्च ज्ञानं जनयितुं अतिप्रसङ्गात् तस्मान्निर्व्विचाराचेद्दतं भरा आगमानुमानयोरपि तत् प्रसङ्ग इत्यत आह। श्रुतानुमानेत्यादि। बुद्धि सत्वं हि प्रकाश स्वभावं सर्व्वार्थदर्शनमसमर्थमपि तमसावृतं यत्रैव रजसोद्घाट्यते तत्रैव गृह्णाति यदात्वभ्यासवैराग्याभ्यामपास्तरजस्तमो मल मनवद्य वैशारद्यमुद्योतते तदास्यातिपतित समस्त मानमेयसीम्न: प्रकाशानन्त्ये सति किं नाम यन्नगोचर इति भाव:। व्याचष्टे श्रुतमागमज्ञानं तत्सामान्यविषयं कस्मात् नह्यागमेन शक्योविशेषोभिधातुं कुत: यस्मादानन्त्याद्व्यभिचाराच्च न विशेषेण कृतसङ्केत: शब्द: यस्मादस्य विशेषेण सह वाच्यवाचक सम्बन्ध: प्रतीयेत नचवाक्यार्थोपीदृशो विशेष: सम्भवति। अनुमानेपि लिङ्गलिङ्गि सम्बन्ध ग्रहणाधीन जन्मनि गतिरेषैवेत्याह तथानुमानमिति। यत्राप्राप्ति रित्यत्र ;यत्रतत्र शब्दयो: स्थान परिवर्त्तनेन व्याप्य-व्यापकभावो गमयितव्य: अतोऽत्रानुमानेन सामान्येनोप संहार:। उपसंहरति तस्मादिति। अस्तु तर्हि सम्बन्धग्रहानपेक्षं लोकप्रत्यक्षं न तत् सामान्य विषय मित्यत आह। नचास्येत्यादि माभूत् सम्बन्धग्रहाधीनं लोकप्रत्यक्षमिन्द्रियाधीनन्तु-स्यात् नचेन्द्रियाणामस्मिन्नस्ति योग्यतेत्यर्थ: ननु च यद्यागमानुमान प्रत्यक्ष गोचर: विशेष: तर्हि नास्ति प्रमाण विरहादित्यत आह नचेति। नहि प्रमाणं व्यापकं कारणं वा प्रमेयस्य येन तन्निवृत्तौ निवर्त्तेत। नोखलु कलावतश्चन्द्रस्य परभाग-वर्त्ति हरिण सद्भावं प्रति नसन्दिहते प्रामाणिका इत्यर्थ: इति तस्मात् समाधि प्रज्ञानिर्ग्राह्य एवेति। अत्र च विवादाध्यासिता: परमाणव: आत्मानश्च प्रतिस्विक

भवति । भूतसूक्ष्मगतो वा पुरुषगतोवा तस्मात् श्रुतानुमानप्रज्ञाभ्यामन्यविषया सा प्रज्ञा विशेषार्थत्वादिति ।

समाधिप्रज्ञाप्रतिलम्भे योगिन: प्रज्ञाकृत: संस्कारो नवो नवोजायते ॥ ५० ॥

समाधिप्रज्ञाभव: संस्कारोव्युत्थानसंस्काराशयं बाधते व्युत्थानसंस्काराभिभवात् तत्प्रभवा: प्रत्यया न भवन्ति ।

तज्ज: संस्कारोऽन्यसंस्कार: प्रतिबन्धी ॥५१॥

प्रत्ययनिरोधे समाधिरुपतिष्ठते । तत: समाधिजा प्रज्ञा तत: प्रज्ञाकृता: संस्कारा इति नवोनव: संस्कारा-

विशेषशालिन: द्रव्यत्वे सति परस्परं व्यावर्त्तमानत्वात् ये द्रव्यत्व सति परस्परं व्यावर्त्तन्ते ते प्रातिस्विकविशेषशालिन: यथा खण्डमुण्डादय इत्यनुमानेनागमेन च श्रुत भरप्रज्ञोपदेशपरेण यद्यपि विशेषो निरूप्यते तदनिरूपणे संशय: स्यात् न्याय-प्राप्तत्वात् तथाप्यदूरविप्रकर्षेण तत्सत्वं कथञ्चिन्नीचरयत: श्रुतानुमानेन तु साचा-च्चार्थमिव समुच्चयादि पदानि लिङ्ग संख्यायोगितया तस्मात् सिद्धं श्रुतानुमान प्रज्ञाभ्यामन्यविषयेति स्यादेतत् भवतु परमार्थ विषय: सम्प्रज्ञातो यथोक्तोपाया-भ्यासात् अनादिनातु व्युत्थान संस्कारेण निगूढ़ निविड़तया प्रतिबन्धनीया ॥५०॥

समाधिप्रज्ञा सा वात्यावर्त्त मध्यवर्त्ति प्रदीप परमाणुरिवेति शङ्कामपनेतुं सूत्रमव-तारयति समाधि प्रज्ञेति सूत्रं पठति । तज्ज:संस्कारोऽन्यसंस्कारप्रतिबन्धी । तदिति निर्व्विचारां समापत्तिं परामृशति अन्येति । व्युत्थानमाह । भूतार्थ पक्षपाती हि धियां स्वभाव: तावदेवेय मनवस्थिताभ्राम्यति न यावत् तत्वं प्रतिलभते तत् प्रति-लम्भे तत्रस्थितपदा सती संस्कारबुद्धि: संस्कारबुद्धिचक्रक्रमेणावर्त्त मानानादिमप्य-तत्व संस्कारबुद्धिक्रमं बाधत एवेति तथाच बाह्या अप्याहु: – निरुपद्रवभूतार्थ स्वभा-

शयो जायते ततः प्रज्ञा ततश्च संस्कारा इति। कथमसौ संस्कारातिशयश्चित्तं साधिकारं न करिष्यतीति न ते प्रज्ञाकृताः संस्काराः क्लेशक्षयहेतुत्वात् चित्तमधिकारविशिष्टं कुर्व्वन्ति चित्तं हि ते स्वकार्य्यादवसादयन्ति। ख्यातिपर्य्यवसानं हि चित्तचेष्टितमिति ॥ ५१ ॥

किञ्चास्य भवति?—

## तस्यापि निरोधे सर्व्वनिरोधान्निर्वीजः समाधिः॥५२

स न केवलं समाधिप्रज्ञाविरोधी प्रज्ञाकृतानां

वस्य विपर्य्ययैः। न बाधो नादिसत्वेपि बहितत् पक्षपातत इति॥ स्यादेतत् समाधिप्रज्ञातोऽस्तु व्युत्थानजन्य संस्कारस्य निरोधः समाधिजस्तु संस्कारातिशयः समाधि प्रज्ञा प्रसवे हेतुरस्त्यऽविकल इति तदवस्थैव चित्तस्य साधिकारतेति। चोदयति कथमसाविति। परिहरति नत इति। चित्तस्य हि कार्य्यद्वयं शब्दाद्युपभोगः विवेकख्यातिश्चेति तत्र क्लेशकर्म्माशय सहितं शब्दाद्युपभोगे वर्त्तते प्रज्ञाप्रभव संस्कारोन्मूलित निखिल क्लेशकर्म्माशयस्य तु चेतसोवसित प्रायाधिकार भावस्य विवेकख्यातिमात्रमवशिष्यते कार्य्यं तस्मात् समाधिसंस्काराश्चित्तस्य न भोगाधिकारहेतवः प्रत्युत तत परिपन्थिन इति स्वकार्य्याद्भोगलक्षणादवसादयन्ति असमर्थं कुर्व्वति इत्यर्थः। कस्मात् ख्याति पर्य्यवसानं हि चित्त चेष्टितं। तावद्धि भोगाय चित्तं चेष्टतेन यावद्विवेकख्यातिमनुभवति सञ्जातविवेकख्यातिमस्तु क्लेश निवृत्तौ न भोगाधिकार इत्यर्थः। तदत्र भोगाधिकार प्रशान्तिः प्रयोजनं प्रज्ञा संस्काराणामित्युक्तं पृच्छतिकिञ्चेति ॥ ५१ ॥

किञ्चास्य भवति प्रज्ञासंस्कार वच्चित्तं प्रज्ञा संस्कार प्रवाहजनकतया तथैव साधिकार मित्यधिकारापनुत्तये अन्यदपि किञ्चिदपेक्षणीयमस्तीत्यर्थः तेषोत्तरमाह।

संस्काराणामपि प्रतिबन्धो भवति । कस्मान्निरोधजः संस्कारः समाधिजान् संस्कारान् बाधत इति निरोधस्थिति कालक्रमानुभवेन निरोधचित्तकृतसंस्कारास्तित्वमनुमेयम् । व्युत्थाननिरोधसमाधिप्रभवैः सह कैवल्यभागीयैः संस्कारैश्चित्तं स्वस्यां प्रकृताववस्थितायां प्रविलीयते तस्मात्ते संस्काराश्चित्तस्याधिकारविरोधिनो न स्थितिहेतवो भवन्तीति यस्मादवसिताधिकारं सह कैवल्यभागीयैः संस्कारैश्चित्तं

तस्यापि निरोधे सर्व्वनिरोधान्निर्वीजः समाधिः । परेण वैराग्येन ज्ञानप्रसाद मात्र लक्षणेन संस्कारोपजननद्वारा तस्यापि प्रज्ञाकृतस्य संस्कारस्य निरोधे न केवलं प्रज्ञाया इत्यपि शब्दार्थः सर्व्वस्योत्पाद्यमानस्य संस्कार प्रज्ञा प्रवाहस्य निरोधात् कारणाभावेन कार्य्यानुत्पादनात् सोऽयं निर्वीजः समाधिः । व्याचष्टे सनिर्व्वीजः समाधिः समाधिप्रज्ञाविरोधिनः परस्मात् वैराग्यात् उपजायमान स्वकारणद्वारेण न केवलं समाधिप्रज्ञाविरोधी प्रज्ञाकृतानामप्यसौ संस्काराणां परिपन्थी भवति । ननु वैराग्यजं विज्ञानं सदविज्ञानं प्रज्ञामात्रं बाधतां संस्कारन्त्वविज्ञानं कथं बाधते दृष्टाहि स्वप्न दृष्टार्थस्मृतिरित्याशयवान् पृच्छति । कस्मादिति उत्तरं निरोधज इति निरुध्यतेऽनेन प्रज्ञेति निरोधः परं वैराग्यं ततोजातो निरोधजः संस्कारःसंस्कारादेव दीर्घकाल नैरन्तर्य्य सत्कारासेवित परवैराग्यजन्मनः प्रज्ञासंस्कारबाधी नतु विज्ञानादित्यर्थःस्यादेतन्निरोधज संस्कार सद्भावे किं प्रमाणं सहि प्रत्यक्षेण वानुभूयेत स्मृत्यवा कार्य्येणानुमीयेत नच सर्व्ववृत्ति निरोधे प्रत्यक्षमस्ति योगिनः नापिस्मृति तस्य वृत्ति मात्र निरोधतया स्मृतिजनकत्वा सम्भवादित्यत आह । निरोधेति । निरोधस्थितिः चित्तस्य निरुद्धावस्थे त्यर्थः । तस्याः कालक्रमो-मुहूर्त्तार्द्धयामयामाहोरात्रादिस्तदनुभवेन एतदुक्तं भवति वैराग्याभ्यासप्रकर्षानुरोधी निरोधप्रकर्षोमुहूर्त्तार्द्धयामादिव्यापितयानुभूयते योगिना नच वैराग्य-क्षणाक्रम नियततया परस्परमसम्भवन्त स्वगत् काल व्यापितया सातिशयं

विनिवर्त्तते तस्मिन्निवृत्ते पुरुषः स्वरूपप्रतिष्ठः अतः शुद्धो-मुक्त इत्युच्यते ॥ ५२ ॥

इति पातञ्जले साङ्ख्यप्रवचने योगशास्त्रे
समाधिपादः प्रथमः समाप्तः।

निरोधं कर्त्तुमीशत इति तत्तद्वैराग्यक्षण प्रचयजन्यः स्थायी संस्कारप्रचयत् षितव्य इति भावः ननु क्षियन्तां प्रज्ञासंस्कारास्तु निरोध संस्कारास्तु कुतः समुच्छिद्यन्ते अनुच्छेदे वा साधिकारत्वमेव इत्यत आह।

व्युत्थानेति। व्युत्थानश्च तस्य निरोधसमाधिश्च सम्प्रज्ञातः तत्प्रभवाः संस्काराः कैवल्यभागी या निरोधजाः संस्कारा इत्यर्थः। व्युत्थानप्रज्ञासंस्काराश्चित्ते प्रलीना इति भवति चित्तं व्युत्थानप्रज्ञासंस्कारवत् निरोध संस्कारस्तु प्रत्युदित एवास्ते चित्ते। निरोधसंस्कारे सत्यपि चित्तमनधिकारवत् पुरुषार्थजनकं हि चित्तं साधिकारं शब्दाद्युपभोग विवेक ख्याती च पुरुषार्थौ संस्कारशेषतायां तु न बुद्धेः प्रतिसंवेदी पुरुष इति नासौ पुरुषार्थः विदेहप्रकृतिलयानां न निरोधभागितया साधिकारं चित्तं अपितु क्लेशवासिततयेत्याशयवानाह यस्मादिति। शेषं सुगमं ॥५२।

योगस्योद्देशनिर्द्देशौ तदर्थं वृत्तिलक्षणं।
योगोपायाः प्रभेदाश्च पादेऽस्मिन्नुपवर्णिताः। ॥ १ ॥

श्रीवाचस्पतिमिश्रविरचितायां पातञ्जलभाष्यव्याख्यायां प्रथमः
समाधिपादः समाप्तः ॥

—०—

## साधनपादः ।

### तपःस्वाध्यायेश्वरप्रणिधानानि क्रियायोगः ॥ १॥

उद्दिष्टः समाहितचित्तस्य योगः कथं व्युत्थितचित्तोऽपि योगयुक्तः स्यादित्येतदारभ्यते । नातपस्विनोयोगः सिध्यति अनादिकर्म्मक्लेशवासना चित्रा प्रत्युपस्थितविषयजाला चाशुद्धिः नान्तरेण तपःसम्भेदमापद्यते इति तपस-



ननु प्रथमपादेनैव सोपायः सावान्तरप्रभेदः सफलोयोग उक्तस्तत किमपरमवशिष्यते यदर्थं द्वितीयः पादः प्रारभ्यतेत्यत आह । उद्दिष्ट इति । अभ्यासवैराग्यौ हि योगोपायौ प्रथमे पादे उक्तौ न च तौ व्युत्थितस्य द्रागित्येव सम्भवत इति द्वितीयपादोपाद श्यानुप्रायाना पद्यते सत्व शुद्धार्थं ततो हि विशुद्धसत्वः क्रतरचा सन्निधानोभ्यासवैराग्ये प्रत्यहं भावयति । समाहितत्वमविक्षिप्तत्वं कथं व्युत्थानचित्तोप्युपदिश्यमाणै रुपायैर्युक्तः सन् योगीस्यादित्यर्थः तत्र वक्ष्यमाणेषु नियमेषु आकृष्य प्रारम्भिकं प्रत्युपयुक्ततरतया प्रथमतः क्रियायोगमुपदिशति सूत्रकारः ॥ तपः स्वाध्यायेत्यादि । क्रियैव योगः क्रियायोगो योगसाधनत्वात् ॥ अतएव विष्णुपुराणे खाण्डिक्य केशिध्वज सम्वादे । योगयुक् प्रथमं योगी युञ्जमानोभिधीयत इत्युपक्रम्य तपः स्वाध्यायादयो दर्शिताः । व्यतिरेक मुखेन तपस उपायत्वमाह । नातपस्विन इति तपसोवान्तरव्यापारमुपायतोपयोगिनां दर्शयति । अनादीति । अनादिभ्यां कर्म्मक्लेशवासनाभ्यां चित्रा अतएव प्रत्युपस्थित मुपनतं विषय यस्यां सा तथोक्ता । अशुद्धीरजस्तमःसमुद्रेको नान्तरेण तपःसम्भेदमापद्यते सांद्रस्य नितान्त विरलता सम्भेदः ननूपादीयमानमपि तपोधातु वैषम्य हेतुतया

उपादानं तच्चित्तप्रसादनमबाधमानमनेनासेव्यमिति मन्यते स्वाध्यायः प्रणवादिपवित्राणां जपोमोक्षशास्त्राध्ययनं वा। ईश्वरप्रणिधानं सर्व्वक्रियाणां परमगुरावर्पणं तत् फलसन्न्यासोवा ॥ १ ॥

स हि क्रियायोगः—

**समाधिभावनार्थः क्लेशतनूकरणार्थश्च ॥ २ ॥**

स हि आसेव्यमानः समाधिं भावयति क्लेशांश्च प्रतनूकरोति प्रतनूकृतान् क्लेशान् प्रसंख्यानाग्निना दग्धबीजकल्पानऽप्रसवधर्म्मिणः करिष्यतीति तेषां तनूकरणात् पुनः क्लेशैरपरामृष्टसत्वपुरुषान्यतामात्रख्यातिः सूक्ष्मा प्रज्ञा समाप्ताधिकारा प्रतिप्रसवाय कल्पिष्यते इति ॥ २ ॥

योगप्रतिपच इति कथं तदुपाय इति। अत आह। तच्चेति तावन्मात्रमेव तपश्चरणीयं न यावता धातुवैषम्यमापद्यत इत्यर्थः।

प्रणवादयः पुरुषसूक्त रुद्रमण्डल ब्राह्मणादयो वैदिकाः पौराणिकाश्च ब्रह्मपारादयः परमगुरुर्भागवानीश्वरस्तस्मिन्नार्पणं यदुक्तं। कामतोकामतोवापि यत् करोमि शुभाशुभं तत्सर्व्वं त्वयि सन्न्यस्तं त्वत् युक्तः करोम्यहं। इति तत्फलसन्न्यासोवा फलानभिसन्धानेन कार्य्यकरणं यत्तदुक्तं कर्म्मण्येवाधिकारस्ते माफलेषु कदाचन। माकर्म्मफलहेतुर्भुर्मा ते सङ्गोस्तु कर्म्मणि ॥ १ ॥

तस्य प्रयोजनाभिधानाय सूत्रमवतारयति स हि इति सूत्रं। समाधिभावनार्थः क्लेशतनूकरणार्थश्च। ननु क्रियायोग एव चेत् क्लेशान् प्रतनूकरोति कृतं तर्हि प्रसङ्ख्यानेनेत्यत आह। प्रतनूकृतानिति क्रियायोगस्य प्रतनूकरणमात्रे व्यापारो न तु वन्ध्यत्वे क्लेशानां प्रसङ्ख्या नस्तु तद्व्यापारो दग्धबीजकल्पानिति वन्ध्यत्वेन

अथ के क्लेशाः कियन्तो वेति—

**अविद्याऽस्मितारागद्वेषाऽभिनिवेशाः पञ्च क्लेशाः ॥ ३**

इति पञ्चविपर्य्यया इत्यर्थः । ते स्पन्दमाना गुणाधिकारं द्रढयन्ति परिणाममवस्थापयन्ति कार्य्यकारणस्रोत उन्नमयन्ति परस्परानुग्रहतन्त्रीभूत्वा कर्म्मविपाकं चाभिनिर्हरन्ति इति ॥ ३ ॥

दग्धकल्पबीजसारूप्यमुक्तं स्यादेतत् सङ्ख्यानमेव चेत् क्लेशान् अप्रसवधर्म्मिणः करिष्यति कृतमेषां प्रतनूकरणेनेत्यत आह । तेषामिति । क्लेशानाम् तानवेहि बलवद्विरोधिग्रस्ता सत्वपुरुषान्यताख्यातेरुदेतु मेव योत्सहते प्रागेव तदभ्या-भावं कर्त्तुं प्रविलीकृतेषु तु क्लेशेषु दुर्ब्बलेषु तद्विरोधिन्यपि वैराग्याभ्यासाभ्यामुप-जायते उपजाता च तैरपरामृष्टा अनभिभूतानेव यावत् परामृश्यते सत्व-पुरुषान्यतामात्रख्याति सूक्ष्माप्रज्ञातन्द्रियता सूक्ष्मोस्याविषय इति सूक्ष्मा प्रज्ञा प्रति-प्रसवाय प्रविलयाय कल्पिष्यते कुतः समाप्ताधिकारा कार्य्यारम्भणं गुणानां यया हेतुभूतया सा तथोक्तेति ॥ २ ॥

पृच्छति । अथेति अविद्येति सूत्रेण परिहारः । अविद्याः क्लेशाः व्याचष्टे । पञ्चविपर्य्यया इति । अविद्या तावद्विपर्य्यय एव अस्मितादयोऽप्यविद्योपादानत्वाद-विनिर्भागवर्त्तिन इति विपर्य्ययाः ततश्चाविद्या समुच्छेदे तेषामपि समुच्छेदो युक्त इतिभावः तेषामुच्छेतव्यताहेतुं संसारकारणत्वमाह ते स्पन्दमानाः समुदाचरन्तो गुणानामधिकारं दृढयन्ति बलवन्तं कुर्व्वन्ति अतएव परिणाममवस्थापयन्ति अव्यक्त महदहङ्कार परम्परया हि कार्य्यकारण स्रोत उन्नमयन्ति उद्भावयन्ति यदर्थं सर्व्वमेतत् कुर्व्वन्ति तद्दर्शयति । परस्परेति कर्म्मणो विपाको जात्यायुर्भोगलक्षणः पुरुषार्थं तममी क्लेशा अभिनिर्हरन्ति निष्पादयन्ति किं प्रत्येकं नेत्याह परस्परानु-गृहेति कर्म्मभिः क्लेशाः क्लेशैश्च कर्म्माणीति ॥ ३ ॥

अविद्याक्षेत्रमुत्तरेषां प्रसुप्ततनुविच्छिन्नोदाराणाम् ॥ ४ ॥

अत्राऽविद्याक्षेत्रं प्रसवभूमिरुत्तरेषामस्मितादीनां चतुर्व्विधकल्पितानां प्रसुप्ततनुविच्छिन्नोदाराणां । तत्र का प्रसुप्तिः चेतसि शक्तिमात्रप्रतिष्ठानां वीजभावोपगमः तस्य प्रबोध आलम्बने संमुखीभावः प्रसंख्यानवतो दग्धक्लेशवीजस्य संमुखीभूतेप्यालम्बनेनाऽसौ पुनरस्ति दग्धवीजस्य कुतः प्ररोह इति । अतः क्षीणक्लेशः कुशलश्चरमदेह इत्युच्यते तत्रैव सा दग्धवीजभावा पञ्चमी क्लेशावस्था नान्यत्रेति सतां क्लेशानां तदा वीजसामर्थ्यं दग्धमिति विषयस्य संमखीभावेपि सति न भवत्येषां प्रबोध इत्युक्ता प्रसुप्तिर्दग्धवीजानां अप्ररोहश्च । तनुत्वमुच्यते प्रतिपक्षभावनोपहताः क्लेशास्त-

हेयानां क्लेशानामविद्यामूलत्वं दर्शयति अविद्याक्षेत्रमुत्तरेषां प्रसुप्ततनुविच्छिन्नोदाराणां तत्र का प्रसुप्तिरिति स्वोचितामर्थक्रिया मकुर्व्वतां क्लेशानां सद्भावेन प्रमाणमस्तीत्यभिप्रायः । पृच्छतः उत्तरं चेतसीति मा नामार्थक्रियां कार्षुः क्लेशाः विदेहप्रकृतिलयानां वीजभावं प्राप्तास्तु ते शक्तिमात्रेण सन्ति क्षीर इव दधिनाऽविवेकख्यातेरन्यदस्ति कारणं तदन्यग्रतायां अतोविदेह प्रकृतिलयाविवेकख्याति विरहिणः प्रसुप्तक्लेशा न यावदवधिकालं प्राप्नुवन्ति ततः प्राप्तौ तु पुनरावृत्ताः सन्तः क्लेशास्तेषुतेषु विषयेषु संमुखीभवन्ति । शक्तिमात्रेण प्रतिष्ठा येषां ते तथोक्ताः तदनेनोत्पत्तिशक्तिरुक्ता वीजभावोपगम इति च कार्य्यशक्तिरिति । ननु विवेकख्यातिमतोपि क्लेशाः कस्मान्न प्रसुप्ता इत्यत आह प्रसंख्यानवत इति । चरमदेहो न तस्य देहान्तरमुत्पत्स्यते यदपेक्षयास्य देहः पूर्व्व इत्यर्थः नान्यत्र विदेहादिष्वित्यर्थः

नवो भवन्ति। तथा विच्छिद्य विच्छिद्य तेन तेनात्मना पुनः पुनः समुदाचरन्तीति विच्छिन्नाः कथं रागकाले क्रोधस्यादर्शनात् न हि रागकाले क्रोधः समुदाचरति रागश्च क्वचित् दृश्यमानो न विषयान्तरे नास्ति नैकस्यां स्त्रियां चैत्रो रक्त इति अन्यासु स्त्रीषु विरक्तः किन्तु तत्र रागो लब्धवृत्तिः अन्यत्र भविष्यद्वृत्तिरिति। स हि तदा प्रसुप्ततनुविच्छिन्नो भवति। विषये यो लब्धवृत्तिः स उदारः सर्व्व एवैते क्लेशविषयत्वं नातिक्रामन्ति। कस्तर्हि विच्छिन्नः प्रसुप्तस्तनुरुदारो वा क्लेश इति उच्यते सत्यमेवैतत् किन्तु विशिष्टानामेवैतेषां विच्छिन्नादित्वं यथैव प्रतिपक्षभाव-



ननु सती नात्यन्तविनाश इति किमिति तदीय योगर्द्धिं बलेन विषयसंमुखीभावेन क्लेशाः प्रबुध्यन्ते इत्यत आह सतामिति। सन्तु क्लेशाः दग्धतेषांप्रसङ्ख्यानाग्निना बीजभाव इत्यर्थः क्लेश प्रतिपक्षः क्रियायोगस्तस्य भावन मनुष्ठानं तेनोपहतास्तनवः अथवा सम्यक् ज्ञानमविद्यायाः प्रतिपक्षः भेददर्शनमस्मितायाः माध्यस्थं रागद्वेषयो रनुबन्धबुद्धिनिवृत्तिरभिनिवेशस्येति। विच्छित्ति माह तथेति। क्लेशानामन्यतमेन समुदाचरताभिभवाद्वाऽत्यन्त विषयसेवया वा विच्छिद्यविच्छिद्यतेन तेनात्मना समुदाचरन्ति आविर्भावन्ति वाजीकरणाद्युपयोगेन वाभिभावदौर्व्वल्येन वेति वीप्सया वा विच्छेदसमुदाचारयोः पौनःपुन्यं दर्शयता यथोक्तात् प्रसुप्तात् भेद उक्तः। रागेण वा समुदाचरता विजातीय क्रोधोभिभूयते सजातीयेन वा विषयान्तरवर्त्तिना रागेणैव विषयान्तरवर्त्ती रागोभिभूयत इत्याह रागेति भविष्यद्वृत्तेस्त्रयो गतिः यथायोग वेदितव्येत्याह। सहीति भविष्यद्वृत्तिक्लेशमात्र परामर्शि सर्व्वनाम न चत्रराग परामर्शि तस्य विच्छिन्नत्वादेवेति। उदारमाह विषय इति। ननु उदार एव पुरुषान् क्लिश्नातीति भवतु क्लेशोन्ये त्वक्लिश्नन्तः कथं क्लेशा इत्यत आह। सर्व्वत्र एवैतेइति क्लेशविषयत्वं क्लेशपदवाच्यत्वं नातिक्रामन्ति उदारतामापद्यमाना अतएव

मातीनिवृत्तस्तथैव स्वव्यञ्जकाञ्जनेनाभिव्यक्त इति सर्व्व एवामी क्लेशा अविद्याभेदाः कस्मात् सर्व्वेषु अविद्यैवाभिप्लवते यदविद्यया वस्त्वा कार्य्यते तदेवानुशेरते क्लेशा विपर्य्यास प्रत्ययकाले उपलभ्यन्ते चीयमाणां चाविद्यामनुचीयन्त इति ॥ ४ ॥

तत्राविद्यास्वरूपमुच्यते ।—

**अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरविद्या ॥ ५ ॥**



अनित्ये कार्य्ये नित्यख्यातिः। तद्यथा— ध्रुवा पृथिवी ध्रुवा सचन्द्रतारका द्यौः अमृतादिवौकस इति तथाशुचौ परम बीभत्से काये उक्तञ्च--स्थानाद्बीजादुपष्टम्भान्निःस्यन्दान्निधना-

तेपि हेयाइति भावः क्लेशत्वे नैकतां मन्यमानश्चोदयति कस्तर्हिइति। क्लेशत्वेन समानत्वे पि यथोक्तावस्थाभेदाद्विशेष इति परिहरति उच्यते सत्यमिति। स्यादेतदविद्यातो भवन्तु क्लेशाः तथाप्यविद्या निवृतौ कस्मान्निवर्त्तन्ते न खलुपटः कुविन्दनिवृत्तौ निवर्त्तते इत्यत आह सर्व्वएवेति भेदाइव भेदास्तदविनिर्भागवर्त्तिन इति यावत् कस्मात् उत्तरं सर्वेष्विति तदेव स्फुटयति यदेति आकार्य्यते समारोप्यते शेषं सुगमं "प्रसुप्तास्तत्वलीनानां तन्ववस्थाश्च योगिनां। विच्छिन्नोदाररूपाश्च क्लेशाविषयसङ्गिनामिति" संग्रहः ॥ ४ ॥

अनित्याशुचिरविद्या। अनित्यत्वोपयोगि विशेषणं कार्य्ये इति केचित् किल भूतानि नित्यत्वेनाभिमन्यमानाश्चद्रूपमभीप्सवस्तान्ये वोपासते एवं घमादि मार्गान्

दपि । कायमाधेयशौचत्वात् पण्डिता ह्यशुचिं विदुः ॥ इत्यशुचौ शुचिख्यातिर्दृश्यते नवेव शशाङ्कलेखा कमनीयेयं कन्या मध्वमृतावयवनिर्म्मितेव चन्द्रं भित्त्वा निःसृतेव ज्ञायते नीलोत्पलपत्रायताक्षी हावगर्भाभ्यां लोचनाभ्यां जीवलोकमाश्वासयन्तीवेति कस्य केनाभिसम्बन्धः भवति चैवमशुचौ शुचि विपर्य्यासप्रत्यय इति । एतेनापुण्ये पुण्यप्रत्ययस्तथैवानर्थे चार्थप्रत्ययो व्याख्यातः । तद्यथा — दुःखे सुखख्यातिं वक्ष्यति परिणामतापसंस्कारदुःखैर्गुणवृत्तिविरोधाच्च दुःखमेव सर्व्वं

पासते चन्द्र सूर्य्य तारकाद्युलोकान्नित्यानऽभिमन्यमानास्तत्प्राप्तये एवं दिवौकसो देवानऽमृतानऽभिमन्यमानस्तद्भावाय सोमं पिबन्ति आम्नायते हि "अपामसोमममृता अभूमेति" सेयमनित्येषु नित्यख्यातिरविद्या तथाऽशुचौ परमवीभत्से कायेऽर्थोक्त एव कायवीभत्सतायां वैयासिकीं गाथां पठति स्थानादिति मातुरुदरं सुत्राद्युपहत स्थानं पित्रोर्लोहितरेतसी वीजं अशितपीताहाररसादिभाव उपष्टम्भस्तेन शरीरं धार्य्यते निःस्पन्दः प्रस्वेदः निधनञ्च श्रोत्रियशरीरमपवित्रमिति तत्स्पर्शे स्नानविधानात् । ननु यदि शरीरमशुचि क्रतं तर्हि मृज्जलादिना क्षालनेनेत्यत आह आधेयशौचत्वादिति । भावनाशुचेरपि शरीरस्य शौचमाधेयं सुगन्धितेव कामिणीनामङ्गरागादिति अर्थोक्तं पूरयति इत्युक्तिभ्यो हेतुभ्यो अशुचौ शरीर इति शुचिख्यातिमाह नवेति हावः शृङ्गारजा लीलाकस्य स्त्रीकायस्य परमवीभत्सस्य केन मन्दतमसादृश्येन शशाङ्कलेखादिना सम्बन्धः । एतेनाशुचौ स्त्रीकाये शुचिख्याति प्रदर्शनेन अपुण्ये हिंसादौ संसारमोचकादीनां पुण्यप्रत्ययः एवमर्ज्जन रक्षादि दुःखबहुलभयानर्थे धनादावर्थ प्रत्ययो व्याख्यातः सर्व्वेषां जुगुप्सितत्वे नाशुचित्वात् तथा दुःख इति सुगमं तथा अनात्मनि इति सुगमं तदेतदत्रोक्तम् । पञ्चशिखेन व्यक्तं चेतनं पुत्रदारपश्वादि । अव्यक्तं अचेतनं शय्यासनाशनादि स सर्व्वोऽप्रतिबुद्धोमूढः चत्वारि पदानि स्थानान्यस्या इति चतुष्पदानन्त्या अपि दिङ्मोहालात चक्रादि विषया अनन्तपदा

विवेकिन इति। तत्र सुखख्यातिरविद्या तथा ऽनात्मन्यात्मख्यातिर्बाह्योपकरणेषु चेतनाचेतनेषु भोगाधिष्ठाने वा शरीरे पुरुषोपकरणे वा मनसि अनात्मन्यात्मख्यातिरिति तथैतदत्रोक्तं व्यक्तमव्यक्तं वा सत्वमात्मत्वेनाभिप्रतीत्य तस्य सम्पदमनुनन्दत्यात्मसम्पदं मन्वानस्तस्य व्यापदमनुशोचत्यात्मव्यापदं मन्वानः सर्व्वोऽप्रतिबुद्ध इत्येषा चतुष्पदा भवत्यविद्या मूलमस्य क्लेशसन्तानस्य कर्म्माशयस्य च विपाकस्येति तस्याश्चामित्रागोष्पदवद्वस्तु स तत्वं विज्ञेयं यथा नामित्रोमित्राभावो न मित्रमात्रं किन्तु तद्विरुद्धः सपत्नः यथावाऽगोष्पदं न गोष्पदाभावो न गोष्पदमात्रं किन्तु देश एव ताभ्यामन्यद्वस्त्वन्तरं एवमविद्या न प्रमाणं न प्रमाणाभावः किन्तु विद्याविपरीतं ज्ञानान्तरमविद्येति ॥५॥



अविद्या तत् किमुच्यते चतुष्पदेत्यत आह। मूलमस्य इति सन्तु नामान्या अप्यविद्या संसारवीजं चतुष्पदैवेति। नन्वविद्येति नञ् समासः पूर्व्वपदार्थ प्रधानो वा स्याद् यथाऽमक्षिकमिति उत्तरपदार्थ प्रधानो वा यथा अराजपुरुष इति अन्यपदार्थ प्रधानो वा यथा अमक्षिकोदेश इति तत्र पूर्व्वपदार्थ प्रधानत्वे विद्यायाः प्रसज्यप्रतिषेधोगम्येत नचास्याः क्लेशादिकारणत्वं उत्तरपदार्थप्रधानत्वे वा विद्यैव कस्यचिदभावेन विशिष्टा गम्येत सा च क्लेशादि परिपन्थिनी नतु तद्बीजं न हि प्रधानोपघाती प्रधानगुणयुक्तस्तदनुपघाताय गुणत्वन्याय्य कल्पना तस्माद्विद्या स्वरूपानुपघाताय नञोन्यथाकरणमध्याहारो वा निषेध्यस्येति अन्यपदार्थ प्राधान्येत्वविद्यान बुद्धि प्रधानं वक्तव्या नचासौ विद्याया अभावमात्रेण क्लेशादिवीजं विवेकख्यातिः पूर्व्वक निरोध सम्पन्नाया अपि तथात्व प्रसङ्गात् तस्मात्सर्व्वथैवाविद्याया न क्लेशादि मूलतेत्यत आह। तस्याश्चेति वस्तुनोभावो वस्तुसत्वं वस्तुत्वमिति यावत्। तदनेन न प्रसज्यप्रतिषेधः नापि विद्यैव विद्या नापि तदभाव विशिष्टा बुद्धिरपितु विद्

## दृग्दर्शनशक्त्योरेकात्मतेवास्मिता ॥ ६ ॥

पुरुषोदृक्शक्तिर्बुद्धिर्दर्शनशक्तिरित्येतयोरेकस्वरूपापत्तिरिवास्मिता क्लेश उच्यते भोक्तृभोग्यशक्त्योरत्यन्तविभक्तयोरत्यन्तासङ्कीर्णयोरविभागप्राप्ताविव सत्यां भोगः कल्पते। स्वरूपप्रतिलम्भे तु तयोः कैवल्यमेव भवति कुतोभोग इति। तथाचोक्तं—बुद्धितः परमं पुरुषमाकारशीलविद्यादिभिः। विभक्तमपश्यन् कुर्य्यात् तत्रात्मबुद्धिं मोहेनेति ॥ ६ ॥

विरुद्धं विपर्य्यय ज्ञानमविद्येत्युक्तं लोकाधीनावधारणोहि शब्दार्थसम्बन्धः लोकेचोत्तर पदार्थ प्रधानस्यापि नञः उत्तर पदाभिधेयोपमर्दकस्य तत्त्वचित तद्विरुद्ध परतया तत्र तत्रोपलब्धे रिहापि तद्विरुद्धे वृत्तिरिति भावः दृष्टान्तं विभजते यथा-त्नमित्र इति नमित्राभावः नापि मित्रमात्र मित्यस्मान्‌ रंवस्त्वन्तरं किन्तु तद्विरुद्धः सपत्न इति वक्तव्यं तथागोष्पदमिति न गोष्पदाभावो न गोष्पदमात्रं किन्तु देशएव विपुलोगोष्पदविरुद्धस्ताभ्यामभावगोष्पदाभ्यामन्य इव्यर्थाद्वस्त्वन्तरं दार्ष्टान्तिके योजयति एवमिति ॥५॥



अविद्यामुक्त्वा तस्याः कार्य्यमस्मिता रागादि वर्षिष्ठामाह दृग्दर्शनइत्यादि सूत्रं दृक्च दर्शनञ्च ते एव शक्ती तयोरात्मानात्मनोरनात्मन्यात्मज्ञानलक्षणाऽविद्यादिताया एकात्मतेव नतु परमार्थत एकात्मता सा अस्मिता दृक्दर्शनयोरिति वक्तव्ये तयोर्भोक्तृभोग्ययोर्भोग्यतालक्षणं सम्बन्धं दर्शयितुं शक्ति ग्रहणं सूत्रं विवृणोति पुरुषइति नन्वनयोरभेदप्रतीते रभेद एव कस्मान्नभवति कुतश्चैकत्वं क्लिश्नाति पुरुषमित्यत आह भोक्तृभोग्येति भोग्यशक्तिर्बुद्धिः भोक्तृशक्तिः पुरुषस्तयोरत्यन्तविभक्तयोः कुतोत्यन्तविभक्तत्व मित्यत आह। अत्यन्तासङ्कीर्णयो रपरिणामित्वादिधर्म्मकः पुरुषः। परिणामित्वादि धर्म्मका बुद्धिरित्यसङ्कीर्णता तदनेन प्रतीयमानोप्यभेदो न पारमार्थिक इत्युक्तम्। अविभागेति क्लेशत्वमुक्तम्।

## सुखानुशयी राग: ॥ ७ ॥

सुखाभिज्ञस्य सुखानुस्मृतिपूर्व्व: सुखे तत्साधने वा योगर्धस्तृष्णा लोभः स राग इति ॥ ७ ॥

## दु:खानुशयी द्वेष: ॥ ८ ॥

दु:खाभिज्ञस्य दु:खानुस्मृतिपूर्व्वोदु:खे तत्साधने वा य: प्रतिघोमन्युर्जिघांसा सा क्रोध: स द्वेष: ॥ ८ ॥



अन्वयं दर्शयित्वा व्यतिरेकमाह स्वरूपेति । प्रतिलम्भी विवेकख्याति परस्याप्येतत् सम्मतमित्याह तदुक्तं पञ्चशिखेन बुद्धित इति आकार: स्वरूपं सदाविशुद्धि: शील-मौदासिन्यं विद्याचैतन्यं । बुद्धिरविशुद्धा अनुदासीना जड़ाचेति तत्रात्मबुद्धि-रविद्या मोह: ॥ ६ ॥

पूर्व्वाविद्याजनित: संस्कार: तमोवाविद्यायास्तामसत्वादि विवेक दर्शने रागादीनां विनिवृत्तेरविद्यापादितास्मितारागादीनां निदानमित्यस्मितानन्तरं रागादीन् लक्षयति सुखानुशयी राग: । अनभिज्ञस्य स्मृतेरभावात् सुखाभिज्ञ-स्येत्युक्तं स्मर्य्यमाने सुखे राग: सुखानुस्मृतिपूर्व्वक: अनुभूयमानेतु सुखेनानुस्मृतिम-पेक्षते तत्साधने तु स्मर्य्यमाणे दृश्यमानेवा सुखानुस्मृतिपूर्व्वएव राग: दृश्यमान-मपि हि सुखसाधनं तज्जातीयस्य सुखहेतुतां स्मृत्वा तज्जातीयतया चास्य सुखहेतुतामनुमायेच्छ्येति ॥ ७ ॥

अनुशयीति पदार्थमाह य इति दु:खानुशयी द्वेष: । दु:खाभिज्ञस्येति पूर्व्व-वद्व्याख्येयं अनुशयीपदार्थमाह य: प्रतिघति प्रतिहन्तीति प्रतिघ: ॥ ८ ॥

**स्वरसवाहीरविदुषोपि तथारूढोभिनिवेशः ॥९॥**

सर्व्वस्य प्राणिन इयं मात्माशीर्नित्या भवति मानभूवं भूयासमिति नचाननुभूतमरणधर्म्मकस्यैषा भवत्यात्माशीः एतयाच पूर्व्वजन्मानुभवः प्रतीयते सचायमभिनिवेशः क्लेशः स्वरसवाही क्रमेरपि जातमात्रस्य प्रत्यचानुमानागमैर-सम्भावितोमरणत्रास उच्छेददृष्ट्यात्मकः पूर्व्वजन्मानुभूतं मरणदुःखमनुमापयति । यथाचायमत्यन्तमूढ़ेषु दृश्यते क्लेशस्तथाविदुषोपि विज्ञातपूर्व्वापरान्तस्य रूढ़ः कस्मात् समाना हि तयोः कुशलाकुशलयोर्मरणदुखानुभवादियं वासनेति ॥ ९ ॥




एतदेव पर्य्याये विवृणोति मन्युरिति स्वरशः अभिनिवेशपदार्थं व्याचष्टे सर्व्वस्य-प्राणिन इति । इयमात्माशीरात्मनि प्रार्थना मानभूवं मा अभावीभूवं भूयासं जीव्यासमिति न चाननुभूतमरणधर्म्मकस्य अननुभूतमरणं धर्म्मो येन जन्तुना तस्यैवं भवत्यात्माशीरभिनिवेशः मरणभयं प्रसङ्गतो जन्मान्तरं प्रत्याचचाणं नास्तिकं निरा-करोति । एतयाचेति प्रत्युदितस्य शरीरस्य भ्रियमानत्वात् पूर्व्वजन्मानुभवः प्रतो-यते निकायविशिष्टाभिरपूर्व्वाभिर्देहेन्द्रियबुद्धिवेदनाभिरभिसम्बन्धो जन्म तस्यानु-भवः प्राप्तिः सा प्रतीयते कथमित्यत आह । स चायमभिनिवेशः अर्द्धोक्तावेवास्य क्लेशत्वमाह । क्लेश इति अयमहितकर्म्मादिना जन्तून् क्लिश्नाति दुःखाकरोतीति क्लेशः वक्तुमुपक्रान्तं परिसमापयति । स्वरसवाहीति । स्वभावेन वासना रूपेण वहनशीलो न पुनरागन्तुकः क्रमेरपि जात मात्रस्य दुःखबहुलस्य निकृष्टतमचैत-न्यस्य अनागन्तुकत्वे हेतुमाह । प्रत्यचानुमानागमैः प्रत्युदिते जन्मन्यसम्भावितो सम्पादितोमरण त्रास उच्छेद दृष्ट्यात्मकः पूर्व्वजन्मानुभूतं मरणदुःखमनुमापयति अयमभिसन्धिर्जातमात्र एवहि बालकौमारकवस्तुदर्शनात् वेपमानः कम्पविशेषा-

ते प्रतिप्रसवहेयाः सूक्ष्माः ॥ १० ॥

ते पञ्च क्लेशा दग्धबीजकल्पा योगिनश्चरिताधिकारे चेतसि प्रलीने सह तेनैवास्तं गच्छन्ति ॥१०॥

दनुमितमरणप्रत्यासत्तेः सतो बिभ्यदुपलभ्यते दुःखात् दुःखहेतोर्भयं दृष्टं नचास्मिन् जन्मन्यनेन मरणमनुभूत मनुमितं श्रुतं वा प्रागेवास्य दुःखत्वं वावगम्यते तस्मात्तस्य तथाभूतस्य स्मृतिः परिशिष्यते नचेयं संस्कारादृते नचायं संस्कारोऽनुभवं विना न चास्मिन् जन्मन्यनुभव इति प्रागभवीयः परिशिष्यत इत्याशोः पूर्व्वजन्मसम्बन्ध इति तथापदं यथापदमाकांक्षति। इत्यर्थं प्राप्ते यथापदे सति यादृशो वाक्यार्थो भवति तादृशं दर्शयति। यथायमिति। अत्यन्तमूढ़ेषु मन्दतमचैतन्येषु विदत्ता दर्शयति विज्ञात पूर्व्वापरां तस्यान्तः कोटिपुरुषस्य हि पूर्व्वा कोटिः संसारः उत्तरा कैवल्यं सैव विज्ञाता श्रुतानुमानाभ्यां येन स तथोक्तः सोयं मरणं चास आत्मनेरविदुषो रुढ़ः प्रसिद्ध इति नन्वविदुषो भवतु मरण चासो विदुषस्तु न सम्भवति विद्यायोन्मूलितत्वात् अनुन्मूलने वा मरण वासस्य स्यादत्यन्त सत्यमित्याशयवान पृच्छति कस्मादिति उत्तरं समानाहीति न संप्रज्ञातवान् विज्ञानपितु श्रुतानुमित विवेक इति भावः ॥ ९ ॥

तदेवं क्लेशाश्चचितास्तेषां च हेयानां प्रसुप्ततनु विच्छिन्नोदाररूपतया चतस्रोवस्था दर्शिताः कस्मात् पुनः पञ्चमी क्लेशावस्था दग्धबीजभावतया सूक्ष्मा न सूत्रकारेण कथितेत्यत आह। ते सूक्ष्माः यत् किल पुरुषप्रयत्नगोचरस्तदुपदिश्यते न च सूक्ष्मावस्था हानं प्रयत्न गोचरः किन्तु प्रतिप्रसवेन कार्य्यस्य चित्तस्यास्मिता लक्षण कारणभावापत्त्या हातव्येति व्याचष्टे इति सुगमं। अथ क्रियायोगतनूकृतानां क्लेशानां किं विषयात् पुरुषप्रयत्नाद्धानमित्यत आह स्थितानान्तु बीजभावोपगतानामिति ॥ १० ॥

## ध्यानहेयास्तद्वृत्तयः ॥ ११ ॥

स्थितानान्तु बीजभावोपगतानां क्लेशानां या वृत्तयः स्थूलास्ताःक्रियायोगेन तनूकृताः सत्यः प्रसङ्ख्यानेन ध्यानेन हातव्याः यावत् सूक्ष्मीकृता यावद् दग्धबीजकल्पा इति। यथाच वस्त्राणां स्थूलो मलः पूर्व्वं निर्धूयते पश्चात् सूक्ष्मोयत्नो पायेन चापनीयते तथा स्वल्पप्रतिपक्षाः स्थूलावृत्तयः क्लेशानाम्। सूक्ष्मास्तुमहाप्रतिपक्षा इति ॥ ११ ॥

## क्लेशमूलः कर्माशयोदृष्टादृष्टजन्मवेदनीयः ॥ १२ ॥

तत्र पुण्यापुण्यकर्म्माशयः कामलोभमोहक्रोधप्रसवः

वर्त्तिभ्यो व्यवच्छिनत्ति सूत्रं पठति ध्यानेति व्याचष्टे क्लेशानामिति क्रियायोगतनूकृता अपि हि प्रतिप्रसव हेतु भावेन कार्य्यतः स्वरूपतश्च शक्या उच्छेत्तुमिति स्थूला उक्ता पुरुष प्रयत्नस्य प्रसंख्यानगोचरस्यावधिमाह यावदिति सूक्ष्मीकृता इति विवृणोति दग्धेति। तत्र एव दृष्टान्तमाह। यथा च वस्त्राणामिति। यत्नेन तत्क्षालनादिनोपायेन क्षारसंयोगादि अस्थूल सूक्ष्मतामात्रतया दृष्टान्तदार्ष्टान्तिकयो' साम्यं न पुनः प्रयत्नापनेयतया प्रतिप्रसवहेयेषु तदसम्भवात् स्वल्पप्रतिपक्ष उच्छेद हेतुर्यासां तास्तथोक्ताः महान् प्रतिपक्ष उच्छेदहेतुर्यासां तास्तथोक्ता प्रतिप्रसवस्य चाधस्तात् प्रसंख्यानमित्यवरतया स्वल्पत्वमुक्तम् ॥ ११ ॥

स्यादेतज्जात्यायुर्भोगहेतवः पुरुषं क्लिश्नन्तः क्लेशाः कर्म्माशयश्च तथात्वविद्यादयस्तत्कथमविद्यादयः क्लेशा इत्यत आह। क्लेशमूलः कर्म्माशय

स दृष्टजन्मवेदनीयश्चादृष्टजन्मवेदनीयश्च तत्र तीव्रसंवेगेन मन्त्रतपःसमाधिभिर्निर्वर्त्तित ईश्वरदेवतामहर्षिमहानुभावानामाराधनाद्वा यः परिनिष्पन्नः स सद्यः परिपच्यते पुण्यकर्म्माशय इति। तथा तीव्रक्लेशेन भीतव्याधितकृपणेषु विश्वासोपगतेषु वा महानुभावेषु वा तपस्विषु कृतः पुनः पुनरपकारः सचापि पापकर्म्माशयः सद्यएव परिपच्यते यथा नन्दीश्वरः कुमारो मनुष्यपरिणामं हित्वा देवत्वेन परिणतः तथानहुषोपि देवानामिन्द्रः स्वकं परिणामं हित्वा तिर्य्यक्त्वेन परिणत इति तत्र नारकाणां नास्ति दृष्टजन्मवेदनीयः कर्म्माशयः क्षीणक्लेशानामपि नास्त्यदृष्टजन्मवेदनीयः कर्म्माशयः इति ॥ १२ ॥

इत्यादि क्लेशमूलं यस्योत्पादे च कार्य्यकारणे च स तथोक्तः एतदुक्तं भवति अविद्यादिमूलः कर्म्माशयो जात्यायुर्भोगहेतुरिति अविद्यादयोपि तद्धेतवोऽतः क्लेशा इति व्याचष्टे। तत्रेति आशेरते सांसारिकाः पुरुषा अस्मिन्नित्याशयः कर्म्मणामाशयो धर्म्माधर्म्मौ कामात्काम्यकर्म्मप्रवृत्तौ स्वर्गादिहेतुर्धर्म्मो भवति एवं लोभात् परद्रव्यापहारादधर्म्मः मोहादधर्म्मो हिंसादौ धर्म्मबुद्धेः प्रवर्त्तमानस्याधर्म्मएव नत्वस्ति मोहजोधर्म्मोऽस्ति क्रोधजोधर्म्मः तद्यथा ध्रुवस्य जनकावमानजन्मनः क्रोधात्तु जिगीषया हि तेन कर्म्माशयेन पुण्येनान्तरीक्षलोकवासिनामुपरिस्थानं अधर्म्मस्तु क्रोधजो ब्रह्मवधादिजन्माप्रसिद्धएव भूतानां तस्य द्वैविध्यमाह। सदृष्टजन्मेति दृष्टजन्मवेदनीयमाह। तीव्रसम्वेगेनेति ॥ यथासङ्ख्येन दृष्टान्तावाह। यथानन्दीश्वर इति। तत्र नारकाणामिति। येन कर्म्माशयेन कुम्भीपाकादयो नरकभेदाः प्राप्यन्ते तत्कारिणो नारकास्तेषां नास्ति दृष्टजन्मवेदो यः कर्म्माशयो नहि मनुष्यशरीरेण तत्परिणामभेदेन वा सातत्यसंवत्सरसहस्रादिनिरन्तरोपभोग्या वेदना सम्भवतीति शेषं सुगमम् ॥ १२ ॥

## सति मूले तद्विपाको जात्यायुर्भोगाः ॥ १३ ॥

सत्सु क्लेशेषु कर्म्माशयो विपाकारम्भी भवति नाच्छिन्नक्लेशमूलः ॥ यथाएव तुषावनद्धाः शालितण्डुलाः अदग्धबीजभावाः प्ररोहसमर्था भवन्ति नापनीततुषा दग्धबीजभावा वा तथा क्लेशावनद्धः कर्म्माशयो विपाकप्ररोही भवति नापनीतक्लेशो न प्रसंख्यानदग्धक्लेशबीजभावोवेति सच विपाकस्त्रिविधो जातिरायुर्भोग इति तत्रेदं विचार्य्यते किमेकं कर्म्म एकस्य जन्मनः कारणं अथैकं कर्म्मा-




स्यादेतदविद्यामूलत्वे कर्माशयो यस्य विद्योत्पादे सत्यविद्याविनाशात् मा नामकर्म्माशयान्तरं चैषीत प्राक्तन कर्म्माशयानामनादिभवपरम्परासञ्चितानामसङ्ख्यातानामनियत विपाक कालानां भोगेन क्षपयितुमशक्यत्वाद-शक्योच्छेदः संसारः स्यादित्यत आह। सतीति। व्याधित एतदुक्तं भवति सुख दुःख फलो हि कर्म्माशयस्तादर्थ्येन तन्नान्तरीयकतयाजन्मायुषी अपि प्रसूते सुखदुःखे च रागद्वेषानुषक्ते तदविनिर्भागवर्त्तीनि तदभावे न भवतः न चास्ति सम्भवो न च तत्र यस्तुष्यति वोद्विजते वा न च तस्य सुखं दुःखं वेति तदियमात्मभूमिः क्लेशसलिलावसिक्ता कर्म्मफलप्रसवक्षेत्रमित्यस्ति क्लेशानां फलोपजननेपि कर्म्माशयसहकारितेति क्लेशसमुच्छेदे सहकारिवैकल्यात् सन्नप्यनन्तोप्यनियत विपाककालोपि प्रसङ्ख्यान दग्धबीजभावो न फलाय कल्पत इति उक्तमथ भाष्यमेव द्योतयति सत्स्विति। अत्रैवदृष्टान्तमाह। यथा तुषेति। सतुषा अपि दग्धबीजभावाः स्वेदादिभिः दार्ष्टान्तिके योजयति तथेति। ननु नक्लेशाः शक्या अपनेतुं न हि सत्तामपनय इत्यत आह न प्रसङ्ख्यान दग्धक्लेश बीजभाव इति विपाकस्य त्रैविध्यमाह सचेति विपच्यते साध्यते कर्म्मभिरिति विपाकः कर्म्मफल

नैकं कर्म्म अनेकजन्मनि वर्त्तयति अथानेकं कर्म्मैकजन्मनिवर्त्तयतीति न तावदेकं कर्म्मैकस्य जन्मनः कारणं कस्मादनादिकालप्रचितस्यासङ्ख्येयस्यावशिष्टकर्म्मणः सांप्रतिकस्य च फलक्रमानियमात् अनाश्वासो लोकस्य प्रसक्तः सचानिष्ट इति नचैकं कर्म्मानेकस्य जन्मनः कारणं कस्मादनेकेषु जन्मसु एकैकमेव कर्म्मानेकस्य जन्मनः कारणमित्यवशिष्टस्य विपाककालाभावः प्रसक्तः सचाप्यनिष्ट इति नचानेकं कर्म्मानेकस्य जन्मनः कारणं कस्मादनेकं जन्म युगपन्न सम्भवतीति क्रमेण वाच्यं तथाच पूर्व्वदोषानुषङ्गः। तस्मा ज्जन्मप्रायणान्तरे कृतः पुण्यापुण्यकर्म्माशयप्रचयो विचित्रप्रधानोपसर्ज्जनभावेनावस्थितः प्रायणाभिव्यक्तः एकप्रघट्टकेन मरणं प्रसाध्य संमूर्च्छित एकमेव जन्म करोति तच्च जन्म

ध्रुवं कृत्वा जन्मैकत्वानेकत्व गोचरा प्रथमा विचरणा द्वितीयातु कर्म्मानेकत्वं ध्रुवं कृत्वा जन्मैकत्वानेकत्वगोचरा तदेवं चत्वारो विकल्पाः तत्र प्रथमं विकल्पमपाकरोति न तावदेकं कर्म्मैकस्य जन्मनः कारणं। पृच्छति कस्मादिति। उत्तरं अनादिकाले एकैकजन्मप्रचितस्य अतएव असङ्ख्येयस्य एकैकजन्मचयितादेकैकस्मात् कर्म्मणोवशिष्टस्य कर्म्मणः सांप्रतिकस्य च फलक्रमानियमादनाश्वासो लोकस्य प्रसक्तः सचानिष्ट इति एतदुक्तं भवति कर्म्मचमस्य विरलत्वात् तदुत्पत्तिबाहुल्याच्चान्योन्यसंपीड़िताश्च कर्म्माशया निरन्तरोत्पत्तयो निरुच्छासाः स्वविपाकं प्रतीति न फलक्रमः शक्योवधारयितुं मे चावतेत्यनाश्वासो पुण्यानुष्ठानं प्रतिप्रसक्त इति। द्वितीयं विकल्पं निराकरोति न च एकं कर्म्मानेकस्य जन्मनः कारणं पृच्छति

कर्म्मणा भोगः संपद्यते इति असौ कर्म्माशयो जन्मायुर्भोग-हेतुत्वात् त्रिविपाकोभिधीयत इति। अतएकभविकः कर्म्माशयउक्तइति दृष्टजन्मवेदनीयस्त्वेकविपाकारम्भी भोग-हेतुत्वात् द्विविपाकारम्भी वायुर्भोगहेतुत्वात् नन्दीश्वरवत् नहुषवद्वेति क्लेशकर्म्मविपाकानुभवनिर्म्मिताभिस्तु वास-नाभिरनादिकालसंमूर्च्छितमिदं चित्तं चित्रीकृतमिव सर्व्वतोमत्स्यजालग्रन्थिभिरिवाततं इत्येताअनेकभवपूर्व्विका तेनैव कर्म्मणा लब्धायुष्कं भवति तस्मिन्नायुषि तेनैव वासनाः यस्त्वयं कर्म्माशय एष एवैकभविक उक्त इति ये संस्काराः स्मृतिहेतवस्ता वासनाः ताश्चानादिकालीना




कस्मादिति उत्तरं अनेकस्मिन् जन्मन्याहितमेक मेव कर्म्मानेकस्य जन्मलक्षणस्य विपाकस्य निमित्त मित्यवशिष्टस्य विपाक कालाभावः प्रसक्तः स चाप्यनिष्ट इति कर्म्मवैफल्येन तदनुष्ठान प्रसङ्गात्। यदैकजन्मसमुच्छेदी कर्म्मण्येकस्मिन् फल-क्रमानियमादनाश्वासस्तदा कैव कथा बहुजन्मसमुच्छेदी कर्म्मण्येकस्मिन् तत्र ह्य वसराभावात् विपाककालाभावएव साम्प्रतिकस्येति भावः। तृतीयं विकल्प-कल्पं निराकरोति। नचानेकं कर्म्मानेकस्य जन्मनः कारणं अत्र हेतुमाह। तदनेकं जन्म युगपन्न सम्भवत्ययोगिनइति। क्रमेण वाच्यं यदिहि कर्म्मसहस्रं युगपज्जन्मसहस्रं प्रसुवीत तत एव कर्म्मसहस्रप्रचयादवशिष्टस्य विपाककालः फल-क्रम मनियमश्च स्यातां नत्वस्ति जन्मनां यौगपद्यं एव मेव प्रथमपक्ष एवोक्तं दूषण मित्यर्थः। तदेवं पक्षत्रये निराकृते पारिशेष्यादनेकं कर्म्मैकस्य जन्मनः कारणमिति पक्षोऽव्यवतिष्ठत इत्याह।

इति यस्त्वसावैकभविकः कर्म्माशयः स नियतविपाकश्चा-
नियतविपाकश्च तत्र दृष्टजन्मवेदनीयस्य नियतविपाकस्यै
वायं नियमो नत्वदृष्टजन्मवेदनीयस्यानियतविपाकस्यकस्मात्
योह्यदृष्टजन्मवेदनीयोऽनियतविपाकस्तस्य त्रयी गतिः।
कृतस्याविपक्वस्य नाशः प्रधानकर्म्मण्या वापगमनं वा
नियतविपाकप्रधानकर्म्मणाभिभूतस्य वा चिरमवस्थान
मिति। तत्र कृतस्याविपक्वस्य नाशो यथा शुक्लकर्म्मोदया
दिहैव नाशः कृष्णस्य यत्रेदमुक्तं द्वे द्वे ह वै कर्म्मणी वेदि

तस्माज्जन्मेतिजन्म च प्रायणञ्च जन्मप्रायणे तयोरन्तरं मध्यं तस्मिन् विचित्रः
सुख दुःख फलोपहारेण विचित्रः यदत्यन्तमुद्भूतमनन्तरमेव फलं दास्यति तत् प्रधानं
यत्तु किञ्चिद्विलम्बेन तदुपसर्ज्जनं प्रायणं मरणं तेनाभिव्यक्तः स्वकार्य्यारम्भणाभि
मुख्य मुपनीतः एकप्रघट्टकेन युगपत् संमूर्च्छितः जन्मादिलक्षणे कार्य्ये कर्त्तव्ये एक
लोलीभावमापन्नः एक मेव जनम करोति नानेकं तच्च जन्म मनुष्यादिभावः तेनैव
कर्म्मणा लब्धायुष्कं कालभेदान्नियतजीवनञ्च भवति तस्मिन्नायुषि तेनैव कर्म्मणाभोगः
सुख दुःख साक्षात्कारः स्वसम्बन्धितया सम्पद्यत इति तस्मादसौ कर्माशयो जात्यायु-
र्भोगहेतुत्वात् त्रिविपाकोऽभिधीयते। औत्सर्गिक मुपसंहरति। अत एकभविकः
कर्म्माशय उक्तइति। एकोभवः एकभवः पुर्व्वकालेत्यादिना समासः एकभवोस्या-
स्तीति मत्वर्थीयष्ठन् क्वचित्पाठः एकभविक इति तत्रैकभवशब्दात् भवार्थे ठक्-
प्रत्ययः एकजन्मनावच्छिन्नमस्य भवन मित्यर्थः तदेव मौत्सर्गिकैक भविकस्य त्रिविपा-
कत्व मुक्त्वा दृष्टजन्मवेदनीय स्यैहिकस्य कर्म्मणस्त्रिविपाकत्वं व्यवच्छिनत्ति। दृष्टेति
नन्दीश्वरस्य स्वल्पष्टवर्षावच्छिन्नायुषो मनुष्यजन्मनस्तीव्रसंवेगाधिमात्रोपायजन्मापुण्य-

तत्रैके पापकस्यैकोराशिः पुण्यकृतोपहन्ति तदिच्छस्व कर्म्माणि सुकृतानि कर्त्तुमिहैव कर्म्म कवयो वेदयन्ते प्रधानकर्म्मण्यावापगमनं यत्रेदमुक्तं स्यात् स्वल्पः सङ्करः सपरिहारः सप्रत्यवमर्षः कुशलस्य नापकर्षायालम् । कस्मात् कुशलं हि मे बह्वन्यदस्ति यत्रायमावापगतः स्वर्गेऽप्यपकर्षमल्पं करिष्यतीति नियतविपाकप्रधानकर्म्मणाभिभूतस्य

भेद आयुर्भोगहेतुत्वात् द्विविपाको नहुषस्य तु पार्ष्णि प्रहार विरोधिनागत्वास्ये-न्द्रपदप्राप्तिहेतुनैव कर्म्मणा आयुषो विहितत्वादपुण्यभेदोभोगमात्रहेतुः ननु यथैकभविकः कर्म्माशयस्तथा किं क्लेशवासना भोगानुकुलाश्च कर्म्मविपाकानुभववासना तथा च मनुष्यस्तिर्य्यग्योनिमापन्नो न तत्तज्जातीयोचितं भुञ्जीतेत्यत आह ।

क्लेशेति । संमूर्च्छितमेकलोलीभाव मापन्नं धर्म्माधर्माभ्यां व्यवच्छेत्तुं वासनायाः स्वरूपमाह । ये संस्काराइति औत्सर्गिक मेकभविकत्वं । क्वचिदपवदितुं भूमिका मारचयति । यस्त्वसाविति तु शब्देन वासनातो व्यवच्छिनत्ति दृष्टजन्मवेदनीयस्य नियत विपाकस्यैवायमेक भविकत्वनियमः नत्वदृष्टजन्मवेदनीयस्य किंभूतस्या नियत विपाकस्येति । हेतुं पृच्छति कस्मादिति । हेतुमाह योह्यीति । एकान्ताव-कृतिमाह कृतस्येति । द्वितीयामाह प्रधानेति । तृतीयामाह नियतेति । तत्र प्रथमां विभजते तत्र कृतस्येति । संन्यासि कर्म्मभ्योऽशुक्लाकृष्णेभ्योन्यानिचीर्ण्यैव कर्म्माणि कृष्ण शुक्ल कृष्ण शुक्लानि तदिह तपः स्वाध्यायादिसाध्यः शुक्लकर्म्माशय उदित एवादत्तफलस्य कृष्णस्य नाशकः अविशेषाच्च शवलस्यापि कृष्णभाग योगादिति मन्तव्यं तत्रैव भगवान् आम्नाय मुदाहरति यत्रेदमिति । द्वे द्वे ह वैकर्म्मणी कृष्णकृष्णशुक्ले अपहन्तीति सम्बन्धः वीप्सया भूयिष्ठता सूचिता । कस्येत्यतआह पापकस्य

वा चिरमवस्थानं कथमिति अदृष्टजन्मवेदनीयस्यैव नियतविपाकस्य कर्म्मणः समानं मरणमभिव्यक्तिकारणे-मुक्तं न त्वऽदृष्टजन्मवेदनीयस्यानियतविपाकस्य यत्वदृष्ट-जन्मवेदनीयं कर्म्मानियतविपाकं तन्नश्येत आवापं वा गच्छेत् अभिभूतं वा चिरमप्युपासीत यावत् समानं कर्म्माभिव्यञ्जकं निमित्तमस्य विपाकाभिमुखं करोतीति

पुंसः कोसावसद्धन्तीत्यतआह एकोराशिः पुण्यकृतः समूहस्य समूहिसाध्यत्वात् तदनेन शुक्लकर्म्माशयस्तृतीय उक्त एतदुक्तं भवति ईदृशी नामायं परपीड़ादिरहित साधन साध्यः शुक्लकर्म्माशयः यदेकोपि सन् कृष्णान् कृष्णशुक्लांश्चात्यन्तविरोधिनः कर्म्माशयान् भूयसोप्यपहन्ति तत् तस्मादिच्छस्वेति छान्दसत्वादात्मनेपदं शेषं सुगमम् अत्र च शुक्लकर्म्मोदयस्यैव स कोपि महिमायत इतरेषामभावो नतु स्वाध्यायादि जन्मनो दुःखात् नहिमात्र निबोध्य धर्म्मोपितु स्वकार्य्ये दुःख विरोधिन च स्वाध्यायादि जन्म दुःखं तस्य कार्य्यं तत्कार्य्यत्वे स्वाध्यायादि विधानानर्थक्यात्तद्बलादेव तदुत्पत्तेः अनुत्पत्तौ वा कुम्भीपाकाद्यपि विधीयेत अविधाने तदनुत्पत्तेरिति सर्व्वं चतुरस्र। द्वितीयां गतिं विभजते प्रधाने कर्म्मणि ज्योतिष्टोमादिके तदङ्गस्य पशु हिंसादेरावापगमनं द्व खलु हिंसादेः कार्य्य प्रधानाङ्गत्वेन विधानात्तदुपाकरः न हिंस्यात् सर्व्वाभूतानीति हिंसाया निषिद्धत्वादनर्थस्य तत्र प्रधानाङ्गत्वे नानुष्ठानाद-प्रधान तैरेत्यतो न द्रागित्येव प्रधान निरपेक्षा सती स्वफलमनर्थं प्रसोतुमर्हति किन्त्वारब्ध विपाके प्रधाने साहायकमाचरती व्यवतिष्ठते प्रधानसाहायकमाचर-त्वाश्च स्वकार्य्ये बीजमात्रतयावस्थानं प्रधाने कर्म्मण्यावापगमनं यत्तेदमुक्तं पञ्च-शिखेन स्वल्पः संस्कारोज्योतीष्टोमादिजन्मनः प्रधानापूर्व्वस्य पशुहिंसादिजन्मनार्थ-

तद्विपाकस्यैव देशकालनिमित्तानवधारणादियं कर्म्मगतिश्चित्रा दुर्विज्ञाना चेति न चोत्सर्गस्यापवादात् निवृत्तिरित्येकभविकः कर्म्माशयोनुज्ञायतइति ॥ १३ ॥

ते ह्लादपरितापफलाः पुण्यापुण्यहेतुत्वात् ॥ १४ ॥

हेतुना पूर्व्वेण सपरिहारः श्क्योहि कियता प्रायश्चित्तेन परिहर्त्तुम् अथ प्रमादतः प्रायश्चित्तमपि नाचरितं प्रधानकर्म्म विपाक समयेच विपच्येत तथापि यावन्नसावनर्थं प्रसूते तावान् सप्रत्यवमर्षा मृष्यन्ते हि पुण्यसम्भारोपनीत सुखसुधामहाह्रदावगाहिनः कुशलाः पापमात्रोपपादितां दुःखवह्निकणिकां अतः कुशलस्य महतः पुण्यस्यनापकर्षाय प्रभयाय पर्य्याप्तः पृच्छति कस्मात् उत्तरं कुशलं हि मे बह्वन्यदस्ति प्रधान कर्मतया व्यवस्थितं दीक्षणीयादि दक्षिणान्तं यत्रायं सङ्करः स्वल्पः स्वर्गंप्यस्य फली सङ्कीर्ण्य पुण्यलब्ध जन्मनः स्वर्गात् सर्व्वथा दुःखेनापरामृष्टादपकर्ष मल्प मल्प दुःखसम्भेदं करिष्यतीति। तृतीयां गतिं विभजते नियतेति। बलीतत्त्वेनेह प्राधान्यमभिमतं बलङ्गितया बलीयस्त्वञ्च नियत विपाकत्वे नान्यदानवकाशत्वादनियत विपाकस्य तु दुर्व्वलत्वमन्यदा सावकाशत्वात् चिरमवस्थानं बीजभावमात्रेण न पुनः प्रधानोपकारितया तस्य स्वतन्त्रत्वात्। ननु प्रायणेनैकदेव कर्म्माशयोभिव्यज्यत इत्युक्तमिदानीञ्च चिरावस्थानमुच्यते तत्कथं परं पूर्व्वेण न विरुध्यत इत्याशयवान् पृच्छति कथमिति। उत्तरम् अदृष्टेति। जात्यभिप्रायमेकवचनं तदितरस्य गतिमुक्तामवधारयति यत्वदृष्टेति शेषं सुगमं उक्तं क्लेशमूलः कर्मणः कर्मंमूलत्वञ्च विपाकानां। ११।

ते जन्मायुर्भोगाः पुण्यहेतुकाः सुखफलाः अपुण्य-हेतुकाः दुःखफला इति । यथाचेदं दुःखं प्रतिकूलात्मकं एवं विषयसुखकालेपि दुःख मस्त्येव प्रतिकूलात्मकं योगिनः ॥ १४ ॥

परिणामतापसंस्कार दुःखैर्गुणवृत्तिविरोधाच्च दुःखमेव सर्व्वं विवेकिनः ॥ १५ ॥

कथं तदुपपद्यते ।—




अथ विपाकाः कस्य मूलं येनामीत्वकत्थ्या इत्याह तेह्लादहेतुत्वात् । व्याचष्टे ते जन्मायुर्भोगा इति यद्यपि जन्मायुषोरेव ह्लादपरिताप पूर्व्वभावितया तत्फलत्वं नतु भोगस्य ह्लाद परितापोदयानन्तरभाविनस्तदनुभवात्मनस्तथा प्यनु-भाव्यतया भोग्यतया भोगकर्म्मतामाचेण भोगफलत्वमिति मन्तव्यं नन्वपुण्यहेतुका-मात्यायुर्भोगाः परितापफलाभवन्तु हेयाः प्रतिकूल वेदनीयत्वात् कस्मात् पुनः पुण्यहेतवस्त्यज्यन्ते सुखफलाः अनुकूलवेदनीयत्वात् नचैषां प्रत्यात्मवेदनीयानुकूलता शक्या सहस्रेणाप्यनुमानागमैरपाकर्त्तुं नच ह्लादपरितापौपरस्पराविनाभूतौ यतोह्लाद उपादीयमाने परितापोप्यवर्जनीयतयापतेत् तयोर्भिन्नहेतुकत्वाद्भिन्नरूपत्वात् चेत्यत आह । यथाचेदमिति ॥१४॥

यद्यपि न पृथग्जनैः प्रतिकूलात्मतया विषयसुखकाले सम्वेद्यते दुःखं तथापि सम्वेद्यते योगिभिरिति प्रश्नपूर्व्वकं तदुपदानाय सूत्रमवतारयति । कथं तदुपपद्यत

सर्व्वस्यायं रागानुविद्धश्चेतनाचेतनसाधनाधीनसुखा-
नुभवइति तत्रास्ति रागजः कर्म्माशयः तथाच द्वेष्टि दुःख
साधनानि मुह्यति चेति द्वेषमोहकृतोप्यस्ति । तथाचोक्तं
नानुपहत्य भूतान्युपभोगः सम्भवतीति हिंसाकृतोप्यस्ति
शारीरः कर्म्माशय इति विषयसुखं चाविद्येत्युक्तम् । या
भोगेष्विन्द्रियाणां तृप्तेरुपशान्तिः तत् सुखं या लौल्याद्-
नुपशान्तिस्तद् दुःखं । न चेन्द्रियाणां भोगाभ्यासेन वैतृष्ण्यं
कर्त्तुं शक्यं कस्माद् यतो भोगाभ्यास मनुविवर्द्धन्ते रागाः
कौशलानि चेन्द्रियाणामिति तस्मादनुपायः सुखस्य भोगा
भ्यासइति स खल्वयं वृश्चिकविषभीतइवाशीविषेण दष्टो यः




इति । परिणामेत्यादि सूत्रं परिणामश्च तापश्च संस्कारश्च एतान्येव दुःखानि तैरिति
परिणामदुःखतया, विषयसुखस्य दुःखतामाह । सर्व्वस्यायमिति न खलु सुखं
रागानुवेधमन्तरेण सम्भवति न ह्यस्ति सम्भवो न तत्र तुष्यति तच्च तस्य सुखमिति
रागस्य च प्रवृत्तिहेतुत्वात् प्रवृत्तेश्च पुण्यापुण्योपचयकारित्वात् तत्रास्ति रागज कर्म्मा-
शयो सतीनुपजननात् तदा च सुखं भुञ्जानस्तत्र सक्तोपि विच्छिन्नावस्थेन
द्वेषेण द्वेष्टि दुःखसाधनानि तानि परिहर्त्तुमशक्तो मुह्यति चेति द्वेष-
मोहकृतोप्यस्ति कर्म्माशयः द्वेषवन्मोहस्यापि विपर्य्ययापरनाम्नः कर्म्माशय हेतुत्व-
मविरुद्धं ननु कथं रक्तो द्वेष्टि मुह्यति वा रागकाले द्वेषमोहयोरदर्शनादित्यत आह ।
तथाचोक्तं विच्छिन्नावस्थान क्लेशानुपपादयन्नि रसाभिसदनेन वाङ्मनसः प्रवृत्ति-
जन्मनी पुण्यापुण्ये दर्शिते इति रागादि जन्मनः कर्त्तव्य मिदमिति मानसस्य
संकल्पस्य साभिलाषत्वेन वाचनिकत्वस्याप्य विशेषात । यथाहुः साभिलापश्च सङ्-

सुखार्थी विषयाननुवासितो महति दुःखपङ्के मग्न इति। एषा परिणामदुःखता नाम प्रतिकूला सुखावस्थायामपि योगिनमेव क्लिश्नाति। अथ का तापदुःखता सर्व्वस्य द्वेषानुविद्धश्चेतनाचेतनसाधनाधीनस्तापानुभव इति। तत्रास्ति द्वेषजः कर्म्माशयः सुखसाधनानि च प्रार्थमानः कायेन वाचा मनसा च परिस्पन्दते ततः परमनुगृह्णात्युपहन्ति चेति परानुग्रहपीड़ाभ्यां धर्म्माधर्म्मानुपचिनोति स कर्म्माशयो लोभान्मोहाच्च भवतीत्येषा तापदुःखतोच्यते। का पुनः संस्कारदुःखता। सुखानुभवात् सुखसंस्काराशयो दुःखानुभवादपि दुःखसंस्काराशय इति एवं कर्म्मभ्यो विपाके-





त्पीवाच्यार्थान्नातिरिच्यत इति। शारीरमपि कर्म्माशयं दर्शयति नानुपहत्येति अतएव धर्म्मशास्त्रकारा पञ्चसूना गृहस्थस्येत्याहुः स्यादेतन्न प्रत्यात्मवेदनीयस्य विषय सुखस्य प्रत्याख्यानमुचितं योगिनां अनुभव विरोधादित्यत आह। विषय सुखञ्चाविद्येत्युक्तम्। चतुर्विधं विपर्य्यासलक्षणा मविद्या दर्शयद्भिरिति नापातमात्रमपक्रियन्ते वृद्धा अस्ति खल्वापाततो मधुविषसंपृक्तान्नोपभोगेऽपि सुखानुभवः प्रत्यात्मवेदनीयः किन्त्वायत्यामसुख मियञ्च दर्शिता भगवतैवेति। "विषयेन्द्रिय संयोगाद् यत्तदग्रेऽमृतोपमं। परिणामे विषमिव तत्सुखं राजसं स्मृतम्" इति। चोदयति याभोगेष्विति। न वयं विषयह्लादं सुखमातिष्ठामहे किन्तु तृप्यतां पुंसां तत्तद्विषय प्रार्थना परिक्लिष्ट चेतसां तृष्णैव महद्दुःखं नचेयमुपभोगमन्तरेण शाम्यति न चास्याः प्रशमोः रागाद्यनुविद्ध इति नास्य परिणाम दुःखता इति भावः तृप्तेस्तृष्णाक्षयाद्धेतोरिन्द्रियाणामुपशान्तिरप्रवर्त्तनं विषयेष्वित्यर्थः। तदेव व्यतिरेक मुखेन

ऽनुभूयमाने सुखे दुःखे वा पुनः कर्माशयप्रचय इति एवमिदमनादिदुःखस्रोतो विप्रसृतं योगिनमेव प्रतिकूलात्मकत्वादुद्वेजयति कस्मात् अक्षिपात्रकल्पो हि विद्वानिति यथोर्णातन्तुरक्षिपात्रे न्यस्तः स्पर्शेन दुःखयति नान्येषु गात्रावयवेषु एवमेतानि दुःखानि अक्षिपात्रकल्पं योगिनमेव क्लिश्नन्ति नेतरं प्रतिपत्तारं इतरन्तु स्वकर्मोपहृतं दुःखमुपात्तमुपात्तं त्यजन्तं त्यक्तं त्यक्तमुपाददानं अनादिवासना विचित्रया चित्तवृत्त्या समन्ततोऽनुविद्धमिवाविद्यया हातव्य एवाहङ्कार ममकारानुपातिनं जातं जातं बाह्याध्यात्मिकोभयनिमित्तास्त्रिपर्वाणस्तापा अनुप्लवन्ते तदेव




स्पृशयति या लौल्यादिति। परिहरति नचेन्द्रियाणामिति हेतावनी: प्रयोगसत्त्वं तृष्णाक्षयःसुखमनवद्यं तस्य तु न भोगाभ्यासो हेतुरपितु तृष्णाया एव तद्विरोधिन्याः यथाहुः—"न जातु कामः कामानामुपभोगेन शाम्यति। हविषा कृष्णवर्त्मेव भूयवाभिवर्द्धत" इति। शेषमतिरोहितं तापदुःखतां पृच्छति अथ केति। उत्तरम् सर्व्वस्येति। सर्व्वजन प्रसिद्धत्वेन तत्स्वरूप प्रपञ्चमकृत्वातापदुःखतापि परिणामदुःखतासमतया प्रपञ्चिता इति संस्कार दुःखतां पृच्छति केति। उत्तरं सुखानुभव इति सुखानुभवोहि संस्कारमावर्त्त स च सुखस्मरणं तच्च रागं सच मनः कायवचन चेष्टां साच पुण्यापुण्ये ततो विपाकानुभवस्ततो वासनेत्येवमनादितेति अवच सुखदुःख संस्काराश्रयात् तत्स्मरणं तस्माच्च रागद्वेषौ ताभ्यां कर्माणि कर्मभ्यो विपाक इति योजना तदेवं दुःखस्रोतःप्रसृतं योगिनमेव क्लिश्नाति नेतरं पृथक्जनमित्याह। एवमिदमनादि इति इतरं तु त्रिपर्वाणस्तापा अनुप्लवन्त इति सम्बन्धः आधिदैविकाधि-

मनादिदुःखस्रोतसाव्युह्यमानमात्मानं भूतग्रामञ्चदृष्ट्वा योगी सर्व्वदुःखक्षयकारिणं सम्यग्दर्शनं शरणं प्रपद्यतइति गुणवृत्तिविरोधाच्च दुःखमेव सर्व्वं विवेकिनः। प्रख्याप्रवृत्तिस्थितिरूपा बुद्धिगुणाः परस्परानुग्रहतन्त्रीभूत्वा शान्तं घोरं मूढ़ं वा प्रत्ययं त्रिगुणमेव वारभन्ते चलञ्च गुणवृत्तमिति क्षिप्रपरिणामि चित्तमुक्तं रूपातिशया वृत्त्यतिशयाश्च परस्परेण विरुध्यन्ते सामान्यानि तु अतिशयैः सह प्रवर्त्तन्ते एवमेते गुणा इतरेतराश्रयेणोपार्ज्जितसुखदुःखमोहप्रत्यया इति सर्व्वे सर्व्वरूपा भवन्ति गुणप्रधानभावकृतस्त्वेषां विशेष इति तस्मात् दुःखमेव सर्व्वं विवेकिन इति। तदस्य




भौतिकयोस्तापयोर्वाह्यत्वेनैकत्वं विवक्षितं चित्तवृत्तिस्तयाह्वातव्य एव वह्योन्द्रिय शरीरादौ दारापत्यादौ चाहङ्कार ममकारानुपातिन मिति तदत्र न सम्यग्दर्शनाद-न्यत्परित्राण मस्तीत्याह। तदेवमिति तदेवमौपाधिकं विषय सुखस्य परिणामतः संस्कारतस्तापसंयोगाच्च दुःखत्वमभिधाय स्वाभाविक मादर्शयति गुणवृत्ति विरोधाच्चेति। व्याचष्टे। प्रख्याप्रवृत्ति स्थितिरूपा बुद्धिरूपेण परिणता गुणाः सत्वरज-स्तमांसि परस्परानुग्रहतन्त्राः शान्तं सुखात्मकं घोरं दुखात्मकं मूढ़ं विषादात्मक-मेव प्रत्ययं सुखोपभोगरूपमपि त्रिगुणं प्रारभन्ते नच सोऽपि तादृशरूपोऽस्य परिणामः स्थिर इत्याह। चलञ्च गुणवृत्तमिति क्षिप्रपरिणामि चित्तमुक्तं नानेकप्रत्ययः कथं परस्परविरुद्ध शान्तघोरमूढ़त्वान्येकदा प्रतिपद्यत इत्यत आह रूपातिशया वृत्त्यति-शयाश्च परस्परेण विरुद्धन्ते सरूपाश्चाष्टौ भावा धर्म्मादयो वृत्तयः सुखाद्यास्तदिह धर्म्मेण विपच्यमानेनाधर्म्मस्तादृशो विरुध्यते एवं ज्ञानवैराग्यैश्वर्य्यैः सुखादिभिश्च

महतो दुःखसमुदायस्य प्रभवबीजमविद्या तस्याश्च सम्यग्दर्शनमभावहेतुः। यथा चिकित्साशास्त्रं चतुर्व्यूहं। रोगो रोगहेतुरारोग्यं भैषज्यमिति एवमिदमपि शास्त्रं चतुर्व्यूहमेव। तद्यथा संसारः संसारहेतुः मोक्षो मोक्षोपाय इति। तत्र दुःखबहुलः संसारो हेयः प्रधानपुरुषयोः संयोगोहेयहेतुः संयोगस्यात्यन्तिकी निवृत्तिर्हानं हानो-

तादृशान्येव तद्विपरीतानि विरुध्यन्ते सामान्यानि त्वसमुदाचरद्रूपाणि अतिशयैः समुदाचरद्भिः सहाविरोधात् प्रवर्त्तन्ते इति ननुगृह्णीमएतत्तथापि विषय सुखस्य कुतः स्वाभाविकी दुःखतेत्यत आह एवमित इति उपादानाभेदादुपादानात्मकत्वाच्चोपादेयस्याप्यभेद इत्यर्थः तत्किमिदानीमात्यन्तिकमेव तादात्म्यं तथाच बुद्धिव्यपदेशभेदौ न कल्पेते इत्यत आह गुणप्रधानेति सामान्यात्मना गुणभावोऽतिशयात्मना च प्राधान्यं तस्मादुपाधितः स्वभावतश्च दुःखमेव सर्व्वं विवेकिन इति दुःखं चायं प्रज्ञावतां नच तन्निदानं हानमन्तरेण तद्धेयं वितुमर्हतीति नचापरिज्ञातं निदानं शक्यं हातुमिति मूलनिदानमस्य दर्शयति। तदस्येति दुःखसमुदायस्य प्रभव उत्पत्तिर्यततद्वीजमित्यर्थः तदुच्छेदहेतुं दर्शयति तस्याश्चेति। इदानीमस्य शास्त्रस्य सर्व्वानुग्रहार्थं प्रवृत्तस्येतद्विधेनैव शास्त्रेण सादृश्यं दर्शयति। यथेति चत्वारोव्यूहाः संक्षिप्तावयवरचना यस्य तत् तथोक्तम्। ननु दुःखं हेयमुक्ता संसारं हेयम् अभिदधतः कुतो न विरोध इत्यत आह। तत्र दुःखबहुल इति। यत् कृत्वा अविद्या संसारं करोति तदस्या अवान्तरव्यापारं संसारहेतुमाह। प्रधान पुरुषेति। मोक्षस्वरूपमाह। संयोगस्येति। मोक्षोपाय इति केचित् पश्यन्ति हातुः स्वरूपउच्छेद एव मोक्षः यथाहुः प्रदीपस्येव निर्व्वाणं विमोक्षस्तस्य चेतस इति अन्ये तु स वासनक्लेशसमुच्छेदाद्विशुद्ध विज्ञानोत्पाद एव मोक्ष इत्याचक्षते तान् प्रत्याह तत्रेति।

पायः सम्यग्दर्शनं। तत्र हातुः स्वरूपं उपादेयं हेयं वा न भवितुमर्हतीति इति। हाने तस्योच्छेदवादप्रसङ्गः उपादाने च हेतुवादः। उभयप्रत्याख्याने शाश्वतवाद इत्येतत् सम्यग्दर्शनं तदेतच्छास्त्रं चतुर्व्यूहमित्यभिधीयते ॥ १५ ॥

हेयं दुःखमनागतं ॥ १६ ॥

दुःखमतीतमुपभोगेनातिवाहितं न हेयपक्षे वर्त्तते वर्त्तमानञ्च स्वक्षणे भोगारूढमिति न तत्क्षणान्तरे हेयतामापद्यते तस्मात् यदेवानागतं दुःखं तदेवाक्षिपात्रकल्पं योगिनं क्लिश्नाति नेतरं प्रतिपत्तारं तदेव हेयतामापद्यते तस्मात् यदेव हेयमिति उच्यते तस्यैव कारणं प्रतिनिर्दिश्यते ॥ १६ ॥

तत्र हानं तावद्दूषयति। हानेतस्येति नहि प्रेक्षावान् कश्चिदात्मोच्छेदाय यतते। ननु दृश्यन्ते तीव्रगदोन्मूलितसकलसुखां दुःखमयीमिवमूर्त्तिमुद्वहन्तः स्वोच्छेदाय यतमानाः सत्यं केचिदेव तेन त्वेवं संसारिणोविविध विचित्र देवाद्यनन्दभोग भागिन स्तेपि च मोक्षमाणा दृश्यन्ते तस्मादपुरुषार्थत्व प्रसक्तेन हातुः स्वरूपोच्छेद मोक्षोऽभ्युपेयः। अस्तुतर्हि हातुः स्वरूपमुपादेय मित्यत आह। उपादानेच हेतुवादः उपादाने हि कार्य्यत्वेनानित्यत्वे सति मोक्षत्वादेव च्यवेत् अस्रतो हि मोक्षः नापि विशुद्धो विज्ञान सन्तानो भवत्यस्तः सन्तानिभ्यो व्यतिरिक्तस्य सन्तानस्य वस्तुसतोऽभावात् सन्तानिनां चानित्यत्वं तस्मात् तथा यतितव्यं यथा शाश्वतवादी भवति ॥ १५ ॥

तथाच पुरुषार्थता अपवर्गस्येत्याह उभय प्रत्याख्यान इति। तस्मात् स्वरूपा-

द्रष्टृदृश्ययोः संयोगो हेयहेतुः ॥ १७ ॥

द्रष्टा बुद्धेः प्रतिसंवेदी पुरुषः दृश्या बुद्धिसत्त्वोपारूढ़ाः सर्व्वे धर्म्माः तदेतद् दृश्यमयस्कान्तमणिकल्पं सन्निधिमात्रोपकारि दृश्यत्वेन स्वम्भवति पुरुषस्य दृग्रूपस्य स्वामिनः। अनुभवकर्म्मविषयतामापन्नमन्यस्वरूपेण प्रतिलब्धात्मकं स्वतन्त्रमपि परार्थत्वात् परतन्त्रं उभयोर्दृग्दर्शनशक्त्योरनादिरर्थकृतः संयोगो हेयहेतुर्दुःखस्य कारणमित्यर्थः। तथा

बस्थानमेवात्मनो मोच इति एतदेव सम्यग्दर्शनं तदेतच्छास्त्रं चतुर्व्यूहमभिधीयते। हेयं दुःखमनागतम्। अनागतमित्यतीतवर्त्तमाने व्यवच्छिन्ने। तत्रोपपत्तिमाह दुःखमतीतं इति। ननु वर्त्तमानमुपभुज्यमानं न भोगेनातिवाहितमिति कस्मान्न-हेय मित्यत आह। वर्त्तमानञ्चेति सुगमम् ॥ १६ ॥

हेयमुक्तं तस्य निदानमुच्यते। द्रष्टृदृश्ययोः संयोगो हेयहेतुः। द्रष्टृस्वरूपमाह। द्रष्टेतिचितिच्छायापतितबुद्धिप्रतिसंवेदित्वमुदासीनस्यापि पुंसः। नन्वेतावतापि बुद्धिरेवानेन दृश्येत शब्दादयोत्यन्तव्यवहिता इत्यत आह। दृश्याबुद्धिसत्त्वेति इन्द्रियप्रणालिकया बुद्धौ शब्दाद्याकारेण परिणतायां दृश्यायां भवन्ति शब्दादयोपि धर्म्मादृश्या इत्यर्थः ननु तदाकारापत्त्या बुद्धिः शब्दाद्याकारा भवतु पुंसस्तु बुद्धि सम्बन्धेभ्युपगमस्समाने परिणामित्वं असम्बन्धे वा कथं तेषां बुद्धिसत्त्वोपारूढ़ाना-मपि शब्दादीनां दृश्यत्वं नहि दृशिना संस्पृष्टं दृष्टमित्यत आह। तदेतद् दृश्य-मिति प्रपञ्चितमिदमस्माभिः प्रथमपाद एव यथा चित्या संपृक्तमपि बुद्धिसत्त्वमत्यन्त स्वच्छतया चिति बिम्बोदाहितया समापन्न चैतन्यमिव शब्दाद्यनुभवतीति अतएव

चोक्तं तत्संयोगहेतुविवर्जनात् स्यादयमात्यन्तिको दुःख प्रतिकारः. कस्मात् दुःखहेतोः परिहार्य्यस्य प्रतीकारदर्श-नात् तद्यथा पादतलस्य भेद्यता कण्टकस्य भेत्तृत्वं परि-हारः कण्टकस्य पादानधिष्ठानं पादत्राणव्यवहितेन वाधिष्ठानमेतत् एव योवेद लोके स तत्र प्रतीकारमारभ-माणो भेदजं दुःखं नाप्नोति कस्मात् त्रित्वोपलब्धिसामर्थ्या-

शब्दाद्याकार परिणत बुद्धिसत्वोपनीतान् सुखादीन् भूञ्जानः स्वामी भवति द्रष्टा तादृशं चास्य बुद्धिसत्वं सम्भवति। तदेतद्बुद्धिसत्वं शब्दाद्याकारवद्दृश्यमयस्कान्त मणिकल्पं पुरुषस्य सम्भवति दृशिरूपस्य स्वामिनः कस्मादनुभवकर्म्मविषयतामापन्नं यतः अनुभवोभोगः पुरुषस्य कर्म्मक्रिया तद्विषयतां भुज्यमानता मापन्नं यस्मादतः सम्भवति। ननु स्वयं प्रकाशं बुद्धिसत्वं स्यात् कथमनुभवविषय इत्यत आह। अन्य स्वरूपेणेति। यदि हि चैतन्यरूपं वस्तुतो बुद्धिसत्वं स्यात् भवेत् स्वयं प्रकाशं किन्तु स्वं चैतन्यादन्यज्जड़रूपं तेन प्रतिलब्धात्मकं तस्मात्तदनुभवविषयः। ननु यस्य हि यत्र किञ्चिदापतते तत्तदधीनं नच बुद्धिसत्वस्य पुरुषमुदासीनं प्रति किञ्चिदा-पततं इति। कथन्तत् तन्त्रं तथाच न तस्य कर्म्मेत्यत आह। स्वतन्त्रमपि परार्थ-त्वात् पुरुषार्थत्वात् परतन्त्रं पुरुषतन्त्रम्। नन्वयं दृग्दर्शनशक्त्योः सम्बन्धः स्वाभा-विकोवा स्यान्नैमित्तिको वा स्वाभाविकत्वे सम्बन्धिनो नित्यत्वादशक्योच्छेदः सम्बन्धः तथाच संसारनित्यत्वं नैमित्तिकत्वे तु क्लेशकर्म्म तद्वासनामन्तःकरणवृत्तितया सत्यन्तःकरणे भावादन्तःकरणस्य च तन्निमित्तत्वे परस्पराश्रयप्रसङ्गादनादित्वस्य च सर्गादावसम्भवादनुत्पाद एव संसारस्य स्यात्। यथोक्तं "पुमानकर्त्ता येषां तु तेषा-मपि गुणैः क्रिया। कथमादौ भवेत्तच कर्म्म तावन्न विद्यते॥ मिथ्याज्ञानं न तत्रास्ति

दिति । तत्रापि तापकस्य रजसः सत्त्वमेव तप्यं । कस्मात् तपिक्रियायाः कर्म्मस्थत्वात् सत्त्वे कर्म्मणि तपिक्रियाणां परिणामिणि निष्क्रिये चेतन्ने दर्शितविषयत्वात् सत्त्वे तु तप्यमाने तदाकारानुरोधी पुरुषोऽनुतप्यत इति दृश्यते दृश्यरूपमुच्यते ॥ १७ ॥

रागद्वेषादयोपि वा । मनोवृत्तिर्हि सर्व्वेषां नचोत्पन्नं मनस्तदेति’शङ्कामपनयति तयोः दृग्दर्शनशक्त्यो रनादिरर्थकृतः संयोगोहेयहेतुः सत्यं न स्वाभाविकस्तु न बन्धोनैमित्तिकस्तु नचैवमादिमान् अनादिनिमित्तप्रभवतया तस्याप्यनादित्वात् क्लेशकर्म्म तद्वासना सन्तानस्याय मनादिःप्रतिसर्गावस्थायां च सहान्तःकरणेन प्रधान साम्यमुपगतोपि सर्गादौ पुनस्तादृगेव प्रदुर्भवति वर्षापाय इव उद्भिज्जभेदोमद्भावमुपगतोपि पुनर्वर्षासु पूर्व्वरूप इत्यसकृदावेदितं प्राग्भावितया संयोगस्याविद्याकारण स्थितिहेतुतया पुरुषार्थ कारणं तद्दर्शन तस्य स्थितेस्तदिद मुक्तमर्थ कृत इति । तथाचोक्तं पञ्चशिखेन तत्संयोगः बुद्धि संयोगः स एव हेतुः दुःखस्य तस्य विवर्जनात् स्यादयमात्यन्तिको दुःखप्रतीकारः अर्थात्तदपरिवर्ज्जने दुःखमित्युक्तं भवति । तत्रैवात्यन्त प्रसिद्धं निदर्शनमाह । तद्यथेति । पादत्राणमुपानत् । स्यादेतद्गुणसंयोगस्तापहेतुरित्युच्यमाने गुणानां तापकत्व मभ्युपेतं न च तपिक्रियाया अस्यादेरिव कर्तृस्थीभावो येन तथमन्यत्रापेक्षेत न चास्यास्तप्यतया पुरुषः कर्म्म तस्यापरिणामितया क्रियाजनित फलशालित्वायोगा तस्मात् तपेस्तप्य व्यातस्य तन्निवृत्तौ निवृत्तिमवगच्छामः । ज्वलन विरहेनैव धूमाभाव मित्यत आह ।

अत्रापि तापकस्येति गुणानामेव तप्यतापकभावस्तत्र मृदुत्वात् पादतलवत् सत्वं तप्यं रजस्तु तीव्रतया तापकं पृच्छति । कस्मात् सत्वमेव तप्यं न तु पुरुषः ।

प्रकाशक्रियास्थितिशीलं भूतेन्द्रियात्मकं भोगापवर्गार्थं दृश्यम्॥ १८॥

प्रकाशशीलं सत्वं क्रियाशीलं रज: स्थितिशीलं तम इति एते गुणा: परस्परोपरक्तप्रविभागा: परिणामिन: संयोगविभागधर्म्माण: इतरेतरोपाश्रयेणोर्ज्जितमूर्त्तय: परस्पराङ्गाङ्गित्वेप्यसम्भिन्नशक्तिप्रविभागास्तुल्यजातीयाऽतुल्यातीयशक्तिभेदानुपातिन:। प्रधानवेलायामुपदर्शितसन्निधानागुणत्वेपि च व्यापारमात्रेण प्रधानान्तर्णीतानुमितास्ति



उत्तरं। तपिक्रियाया इति तत् किमिदानीं पुरुषो न तप्यते तथाचाचेतनस्यास्तु सत्वस्य ताप: किं नच्छिन्नमित्यत आह। दर्शित विषयत्वात् सत्वे तु तप्यमाने तदाकारानुरोधी पुरुषोप्यनुतप्यत इति दर्शितविषयत्वमनुतापहेतुस्तच प्राग्व्याख्यातम्॥ १७॥

दृश्यं व्याचष्टे। प्रकाशेति। सत्वस्य हि भाग: प्रकाशस्तामसेन भागेन दैन्येन वा राजसेन वा दु:खेनानुरज्यते एवं राजसादिष्वपि द्रष्टव्यं तदिदमुक्त परस्परोपरक्त प्रविभागा इति। पुरुषेण सहसंयोगधर्म्माण:। यथाम्नायते"अजामेकां लोहित शुक्लकृष्णां बह्वी: प्रजा: सृजमानां स्वरूपा:। अजोह्येको जुषमाणोनुशेते जहात्येनां भुक्तभोगामजोन्य:" इति इतरेतरोपाश्रयेणोपर्ज्जिता मुर्त्ति: पृथिव्यादिरूपा येषां तथोक्ता। स्यादेतत् सत्वेन शान्तप्रत्यये जनयितव्ये रजस्तमसोरपि सत्वाङ्गत्वेन तत्र हेतुभावादस्ति सामर्थ्यमिति यदापिच रजस्तमसोरङ्गित्वं तदापि शान्तएवप्रत्ययउदीयेत न घोरोमूढ़ो वा सत्वप्राधान्यइवेत्यतआह। परस्पराङ्गाङ्गित्वेप्यसंभिन्नशक्तिप्रविभागा:

ततः पुरुषार्थकर्त्तव्यतया प्रयुक्तसामर्थ्याः सन्निधिमात्रोपकारिणोऽयस्कान्तमणिकल्पाः प्रत्ययमन्तरेण एकतमस्य वृत्तिमनुवर्त्तमानाः प्रधानशब्दवाच्या भवन्ति । एतद् दृश्यमित्युच्यते । तदेतद्भूतेन्द्रियात्मकं भूतभावेन पृथिव्यादिना सूक्ष्मस्थूलेन परिणमते तथेन्द्रियभावेन श्रोत्रादिना सूक्ष्मस्थूलेन परिणमतइति । तत्तु नाप्रयोजनं अपितु प्रयोजनमुररीकृत्य प्रवर्त्ततइति भोगापवर्गार्थं हि तद्दृश्यंपुरुषस्येति तत्रेष्टानिष्टगुणस्वरूपावधारणं अविभागापन्नं भोगोभोक्तुः स्वरूपावधारणमपवर्ग इति द्वयोरतिरिक्तमन्यद्दर्शनं




भवतु शान्ते प्रत्यये जनयितव्ये रजस्तमसी स्वङ्भावस्तथापि नैषां शक्तयः सङ्कीर्य्यन्ते कार्य्यासङ्करो योहि शक्तीनामसंभेद इति स्यादेतदसंभेदश्चेत् शक्तीनां न सम्भूयकारित्वं गुणानां न जातु भिन्नशक्तीनां सम्भूयकारित्वं दृष्टं न हि तन्तु कृत्पिण्ड वीरणादिनि घटादीन् सम्भूय कुर्व्वत इत्यत आह । तुल्यजातीया तुल्यजातीय शक्तिभेदानुपातिनो यद्यपि तुल्यजातीये उपादान शक्तिः नान्यत्र सहकारि शक्तिस्तुल्यजातीयेपटे तु जनयितव्ये न वीरणानामस्ति सहकारि शक्तिरपीति न ते तन्तूनां सम्भूयकारितेति भावः तुल्यजातीयातुल्यजातीयेषु शक्येषु ये शक्तिभेदास्ताननुपतितुं शीलं येषां ते तथोक्ताः प्रधानवेलायामिति ।

दिव्यशरीरे जनयितव्ये सत्वगुणः प्रधानमङ्गे रजस्तमसी । एवं मनुष्यशरीरे जनयितव्ये रजः प्रधानऽमङ्गे सत्वतमसी । एवं तिर्य्यक्शरीरे जनयितव्ये तमः प्रधानमङ्गे सत्वरजसी । तेनैते गुणाः प्रधानत्ववेलायामुपदर्शित सन्निधानाधाकर्य्योपच्छन्नं प्रत्युद्भूत वृत्तय इत्यर्थः प्रधानशब्दस्य भाव प्रधानः यथा द्रव-

नास्ति। तथाचोक्तं अयन्तु खलु त्रिषु गुणेषु कर्त्तृष्वकर्त्तरि च पुरुषे तुल्यातुल्यजातीये चतुर्थे तत्क्रियासाक्षिण्युपनीयमानान् सर्व्वभावानुपपन्नाननुपश्यन्नदर्शनमन्यच्छङ्कत इति। तावेतौ भोगापवर्गौ बुद्धिकृतौ बुद्धावेव प्रवर्त्तमानौ कथं पुरुषेऽपदिश्येते इति। यथा विजयः पराजयो वा योद्धृषु वर्त्तमानः स्वामिन्यपदिश्यते स हि तस्य फलस्य भोक्तेति एवं बन्धमोक्षौ बुद्धावेव वर्त्तमानौ पुरुषेऽपदिश्येते स हि तत्फलस्य भोक्तेति। बुद्धेरेव पुरुषार्थापरिसमाप्तिर्ब्बन्धस्तदर्थावसायो मोक्षइति एतेन ग्रहणधारणोहाऽपोहतत्वज्ञानाभिनिवेशा बुद्धौ वर्त्तमानाः पुरुषेऽध्यारोपितसद्भावाः स हि तत्फलस्य भोक्तेति। दृश्यानां तु गुणानां स्वरूपभेदावधारणार्थमिदमारभ्यते ॥ ॥ १८ ॥

कर्योर्द्विवचनैकवचन इत्यत्र द्वित्वैकत्वयोरिति। अन्यथा द्व्येकेष्विति स्यात्। ननु तदा प्रधान मुद्भूतनया शक्यमस्तीति वक्तुमनुद्भूतानान्तु तदङ्गानां सद्भावे किं प्रमाणं इत्यत आह। गुणत्वेपिचेति। यद्यपि नोद्भूतास्तथापि गुणानामविवेकित्वात् संभूयकारित्वाच्च व्यापारमात्रेण सहकारितया प्रधाने अन्तर्णीतं सदनुमितमस्तित्वं येषां ते तथोक्ताः। ननु सन्तु गुणाः संभूयकारिणः समर्थाः कस्मात् तत् पुनः कुर्व्वन्ति न हि समर्थमित्येव कार्य्यं जनयति माभूदस्य कार्य्योपजननं प्रतिविराम इत्यत आह। पुरुषार्थकर्त्तव्यतयेति। ततो निर्व्वर्त्तित निखिल पुरुषार्थानां गुणानामुपरमः कार्य्यानारम्भणं इत्युक्तं भवति। ननु पुरुषस्यानुप-

**विशेषाविशेषलिङ्गमात्रालिङ्गानि गुणपर्व्वाणि ॥ १९ ॥**

तत्राकाशवाय्वग्न्युदकभूमयो भूतानि शब्दस्पर्शरूपरसगन्धतन्मात्राणामविशेषाणां विशेषाः तथा श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणानि बुद्धीन्द्रियाणि। वाक्पाणिपादपायूपस्थानि कर्म्मेन्द्रियाण्येकादशं मनः सर्व्वार्थमित्येतान्यस्मितालक्षणस्याविशेषस्य विशेषा गुणानामेष षोड़शकोविशेषपरिणामः

कुर्व्वन्तः कथं पुरुषार्थेन प्रयुज्यन्त इत्यत आह सन्निधिमात्रेति ननु धर्म्माधर्म्म लक्षणमेव निमित्तं प्रयोजकं गुणानां तत् किमुच्यते पुरुषार्थ प्रयुक्ता इत्यत आह प्रत्ययमन्तरेणेति। एकतमस्य सत्वस्य रजसस्तमसो वा प्रधानस्य स्वकार्य्ये प्रवृत्तस्य वृत्तिमित रेप्रत्ययं निमित्तं धर्म्मादिकं विनैवानुवर्त्तमाना यथाच वक्ष्यति निमित्तमप्रयोजकं प्रकृतीनां वरणभेदस्तु ततः चैत्रिकवदिति एते गुणाः प्रधान शब्दवाच्या भवन्तीति सम्बन्धः प्रधीयते आधीयते विश्वं कार्य्यमेभिरिति व्युत्पत्त्या एतद्दृश्यमुच्यते। तदेवं गुणानां शीलमभिधाय तस्य कार्य्यमाह तदेतदिति। सत्कार्य्य वादसिद्धौ यद्यदात्मकं तत्तेन रूपेण परिणमत इति भूतेन्द्रियात्मकत्वं दीपयते भूतभावेनेत्यादिना भोगापवर्गार्थमिति सूत्रावयवमवतारयति। तत्तु नाप्रयोजनमपितु प्रयोजनमुररीकृत्य प्रवर्त्तते भोगं विवृणोति तत्रे ति। सुखदुःखेहि त्रिगुणाया बुद्धेः स्वरूपे तस्यास्तथात्वेन परिणामात् तथापि गुणगततया अवधारणेन भोग इत्यत आह अविभागापन्नमिति एतच्चासकृद्विवेचितं। अपवर्गं विवृणोति भोक्तुरिति। अपवृज्यतेनेऽनेत्यपवर्गः प्रयोजनान्तरस्याभावमाह। द्वयोरिति।

षड् विशेषाः। तद्यथा शब्दतन्मात्रं स्पर्शतन्मात्रं रूप-
तन्मात्रं रसतन्मात्रं गन्धतन्मात्रं चेत्येकद्वित्रिचतुःपञ्च-
लक्षणाः शब्दादयः पञ्चाविशेषाः षष्ठश्चाविशेषोऽस्मितामात्र
इति एते सत्तामात्रस्यात्मनो महतो षड़विशेषपरिणामाः
यत्तत्परमविशेषेभ्यो लिङ्गमात्रं महत्तत्वं तस्मिन्नेते सत्ता-
मात्रे महत्यात्मन्यवस्थाय विवृद्धिकाष्ठामनुभवन्ति प्रसंसृज्य
मानाश्च तस्मिन्नेव सत्तामात्रे महत्यात्मन्यवस्थाय यत्तन्निः

तथाचोक्तं पञ्चशिखेन अयन्तु खल्विति ननु वस्तुतो भोगापवर्गौ बुद्धिकृतौ बुद्धिव-
र्त्तिनौ च कथं तदकारणे तदनधिकरणे च पुरुषेऽपदिश्येते इत्यत आह।
तावेताविति भोक्तृत्वञ्च पुरुषस्योपादितमर्थं च वच्यते परमार्थतस्तु बुद्धेरेव पुरु-
षार्थापरिसमाप्तिरिति एतेन भोगापवर्गयोः पुरुषसम्बन्धित्व कथनमार्गेण ग्रहणा-
दयोऽपि पुरुष सम्बन्धिनो वेदितव्याः तत्र स्वरूपमात्रेणार्थज्ञानं ग्रहणं तत्र स्मृति-
धारणं तद्गतानां विशेषाणा मूहन मूहः समारोपितानाञ्च युक्त्यापनयोऽपोहः
ताभ्यामेवोहापोहाभ्यां तदवधारणं तत्वज्ञानं तत्वावधारणं पूर्व्वं हानोपदानमभि-
निवेशः दृश्यानां गुणानां स्वरूप भेदावधारणार्थ मिदमारभ्यते। येषामवि-
शेषाणां शान्त घोर मूढ़लक्षण विशेषरहितानां ये विशेषा विकार एव न तु तत्वा-
न्तर प्रकृतयस्तेषां तानाह। तत्राकाशेति। उत्पाद क्रमानुरूप एवोपन्यास क्रमः
अस्मिता लक्षणस्याविशेषस्य सत्वप्रधानस्य बुद्धीन्द्रियाणि विशेषा रजसस्तु कर्मेन्द्रि-
याणि मनस्तूभयात्मक मुभयप्रधानस्येति मन्तव्यं अत्र च पञ्चतन्मात्राणि बुद्धि
कारणकाख्यविशेषत्वादस्मितावदिति विकार हेतुश्चाविशेषत्वं तन्मात्रेषु चास्मिता-
याञ्च अवशिष्टं संकलय्याविशेषान् परिगणयति। गुणानामेषामिति। अविशेषा

सत्तासत्तं निःसदसन्निरसदव्यक्तमलिङ्गं प्रधानं तत्प्रतिन्तीति। एष तेषां लिङ्गमात्रः परिणामो निःसत्तासत्तञ्चालिङ्गपरिणाम इति। अलिङ्गावस्थायां न पुरुषार्थो हेतुर्नालिङ्गावस्थायामादौ पुरुषार्थता कारणं भवतीति न तस्याः पुरुषार्थताकारणं भवतीति नासौ पुरुषार्थकृतेति नित्याख्यायते त्रयाणां त्ववस्थाविशेषाणामादौ पुरुषार्थता

नपि गणयति षड़िति। सङ्कलय्योदाहरति तद्यथेति विशिष्टं ह्यपरं परेणेति गन्ध आत्मना पञ्चलक्षणः रस आत्मना चतुर्लक्षणः रूपं आत्मना त्रिलक्षणं स्पर्श आत्मना द्विलक्षणः शब्दः शब्दलक्षण एवेति कस्य पुनः अमी जड़विशेषाः कार्य्यमित्यत आह। एते सत्तामात्रस्यात्मनइति। पुरुषार्थे क्रियाक्षमं सत्तस्य भावः सत्तातन्मात्रं तन्महत्तत्वं यावती काचित् पुरुषार्थक्रिया शब्दादि भोग लक्षणा सत्व पुरुषान्यता ख्याति लक्षणा वा अस्ति सा सर्व्वा महति बुद्धौ समाप्यत इत्यर्थः आत्मन इति स्वरूपोपदर्शनेन तुच्छत्वं निषेधति प्रकृतेरयमाद्यः परिणामो वास्तवो नतु तद्विवर्त्तइति यावत् यत्तत्परं विप्रकृष्ट कालमविशेषेभ्यस्तदपेक्षया सन्निकृष्ट कालेभ्यो लिङ्गमात्रं महत्तत्वं तस्मिन्नेते जड़विशेषाः सत्तामात्रे महत्यात्मन्यवस्थाय सत्कार्य्य वाद सिद्धे र्व्विवृद्धिकाष्ठामनु भवन्ति प्राप्नुवन्ति। ये पुनरविशेषाणां विशेष परिणामा स्तेषाञ्च धर्म्मलक्षणावस्था परिणामाइति सेयमेषां विवृद्धि काष्टा परिणाम काष्ठेति तदेव मुत्पत्तिक्रम मभिधाय प्रलय क्रममाह प्रतिसंसृज्यमाना प्रलीयमाना स्वात्मनि लीनविशेषा अविशेषा स्तस्मिन्नेव सत्तामात्रे महत्यात्मन्यवस्थाय निलीय सहैव महता तेऽविशेषाः अव्यक्त मन्यत्र लयं न गच्छतीत्यलिङ्गं प्रति यन्ति तस्यैव विशेषणं निःसत्ताः सत्तं सत्तापुरुषार्थ क्रियाक्षमत्वं

कारणं भवति स चार्थोहेतुर्निमित्तकारणं भवतीत्यनित्या-
ख्यायते ।० गुणास्तु सर्व्वधर्म्मानुपातिनो न प्रत्यस्तमयं तेनो
पजायन्ते व्यक्तिभिरेवातीतानागतव्ययागमवतीभिः गुणा-
न्वयिनीभिरुपजननापायधर्म्मकाइव प्रत्यवभासन्ते यथा
देवदत्तोदरिद्राति कस्मात् यतोस्य म्रियन्ते गावइति गवामेव
मरणात्तस्य दरिद्राणं न स्वरूपहानादिति समः समाधिः
लिङ्गमात्रमलिङ्गस्य प्रत्यासन्नं तत्र तत् संसृष्टं विविच्यते
क्रमानतिवृत्तेः तथा षड़विशेषा लिङ्गमात्रे संसृष्टा विवि-
च्यन्ते परिणामक्रमनियमात् तथा तेष्वविशेषेषु भूतेन्द्रियाणि




असत्ता तुच्छता निष्क्रान्त सत्ताया असत्तायाश्च यत्तत्तथोक्तं एतदुक्तं भवति सत्त्व-
रजस्तमसां साम्यावस्थानं क्वचित् पुरुषार्थे उपयुज्यते इति न सतीनापि गगणक-
मलीम वत्तुच्छ स्वभावा तेन नासत्यापीति। स्यादेतदव्यक्तावस्थायामप्यस्ति
महदादि तदात्मना नहि सती विनाशी विनाशि वा न पुनरुत्पादो नह्यसत उत्पाद
इति। महदादि सद्भावात् पुरुषार्थं क्रिया प्रवर्त्तेत तत् कथं निःसत्वमव्यक्त मित्यत
आह। निःसदसदिति। निःष्क्रान्तं कारणं सतः कार्य्यात् यद्यपि कारणावस्थायां
सदेव शक्त्यात्मना कार्य्यं तथापि स्वोचितामर्थक्रियामकुर्व्वदसदित्युक्तं नचैतत् कारणं
शशविषाणायमान कार्य्यमित्याह। निरसदिति निष्क्रान्तं असतस्तुच्छरूपात्
कार्य्यात् तथा सति हि व्योमारविन्दमिवास्मात् न कार्य्यमुत्पद्येतेति भावः प्रति
सर्गमुक्त मुपसंहरति। एतेषामिति एष इत्यनन्तरोक्तात् पूर्व्वस्य परामर्षः लिङ्ग-
मात्राद्यवस्था पुरुषार्थं कृतत्वा दनित्या अलिङ्गावस्थातु पुरुषार्थेनाकृतत्वान्नित्येत्यत्र
हेतुमाह। अलिङ्गावस्थायामिति कस्मात्पुनर्न पुरुषार्थो हेतु रित्यत आह ना-

संसृष्टानि विविच्यन्ते। तथाचोक्तम्। पुरस्तान्नविशेषेभ्यः परं तत्वान्तरमस्तीति विशेषाणां नास्ति तत्वान्तरपरिणामस्तेषान्तु धर्म्मलक्षणावस्था परिणामा व्याख्यायिष्यन्ते॥ १९॥

व्याख्यातं दृश्यम्। अथ द्रष्टुः स्वरूपावधारनार्थमिदमारभ्यते—

**द्रष्टा दृशिमात्रः शुद्धोपि प्रत्ययानुपश्यः॥२०॥**

दृशिमात्र इति। दृक्शक्तिरेव विशेषणापरामृष्टेत्यर्थः। स पुरुषो बुद्धेः प्रतिसंवेदी सबुद्धेर्न स्वरूपो नात्यन्तं विरूपइति न तावत् स्वरूपः कस्मात् ज्ञाताज्ञात-



लिङ्गावस्थायामिति भवति नाविषयेन विषयिज्ञाभ सुपलक्षयति। एतदुक्तं भवति एवं हि पुरुषार्थता कारण मलिङ्गावस्थायां ज्ञायते यद्यलिङ्गावस्था शब्दाद्युपभोगं वा सत्वपुरुषान्यता ख्यातिं वा पुरुषार्थं निवर्त्तयेत् तन्निवर्त्तने हि न साम्यावस्था-स्यात् तस्मात् पुरुषार्थं कारणत्व मस्या न ज्ञायत इति नास्याः पुरुषार्थता हेतुः। उपसंहरति नासाविति। इति तु स्यादर्थे। अनित्यामवस्थामाह। त्रयाणां लिङ्ग-मात्राविशेषाविशेषाणामिति। पर्व्व स्वरूपं दर्शयित्वा गुण स्वरूपमाह। गुणास्त्विति। निदर्शनमाह यथा देवदत्त इति। यत्रात्यन्त भिन्नानां गवामुपचयापचयौ देवदत्तोपचयापचयहेतुः तत्र कैव कथा गुणेभ्योऽभिन्नानां व्यक्तीना मुपजनापायवी-रित्यर्थः ननु सर्गक्रमः किमनियती नेत्याह। लिङ्गमात्रमिति न खलु न्यग्रोधधाना अङ्कुरायैक न्यग्रोध शाखिनं सान्द्रं शाद्वल दलजटिल शाखाकाण्ड निपीत मार्त्तण्ड चण्डातप मण्डलमारभन्ते किन्तु क्षितिसलिलतेजःसम्पर्कात् परम्परोपजायमाना

विषयत्वात् परिणामिनी हि बुद्धिस्तस्याश्च विषयोगवादिः घटादिर्ज्ञातश्चाज्ञातश्चेति। परिणामत्वं दर्शयति। सदा ज्ञातविषयत्वन्तु पुरुषस्यापरिणामित्वं परिदीपयति। कस्मात् नहि बुद्धिश्च नाम पुरुषविषयश्च स्यात् गृहीता चेति सिद्धं पुरुषस्य सदाज्ञातविषयत्वं ततश्चापरिणामित्वमिति। किञ्च परमार्था बुद्धिः संहत्यकारित्वात् स्वार्थःपुरुष इति। तथा सर्व्वार्थाध्यवसायकत्वात् त्रिगुणा बुद्धिस्त्रिगुणत्वाद

कुरपचकाञ्चनादिक्रमेण एवमिहापि युक्त्यागमसिद्धः क्रम आस्थेय इति कथं भूतेन्द्रियाण्यविशेष सृष्टानीत्यत आह। तथाचोक्तम्। पुरस्तादिदमेव सूत्रं प्रथमं व्याचचाणैः अथ विशेषाणां कस्मान्न तत्वान्तरपरिणामइत्यत आह। न विशेषेभ्य इति किमिदानीमपरिणामिन एव विशेषास्तथा च नित्याः प्रसज्येरन्नित्यत आह। तथान्विति॥१९॥

व्याख्यातं दृश्यं द्रष्टुः स्वरूपावधारार्थमिदमारभ्यते दृश्यः। व्याचष्ट दृशिमात्र इति विशेषणानि धर्म्मास्तैरपरामृष्टा तदनेन मात्रग्रहणस्य तात्पर्यं दर्शितं। स्यादेतत् यदि सर्व्वविशेषण रहिता दृक्शक्तिर्न तर्हि शब्दादयो दृश्यैरन्नहि दृशिना असंस्पृष्टं दृश्यं भवतीत्यत आह। सपुरुष इति। बुद्धिदर्पणे पुरुषप्रतिविम्ब संक्रान्तिरेव बुद्धि प्रति संवेदित्वं पुंसस्तथाच दृशिच्छायापन्नाया बुद्ध्या संसृष्टाः शब्दादयो भवन्ति दृश्या इत्यर्थः। स्यादेतत् पारमार्थिकमेव बुद्धिचैतन्ययोः कस्मादैक्यं नोपेयते किमनया तच्छायापत्त्येत्यत आह स बुद्धेर्न सरूप इति तथाह सरूपस्य तच्छायापत्तिरपि दुर्घटेत्यत आह नात्यन्त विरूप इति। तत्र सारूप्यं निषेधति न तावदिति। हेतुं पृच्छति कस्मात्। सहेतुकं वैरूप्यहेतुमाह ज्ञातेति। परिणामिनी बुद्धिर्यस्मात् तस्माद्विरूपा यदा खल्वियं शब्दाद्याकारा भवति तदा ज्ञातोऽस्याः शब्दादिस्तद्वीभवति विषयसदनाकारत्वे त्वज्ञातस्तस्माच्च कदाचिदेव

चेतनेति गुणानान्तु पद्रष्टा पुरुष इत्यतो न स्वरूपः अस्तु तर्हि विरूपइति नात्यन्तं विरूपः कस्मात् शुद्धोप्यसौ प्रत्ययानुपश्योयतः प्रत्ययं बौद्धमनुपश्यति तमनुपश्यन्न तदात्मापि तदात्मक इव प्रत्यवभासते। तथाचोक्तं। अपरिणामिनी हि भोक्तृशक्तिरप्रतिसंक्रमाच परिणामिन्यर्थे प्रति-

तदाकारतां दधती परिणामिनीति प्रयोगश्च भवति बुद्धिपरिणामिनी ज्ञाताज्ञात-विषयत्वाच्छ्रोत्रादिवदिति तद्वैधर्म्यं पुरुषस्य तद्विपरीतत्वाद्धेतोः सिद्ध्यतीत्याह। सदेति। स्यादेतत् सदाज्ञातविषयश्चेत् पुरुषो न तर्हि केवलो स्यादित्याशयवान् पृच्छति कस्मादिति। उत्तरं न हि बुद्धिश्चनामेति। बुद्ध्यग्रहणयोरस्ति सह सम्भवो निरोधावस्थायामत उक्तम्। विरोधसूचनाय पुरुषविषयश्चेति। तेना-द्यश्चकारो बुद्धिं विषयत्वेन समुच्चिनोति परिशिष्टौ विरोधद्योतकौ चकाराविति प्रयोगस्तु पुरुषोऽपरिणामी सदा सम्प्रज्ञात व्युत्थानावस्थयोर्ज्ञात विषयत्वात्। यः परिणामी नासौ सदाज्ञात विषयो यथा श्रोत्रादिरिति व्यतिरेकी हेतुः अपरमपि वैधर्म्यमाह। किञ्चपरार्थेति बुद्धिः खलुक्लेशकर्मवासनादिभिर्विषयेन्द्रियादिभिश्च संहत्य पुरुषार्थमभिनिर्वर्त्तयन्ती परार्थाप्रयोगश्च परार्थबुद्धेः संहत्यकारित्वात् शय-नासनाभ्यङ्गवदिति पुरुषस्तु न तथेत्याह। स्वार्थः पुरुष इति सर्व्वं पुरुषाय कल्पते पुरुषस्तु नकस्मैचिदित्यर्थः वैधर्म्यान्तर माह। सर्व्वेति। सर्व्वानर्थान् शान्तघोर-मूढांस्तदाकार परिणता बुद्धिरध्यवस्यति सत्वरजस्तमसां चैते परिणामा इति सिद्धा त्रिगुणा बुद्धिरिति न चैवं पुरुष इत्याह गुणानामिति। तत्प्रतिबिम्बितः पश्यति नतु तदाकार परिणत इत्यर्थः। उपसंहरति अत इति। अस्तितर्हि विरूपइति नात्यन्तं विरूपः कस्मात् यतः शुद्धोपि प्रत्ययानुपपश्यः यथाचैतत् तथोक्तम्। इति-ग्रारूप्यमितरत्रेत्यत्र तथाचोक्तं पञ्चशिखेन अपरिणामिनीहि भोक्तृशक्तिरात्मा अतः

संक्रान्तेव तद्वृत्तिमनुपतति। तस्याश्च प्राप्तचैतन्योपग्रह-
रूपाया बुद्धिवृत्तेरनुकारमात्रतया बुद्धिवृत्त्यविशिष्टा हि
ज्ञानवृत्तिरित्याख्यायते ॥ २० ॥

तदर्थ एव दृश्यस्यात्मा ॥ २१ ॥

दृशिरूपस्य पुरुषस्य कर्म्मविषयतामापन्नं दृश्यमिति
तदर्थ एव दृश्यस्यात्मा भवति स्वरूपं भवतीत्यर्थः स्वरूपन्तु

एव बुद्धावप्रति संक्रमाच परिणामिनि बुद्धिरूपेऽपि सङ्क्रान्तेव तद्वृत्तिं बुद्धिवृत्तिमनु-
पतति। नत्वसङ्क्रान्ता कथं सङ्क्रान्तेव कथं वा वृत्तिं विना अनुपतति इत्यत
आह। तस्याश्चेति। प्राप्तश्चैतन्योपग्रह उपरागो येनरूपेण तत्तथाप्राप्तचैतन्यो-
पग्रहं रूपं यस्याः सा तथोक्ता एतदुक्तं भवति यथा निर्म्मले जलेऽसङ्क्रान्तोऽपि
चन्द्रमाः सङ्क्रान्त प्रतिविम्बतया सङ्क्रान्त इव एवमत्राप्यसङ्क्रान्तापि सङ्क्रान्तप्रति-
विम्बा चितिशक्ति सङ्क्रान्तेव तेन बध्यात्मत्वमापन्ना बुद्धिवृत्ति मनुपततीति तदन-
नानुपश्य इति व्याख्यातं तामनुकारेण पश्यतीत्यनुपश्य इति ॥ २० ॥

द्रष्टृ दृश्ययोः स्वरूपमुक्ता स्वस्वामिलक्षण सम्बन्धाङ्गं दृश्यस्य द्रष्टृर्थत्वमाह।
तत्-त्मा। व्याचष्टे दृशिरूपस्य पुरुषस्यभोक्तुः कर्मरूपतां भोग्यतां मापन्नं दृश्य-
मिति तस्मात् तदर्थ एव दृश्यस्यात्मा भवति न तु दृश्यार्थः ननुनात्मा आत्मार्थः इत्यत
आह। स्वरूपं भवतीति एतदुक्तं भवति सुखदुःखात्मकं दृश्यं भोग्यं सुखदुःखि
चानुकूलयितृ प्रतिकूलयितृ नीतत्वेन तदर्थे एव व्यवतिष्ठन्ते विषया अपितु शब्दा-
दयस्तादात्म्यादेवचानुकूलयितारः प्रतिकूलयितारश्च नचात्मवेषामनुकूलनीय प्रति-

स्वरूपेण प्रतिलब्धात्मकं भोगापवर्गार्थतायां कृतायां पुरुषेण न दृश्यत इति स्वरूपहानात् दृश्यनाशः प्राप्तो न तु विनश्यति ॥ २१ ॥

कस्मात्—

**कृतार्थं प्रति नष्टमप्यनष्टं तदन्यसाधारणत्वात् ॥ २२ ॥**

कृतार्थमेकं पुरुषं प्रतिदृश्यं नष्टमपि नाशं प्राप्तमप्यनष्टं तदन्यपुरुषसाधारणत्वात् कुशलं पुरुषं प्रति नाशं



कूलनीयस्य स्वात्मनि वृत्तिविरोधादतः परिशेष्याच्चितिशक्तिरेवानुकूलनीया प्रतिकूलनीयाच तस्मात्तदर्थमेव दृश्यं न तु दृश्यार्थं अतश्च तदर्थ एव दृश्यस्यात्मा न दृश्यार्थो यत् स्वरूपमस्य यावत् पुरुषार्थमनुवर्त्तते निवर्त्तितेच पुरुषार्थे निवर्त्तेत इत्याह स्वरूपन्तु दृश्यस्य जड़ं पररूपेण चैतन्येन प्रतिलब्धात्मक मनुभूत स्वरूपं भोगापवर्गार्थतायां कृतायां पुरुषेण न दृश्यते भोगः सुखाद्याकारः शब्दाद्यनुभवोऽपवर्गः सत्वपुरुषान्यतानुभवस्तच्चैतदुभयमप्यजानतोः जड़योः बुद्धेः पुरुषच्छायापत्त्येति पुरुषस्यैव तथाच पुरुष भोगापवर्गयोः कृतयोः दृश्यस्य भोगापवर्गार्थता समाप्यत इति भोगापवर्गार्थतायां कृतायामित्युक्तं । अवान्तरे चोदयति स्वरूपहानादिति परिहरति न तु विनश्यति ॥ २१ ॥

नन्वत्यन्तानुपलभ्यं कथं न विनश्यति इत्याशयवान् पृच्छति । कस्मादिति । सूत्रेणोत्तरमाह । कृतार्थत्वात् । कृतोऽर्थो यस्य पुरुषस्य स तथा तं

प्राप्तमप्यकुशलान् पुरुषान् प्रत्यकृतार्थमिति तेषां दृशेः कर्म्म-विषयतामापन्नं लभते एव पररूपेणात्मरूपमिति अतश्च दृग्दर्शनशक्त्योर्नित्यत्वादनादिः संयोगोव्याख्यातइति तथा-चोक्तं धर्म्मिणामनादिसंयोगाद्धर्म्ममात्राणामप्यनादिसंयो-गइति संयोगस्वरूपाभिधित्सयेदं सूत्रं प्रवर्त्तते ॥ २२ ॥

प्रतिनष्टमप्यनष्टं तद्दृश्यं कुतः सर्व्वान् पुरुषान् कुशलाकुशलान् प्रति साधारण-त्वात्। व्याचष्टे कृतार्थमेकमिति नाशोऽदर्शनं अनष्टन्तु दृश्यमन्य पुरुषसाधारण-त्वात् तस्मात् दृश्यात् परस्मात्मनः चैतन्यं रूपं तेन वृद्धि श्रुति स्मृति इतिहास पुराण प्रसिद्धमव्यक्तमनवयवमेकमनाश्रयं व्यापि नित्यं विश्वकार्य्यशक्तिमत् यद्यपि कुशलेन तं प्रति कृतकार्य्यं न दृश्यते तथाप्यकुशलेन दृश्यमानं न नास्ति न हि रूपमन्धेन न दृश्यत इति चक्षुष्मतापि दृश्यमान मभावप्राप्तं भवति न च प्रधान वदेक एव पुरुषस्तन्नानात्वस्य जन्म मरण सुख दुःखोपभोग मुक्ति संसार व्यव-स्थया सिद्धेः एकत्वश्रुतीनाञ्च प्रमाणान्तर विरोधात् कथञ्चित् देशकाल विभागा-भावेन भक्त्याप्युपपत्तेः प्रकृत्येकत्व पुरुष नानात्वयोश्च श्रुत्यैव साक्षात् प्रति-पादनात् "अजामेकां लोहित शुक्लकृष्णां वह्वीः प्रजाः सृजमानां सरूपाः। अजो-ह्येको जुषमाणो नुशेते जहात्येनां भुक्तभोगामजोन्यः" इति श्रुतिः अस्या एव-श्रुतेश्चानेन सूत्रेणार्थोऽनूदित इति यतो दृश्यं नष्ट मप्यनष्ट पुरुषान्तरं प्रत्यस्ति अतो दृग्दर्शन शक्त्योर्नित्यत्वादनादि संयोगो व्याख्यातः अत्रैवागमिना मनुमति माह। यथाचोक्त मिति। धर्म्मिणां गुणाना मानभिरनादि संयोगाद्धर्म्ममात्राणां महदादीना मप्यनादिः संयोग इति एकैकस्य महदादेः संयोगो अनादिरप्यनित्य-एव यद्यपि तथापि सर्व्वेषां महदादीनां नित्यपुरुषान्तराणां साधारणत्वादत उक्तं धर्म्ममात्राणामिति। मात्रग्रहणेन व्याप्तिं गमयति अत एतद्भवति ॥ २२ ॥

**स्वस्वामिशक्त्योः स्वरूपोपलब्धिहेतुःसंयोगः ॥ २३ ॥**

पुरुषः स्वामी दृश्येन स्वेन दर्शनार्थंसंयुक्तस्तस्मात् संयोगाद्दृश्यस्योपलब्धिर्या स भोगः या तु द्रष्टुः स्वरूपोपलब्धिः सोऽपवर्गः दर्शनकार्य्यावसानः संयोगइति दर्शनं वियोगस्य कारणमुक्तं दर्शनमदर्शनस्य प्रतिद्वन्द्वीति अदर्शनं संयोगनिमित्तमुक्तं नात्र दर्शनं मोक्षकारणमदर्शनाभावा-

यद्यप्येकस्य महतः संयोगीतीततामापन्न स्तथापि महदन्तरस्य पुरुषान्तरेण संयोगीनातीत इति नित्यउक्तः तदेवं तादर्थ्ये संयोगकार उक्ते प्रासङ्गिके प्रधाननित्यत्वे संयोग सामान्यनित्यत्वे हेतौ चोक्ते संयोगस्य यत् स्वरूपमसाधारणो विशेष इति यावत् तदभिधित्सयेदं सूत्रं प्रवर्त्तते । स्व—गः । यतोदृश्यं तदर्थमतस्तज्जनित मुपकारं भजमानः पुरुषस्तस्य स्वामी भवति । भवति च दृश्यमस्य स्वं तयोरनयोः संयोगः शक्तिमात्रेण व्यवस्थितस्तत्स्वरूपोपलब्धि हेतुः तदेतद्भाष्यमवद्योतयति पुरुषः स्वामी योग्यतामात्रेण दृश्येन स्वेन योग्यतयैव दर्शनार्थं संयुक्तः शेषं सुगमं स्यादेतत् द्रष्टुः स्वरूपोपलब्धिरपवृज्यते अनेनेत्यपवर्गउक्तः नचमोक्षः साधनवांस्तथा सत्ययं मोक्षत्वादेव च्यवेतेत्यत आह । दर्शनकार्य्यावसानो बुद्धिविशेषेण सहपुरुष विशेषस्य संयोगइति दर्शनं वियोग कारणमुक्तं कस्मै कथं पुनर्दर्शन कार्य्यावसानत्वं संयोगस्येत्यत आह । दर्शनमिति । ततः किमित्यत आह । अदर्शनमविद्या संयोग निमित्तमित्युक्तं उक्तमर्थं स्पष्टयति । नात्रेति । ननु दर्शनमदर्शनं विरोधिनं विनिवर्त्तयतु बन्धस्य कुतो निवृत्तिरित्यत आह । दर्शनस्येति । बुद्ध्यादि हि विविक्तस्यात्मनः स्वरूपा-

देव बन्धाभावः स मोक्षइति दर्शनस्य भावे बन्धकारणस्या-
दर्शनस्य नाश इत्यतो दर्शनं ज्ञानं कैवल्यकारणमुक्तम्।
किञ्चेदमदर्शनं नाम किं गुणानामधिकारः आहोस्वि-
द्दृशिरूपस्य स्वामिनोदर्शितविषयस्य चित्तस्यानुपादः
स्वस्मिन् दृश्ये विद्यमाने योदर्शनाभावः किमर्थवत्ता-
गुणानामथाविद्या स्वचित्तेन सह निरुद्धा स्वचित्तस्यो-
त्पत्तिबीजं किं स्थितिसंस्कारक्षये गतिसंस्काराभिव्यक्तिः।

वस्थानं मोक्षउक्तोन तस्य साधनं दर्शन मविवेकदर्शन निवृत्ति रित्यर्थः असाधारणसं-
योग हेतुमदर्शनविशेषं गृहीतुं अदर्शनमात्रं विकल्पयति। किञ्चेदमिति पर्य्युदासं
गृहीत्वाह किं गुणानामधिकारः कार्य्यारम्भण सामर्थ्यं ततोहि संयोगः संसार हेतु
रुपजायते। प्रसज्य प्रतिषेधं गृहीत्वा द्वितीयं विकल्पमाह,आहोस्विदिति दर्शित-
विषयः शब्दादिः सत्वपुरुषान्यताच येन चित्तेन तस्य तद्विषयस्यानुत्पादः एतदेव
स्फोरयति। स्वस्मिन् दृश्ये शब्दादौ सत्वपुरुषान्यतायाञ्चेति तावदेव प्रधानं विते-
ष्टवे न यावत् द्विविधं दर्शनमभिनिर्वर्त्तयति निष्पादितोभय दर्शनं तु विनिवर्त्तते
इति पर्य्युदास एव। तृतीयं विकल्पमाह किमर्थवत्ता गुणानां सत्कार्य्यवाद
सिद्धौहि भाविनावपि भोगापवर्गौव्यपदेश्यतयास्त इत्यर्थः पर्य्युदास एव चतुर्थं
विकल्पमाह। तथाविद्या प्रति सर्गकाले स्वचित्तेन सह निरुद्धाप्रधान साम्यमा-
गता वासनारूपेण स्वचित्तोत्पत्ति बीजं तेन दर्शनादन्या विद्यावासनैवादर्शन
मुक्तापर्य्युदासएव। पञ्चमं विकल्पमाह किं स्थिति संस्कारस्य प्रधानवर्त्तिनः
साम्यपरिणाम परम्परा वाहिनः क्षये गति महदादि विकारारम्भस्तद्धेतुः संस्कार-
प्रधानस्य गति संस्कारारम्भथाभिव्यक्तिः कार्य्योन्मुखत्वं तदुभय संस्कार सद्भावे
मतान्तरानुमति माह। यत्रे मुक्तमैकान्तिकत्वं व्योसेधद्भिः प्रधीयते जन्यते विकार

यत्त्वेदमुक्तं प्रधानं स्थित्यैव वर्त्तमानं विकाराकरणादप्रधानं स्यात्तथा गत्यैव वर्त्तमानं विकारनित्यत्वादप्रधानं स्यात्। उभयथा चास्य वृत्तिः प्रधानव्यवहारं लभते नान्यथा कारणान्तरेष्वपि कल्पितेष्वेव समानश्चर्चः दर्शनशक्तिरेवादर्शनमित्येके प्रधानस्यात्मख्यापनार्था प्रवृत्तिरिति श्रुतेः सर्व्वबोध्यबोधसमर्थः प्राक् प्रवृत्तेः पुरुषो

जात मनेनेति प्रधानं तच्चेत् स्थित्यैव वर्त्तेत न कदाचिद्गत्या ततो विकाराकरणान्न प्रधीयते तेन किञ्चिदित्यप्रधानं स्यात्। अथ गत्यैव वर्त्तेत न कदाचिदपि स्थित्या तदाह। तथागत्यैवेति क्वचित्पाठः। स्थित्यै गत्यै इति तादर्थ्ये चतुर्थी एवकारस्य द्रष्टव्यः स्थित्यै चेन्नवर्त्तेत न क्वचिद्विकारी विनश्येत तथाच भावस्य सतो ऽविनाशिनी नोत्पत्तिरपीति विकारत्वादेव व्यवेत एवञ्च न प्रधीयते अत किञ्चिदित्यप्रधानं स्यात्। तदुभयथा स्थित्या गत्या चास्य वृत्तिः प्रधानव्यवहारं लभते नान्यथा एकान्ताभ्युपगमे। न केवलं प्रधाने कारणान्तरेष्वपि परब्रह्मतन्मात्रा परमाण्वादिषु कल्पितेषु समानश्चर्चो विचारः तान्यपि हि स्थित्यैव वर्त्तमानानि विकाराकरणादकारणानि स्युः गत्यैव वर्त्तमानानि विकारनित्यत्वादकारणानि स्युरिति च पर्य्युदासएव। षष्ठं कल्पमाह दर्शनशक्तिरेवेति। यथा प्रजापतिव्रते नेचेतोद्यन्तमादित्यमिति अनीचण प्रत्यासन्नः संकल्पो गृह्यते एवमिहापि दर्शननिषेधे तत्प्रत्यासन्ना तन्मूला शक्तिरुच्यते सा च दर्शनं भोगादिलक्षणं प्रसीतुं द्रष्टारं दृश्येन योजयतीति अत्रैव श्रुतिमाह।

प्रधानस्येति। स्यादेतत् प्रधानं आत्मख्यापनार्थं प्रवर्त्तते इति श्रुतिराह नतु आत्मदर्शनशक्तिः प्रवर्त्तत इत्यतआह सर्व्वबोध्यबोधसमर्थ इति प्राक् प्रवृत्तेः प्रधानस्य नात्मख्यापनयाच्नं प्रवृत्तौ प्रबीजकमसामर्थ्य तद्‌योगात् तस्मात् सामर्थ्यं प्रवृत्तेः

न पश्यति सर्व्वकार्य्यकारणसमर्थं दृश्यं तदा न दृश्यत इति । उभयस्याप्यदर्शनं धर्म्म इत्येके । तत्रेदं दृश्यस्य स्वात्मभूतमपि पुरुषप्रत्ययमपेक्ष्य दर्शनं दृश्यधर्म्मत्वेन भवति तथा पुरुषस्यानात्मभूतमपि दृश्यप्रत्ययापेक्षं पुरुषधर्म्मत्वेनेवादर्शनमवभासते दर्शनं ज्ञानमेवादर्शनमिति केचिदभिदधति इत्येते शास्त्रगता विकल्पास्तत्र विकल्पबहुत्वमेतत् सर्व्वपुरुषाणां गुणसंयोगे साधारणविषयं यस्तु प्रत्यक्चैतन्यस्य स्वबुद्धिसंयोगः ॥ २३ ॥

प्रयोजकमिति । श्रुत्यार्थादुक्तमित्यर्थः दर्शनशक्तिः प्रधानाश्रयेत्यङ्गीकृत्य षष्ठः कल्पः । इमामेवोभयाश्रयामास्थाय सप्तमं कल्पमाह उभयस्य पुरुषस्य च दृश्यस्य चादर्शनं दर्शनशक्तिधर्म्म इत्येके स्यादेतन्म्ब्यामहे दृश्यस्येति तस्य सर्व्वशक्त्याश्रयत्वान्न द्रष्टुरिति पुनर्म्ब्यामः नहि तदाधारा ज्ञानशक्तिस्तत्रज्ञानस्यासमवायादन्यथा परिणामापत्तिरित्यत आह । तत्रेदमिति भवतु दृश्यात्मकं तथापि तस्य जड़त्वेन तद्गतशक्तिकार्य्यं दर्शनमपि जड़मिति न शक्यं तद्धर्म्मत्वेन विज्ञातुं जड़स्य स्वयमप्रकाशत्वादतो दृशेरात्मनः प्रत्ययं चैतन्यच्छायापत्तिमपेक्ष्य दर्शनं तद्धर्म्मत्वेन भवति विज्ञायते विषयेण विषयिणो लक्षणात् नन्वेतावतापि दृश्यधर्म्मत्वमस्य ज्ञानस्य भवति नतु पुरुषधर्म्मत्वमपीत्यत आह । तथापुरुषस्येति सत्वं पुरुषस्यानात्मभूतमेव तथापि दृश्यबुद्धिसत्वस्य यः प्रत्ययश्चैतन्यच्छायापत्तिस्तमपेक्ष्य पुरुषधर्म्मत्वेन इव न तु पुरुषधर्म्मत्वेन एतदुक्तं भवति चैतन्यविम्बोद्ग्राहितया बुद्धिचैतन्ययोरभेदात् बुद्धिधर्म्माश्चैतन्यधर्म्मा इव चकासति इति ॥ अष्टमं कल्पमाह दर्शनं ज्ञानमेव शब्दादीनामदर्शनं न तु सत्वपुरुषान्यतया इति केचिद् यथाचक्षुरूपे प्रमाणमपि रसादाव प्रमाणमुच्यते । एतदुक्तं भवति । सुखाद्याकार शब्दादिज्ञानानि

## तस्य हेतुरविद्या ॥ २४ ॥

विपर्य्ययज्ञानवासनेत्यर्थः विपर्य्ययज्ञान वासना वासिता न कार्य्यनिष्ठां पुरुषख्यातिं बुद्धिः प्राप्नोति साधिकारा पुनरावर्त्तते । सा तु पुरुषख्यातिपर्य्यवसाना कार्य्यनिष्ठां प्राप्नोति चरिताधिकारा निवृत्तादर्शना बन्धकारणाभावान्न पुनरावर्त्तते अत्र कश्चित् षण्डकोपाख्यानेनोद्घाटयति मुग्धया भार्य्ययाभिधीयते षण्डक आर्य्यपुत्रापत्यवती मे

स्वमिद्यानुगुणतया द्रष्टृदृश्यसंयोगमाक्षिपत्तीति । तदेवं विकल्पा चतुर्थं विकल्पं स्वीकर्त्तुं इतरेषां विकल्पानां सांख्यशास्त्र गतानां सर्व्वपुरुषसाधारण्येन भोग वैचित्र्याभाव प्रसङ्गेन दुषयति इत्येते शास्त्रगता इति चतुर्थं विकल्प निद्धारयितुं निद्धारितम् ॥ २३ ॥

सूत्रमवतारयति । यस्तु प्रत्यकचेतनस्य स्वबुद्धि संयोग इति प्रति प्रतीपमयति प्राप्नोति इति प्रत्येक असाधारणस्तु संयोग एकैकस्य पुरुषस्य कयैकया बुद्धा- वैचित्र्यहेतुः सूत्रं पठति। तस्येति । ननु अविद्याविपर्य्यय ज्ञानं तस्य भोगापवर्गयोरिव स्वबुद्धिसंयोगोहेतुः असंयुक्तायां बुद्धौ तदनुत्पत्तेः तत्कथमविद्या संयोगभेदस्य हेतुरित्यत आह। वि य्यय ज्ञानवासनेनि सर्गान्तरीयायाः अविद्यायाः स्वचित्तेन सह निरुद्धाया अपि प्रधाने अस्ति वासना तद्वासनावासितञ्च प्रधानं तत्तत् पुरुषसंयोगिनीं तादृशीमेव बुद्धिं सृजति एवं पूर्व्व पूर्व्वसर्गेष्वित्यनादित्याददोषः अतएव प्रतिसर्गावस्थायां न पुरुषोमुच्यते इत्याह विपर्य्ययज्ञानेति ।

यदा पुरुषख्यातिं कार्य्यनिष्ठां प्राप्ता तदाविपर्य्यय ज्ञान वासनाया बन्धकारणस्याभावान्न पुनरावर्त्तते इत्याह । सत्विति अत्र कश्चिन्नास्तिकः कैवल्यं षण्डकोपा-

भगिनी किमर्थं नाहमिति स तामाह मृतस्तेहमपत्य मुत्पादयिष्यामि इति तथेदं विद्यमानं ज्ञानं चित्तनिवृत्तिं न करोति विनष्टं करिष्यतीति का प्रत्याशा तत्राचार्य्यदेशीयोव्यक्तिः न तु बुद्धिनिवृत्तिरेव मोक्षोऽदर्शनकारणाभावात् बुद्धिनिवृत्तिस्तत्रादर्शनं बन्धकारणं दर्शनान्निवर्त्तते। तत्रचित्तनिवृत्तिरेव मोक्षः किमर्थमस्था एवास्य मति विभ्रमम् ॥ २४ ॥

हेयं दुःखं हेयकारणञ्च संयोगाख्यं स निमित्तमुक्तमतः परं हानं वक्तव्यम्—

**तदभावात् संयोगाभावो हानं तद्दृशेः कैवल्यम् ॥ २५ ॥**

ख्यानिनोपहसति । षण्ढकोपाख्यानमाह मुग्धयेति किमर्थमित्यर्थः शब्दोनिमित्त मुपलक्षयति प्रयोजनस्यापि निमित्तत्वात् षण्ढकोपाख्यानेन साम्यमापादयति तथेदं विद्यमानं गुण पुरुषान्यताख्याति ज्ञानं चित्तनिवृत्तिं न करोति परवैराग्येन ज्ञान प्रसाद मात्रेण स संस्कारं निरुद्ध विनष्टं करीष्यतीति का प्रत्याशा यस्मिन् सत्येव यद्भवति तत् तस्यकार्य्यं न तु यस्मिन् सतीति भावः अत्रैकदेशिमतेन परिहारमाह। तत्रेति ईषद परिसमाप्त आचार्य्य देशीयः आचार्य्यस्तु वायुप्रोक्त क्षतलक्षणः आचिनोति च शास्त्रार्थ समाचारे स्थापयत्यपि स्वयमाचरते यस्मादाचार्य्यस्तेन चोच्यते इति भोगविवेक ख्यातिरूप परिणत बुद्धि निवृत्तिरेव मोक्षः न च बुद्धि स्वरूप निवृत्तिः सा च धर्म्ममेघान्त विवेकख्याति प्रतिष्ठाया अनन्तरमेव भवति सत्यपि बुद्धि स्वरूपमात्रावस्थान इत्यर्थः एतदेव स्फोरयति अदर्शनस्य बन्धकारणस्याभावात्

तस्यादर्शनस्याभावात् बुद्धिपुरुषसंयोगाभावः आत्यन्तिको बन्धनोपरमइत्यर्थः एतद्धानं तद्दृशे कैवल्यं पुरुषस्यामिश्रीभावः पुनरसंयोगो गुणैरित्यर्थः दुःखकारणनिवृत्तौ दुःखोपरमो हानं तदा स्वरूपप्रतिष्ठः पुरुषइत्युक्तम् ॥ २५ ॥

अथ हानस्य कः प्रत्युपाय इति—

**विवेकख्यातिरविप्लवा हानोपायः ॥ २६ ॥**

सत्वपुरुषान्यताप्रत्ययो विवेकख्यातिः सत्वनिवृत्तमिथ्याज्ञानाप्लवते यदा मिथ्याज्ञानं दग्धवीजभावं बन्ध्याप्रसवं सम्पद्यते तदा विधूतक्लेशरजसः सत्वस्य परे वैशारद्ये परस्यां वशीकारसंज्ञायां वर्त्तमानस्य विवेकप्रत्यय-

बुद्धिनिवृत्तिस्तस्मादर्शनं बन्धकारणं दर्शनान्निवर्त्तते दर्शन निवृत्तिस्तु परवैराग्यसाध्या सत्यपि बुद्धि स्वरूपावस्थाने मोक्षइति भावः एकदेशिमत मुपन्यस्य स्वमत माह तत्र चित्त निवृत्तिरेव मोक्षः। नन्नूक्तं दर्शने निवर्त्त ऽचिराच्चित्त स्वरूप निवृत्ति र्भवतीति। कथं दर्शनकार्य्यं त्यत आह। किमर्थमस्थाने सति विभ्रम इति अयमभिसन्धिः यदि दर्शनस्य साक्षाच्चित्त निवृत्तौ कारणभाव मङ्गीकुर्व्वीमहि तत एव मुपालभ्येमहि किन्तु विवेक दर्शनं प्रकर्षकाष्ठां प्राप्तं निरोध समाधिभावना प्रकर्ष क्रमेण चित्तनिवृत्तिमत्युरुग स्वरूपावस्थानोपयोगोव्यातिष्ठामहे तत्रैवमुपालभ्येमहीति ॥ २५ ॥

प्रवाहोनिर्म्मलोभवति सा विवेकख्यातिरविप्लवा हानस्योपायः ततो मिथ्याज्ञानस्य दग्धवीजभावोपगमः पुनश्चाप्रसवइत्येष मोक्षस्य मार्गोहानस्योपायइति ॥ २६ ॥

## तस्य सप्तधा प्रान्तभूमिः प्रज्ञा ॥ २७ ॥

तस्येति। प्रत्युदितख्यातेः प्रत्याम्नायः सप्तधेति अशुद्ध्यावरणमलापगमाच्चित्तस्य प्रत्ययान्तरानुत्पादे सति सप्तप्रकारैव प्रज्ञा विवेकिनो भवति। तद् यथा परिज्ञातं हेयं

तदेवंव्यूहद्वयमुक्त्वा तृतीयव्यूहाभिधानाय सूत्रमवतारयति। हेयं दुःखमुक्तमिति। तुर्य्यं व्याचष्टे तस्येति। अस्ति हि महाप्रलयेपि संयोगाभावः तदुक्तं मात्यन्तिक इति दुःखोपरमोहानमिति। पुरुषार्थता दर्शिताशेषमतिरोहितार्थं हानोपाय लक्षणं चतुर्थं व्यूहमाख्यातुं सूत्रमवतारयति अथेति। आगमानुमानाभ्यामपि विवेकख्यातिरस्ति नचासौ व्युत्थानं तत्संस्कारं वा निवर्त्तयति ततोपि तदनुवृत्ते रिति तन्निवृत्त्यर्थं मविप्लवेति विप्लवः मिथ्याज्ञानं तद्रहितः एतदुक्तं भवति श्रुतमयेन ज्ञानेन विवेकं गृहीत्वा युक्तिमयेन च व्यवस्थाप्य दीर्घकाल नैरन्तर्य्य सत्कार सेवितायाः भावनायाः प्रकर्ष पर्य्यन्तं समधिगता साक्षात्कारवती विवेकख्याति निवर्त्तित सवासन मिथ्याज्ञानानि विप्लवा हानोपाय इति। शेषं सुगमं भाष्यं ॥ २६ ॥

विवेकख्याति निष्ठाया स्वरूपमाह सूत्रेण तस्य—प्रज्ञा। व्याचष्टे तस्येति प्रत्युदित ख्याते वर्त्तमान ख्याते योगिनः प्रत्याम्नायः परामर्शः अशुद्धिरेवावरणं चित्तमलस्य तदेवमलं तस्यापगमात् चित्तस्य प्रत्ययान्तरानुत्पादे तामसराजसव्युत्थान

नास्य पुनः परिज्ञेयमस्ति चीणा हेयहेतवो न पुनरेतेषां चेतव्यमस्ति साचात्कृतं निरोधसमाधिना हानं। भावितो विवेकख्यातिरूपोहानोपायइत्येषा चतुष्टयी कार्य्याविमुक्तिः प्रज्ञायाः चित्तविमुक्तिस्तु त्रयी चरिताधिकारा बुद्धिगुणा गिरिशिखरकूटच्युताइव ग्रावाणोनिरवस्थानाः स्वकारणे प्रलयाभिमुखाः सह तेनास्तं गच्छन्ति। न चषां विप्रलीनानां पुनरस्त्युत्पादः प्रयोजनाभावादिति एतस्यामवस्थायां गुणसम्बन्धातीतस्वरूपमात्र ज्योतिरमलः केवलीपुरुष इत्येतां सप्तविधां प्रान्तभूमिप्रज्ञामनुपश्यन् पुरुषः कुशलइत्याख्या-





प्रत्ययानुत्पादेनिर्विप्लवविवेकख्याति निष्ठामापन्नस्य सप्तप्रकारैव प्रज्ञाविवेकिनी भवति विषयभेदात् प्रज्ञाभेदः प्रकृष्टोन्तो यासां भूमीनामवस्थानां तास्तथोक्ता यतः परं नास्ति संप्रकर्षः प्रान्ताभूमयः यस्याः प्रज्ञाया विवेकख्यातेः सा तथोक्ता ता एव सप्त प्रकाराःप्रज्ञाभूमी उदाहरति। तदयथेति तत्र पुरुष प्रयत्न निष्पाद्यासु चतसृषु भूमिषु प्रथमामुदाहरति परिज्ञातं हेयं यावत् किल प्राधानिकं तत्सर्व्वं परिणामताप संस्कारैर्गुण वृत्ति विरोधात् दुःखमेवेति हेयं तत्परिज्ञातं प्रान्ततां दर्शयति नास्य पुनः किञ्चिद परिज्ञातं परिज्ञेयमस्ति। द्वितीयामाह चीणा इति। प्रान्ततामाह न पुनरिति। तृतीयामाह साचात् कृतं प्रत्यचेण निश्चितं मया संप्रज्ञातावस्थाया मेव निरोधसमाधिसाध्यं हानं न पुनरस्मात् परं निश्चेतव्य मस्तीतिशेषः। चतुर्थीमाह भावितो निष्पादितः विवेकख्यातिरूपोहानोपायो नास्याः परं भावनीयमस्ति इति शेषः एषा चतुष्टयी कार्य्याविमुक्तिः समाप्ति कार्य्यतया प्रयत्न व्याप्यता दर्शिता क्वचित् पाठः कार्य्यविमुक्तिरितिःकार्य्यान्तरेण विमुक्तिः प्रज्ञाया इत्यर्थः प्रयत्ननिष्पा-

यते प्रतिप्रसवेपि चित्तस्य मुक्तः कुशल इत्येव भवति गुणा-तीतत्वादिति सिद्धा भवति विवेकख्यातिर्हानोपायः इति ॥ २७ ॥

न च सिद्धिरन्तरेण साधनमित्येतदारभ्यते—

**योगाङ्गानुष्ठानादशुद्धिक्षये ज्ञानदीप्तिरा विवेकख्यातेः ॥२८॥**

योगाङ्गान्यष्टावभिधायिष्यमाणानि तेषामनुष्ठानात् पञ्चपर्व्वणो विपर्य्ययस्याशुद्धिरूपस्य क्षयो नाशस्तत्क्षये सम्यक् ज्ञानस्याभिव्यक्तिर्यथा यथा च साधनान्यनुष्ठीयन्ते तथा

थानुनिष्पादनीयानि प्रयत्नसाध्यां चित्तविमुक्तिमाह चित्तविमुक्तिस्तु त्रयी प्रथमामाह चरिताधिकारा बुद्धिकृतभोगापवर्ग कार्य्येत्यर्थः। द्वितीयामाह गुणाइति प्राप्ततामाह न चैषामिति। तृतीयामाह एतस्यामवस्थाया मिति एतस्यामवस्थायां जीवन्नेव पुरुषः कुशलोमुक्त इत्युच्यते चरमदेहत्वादित्याहएतामिति। अनौपचारिकं मुक्तमाह प्रतिप्रसवे प्रधानलयेपि चित्तस्य मुक्तः कुशल इत्येव भवति गुणातीतत्वादिति ॥ २७ ॥

तदेवं चतुरोव्यूहानुक्त्वा तन्मध्यपतितस्यहानोपायस्य विवेकख्यातेर्गोदोहनादिवत् प्राक् सिद्धेरसिद्धस्य चोपायत्वाभावात् सिध्युपायानि वक्तुमारभत इत्याह। सिद्धेति तत्राभिधास्यमानानां साधनानां येनप्रकारेण विवेकख्यात्युपायत्वं तद्दर्शयति सूत्रेण येति। योगाङ्गानि हि यथायोगं दृष्टादृष्टद्वारेणाशुद्धिं क्षिण्वन्ति पञ्चपर्व्वणो विपर्य्ययस्येत्युपलक्षणं पुण्यापुण्ययोरपि जात्यायुर्भोगहेतुत्वे नाशुद्धिरूपत्वादिति शेषं सुगमं नानाविधस्य कारण भावस्य दर्शनात् योगाङ्गानुष्ठानस्य कीदृशं कारणत्वमित्यत

तथा तनुत्वमशुद्धिरापद्यते यथा यथाच चीयते तथा तथाच चयक्रमानुरोधिनी ज्ञानस्यापि दीप्ति र्विवर्द्धते स खल्वेषा विवृद्धिः प्रकर्षमनुभवति आविवेकख्यातेः वा गुणपुरुष स्वरूप विज्ञानादित्यर्थः। योगाङ्गानुष्टानमशुद्धेर्वियोगकारणं यथा परशुः छेद्यस्य विवेकख्यातेस्तु प्राप्तिकारणं यथा धर्म्मः सुखस्य नान्यथाकारणं कति चैतानि कारणानि शास्त्रे भवन्ति नवैवेत्याह। तद् यथा—"उत्पत्तिस्थित्याभिव्यक्ति विकारप्रत्ययाप्तयः। वियोगान्यत्वधृतयः कारणं नवधा

आह। योगाङ्गानुष्ठानमिति। अशुध्या वियोजयति बुद्धिसत्वमिति अशुद्धे वियोग कारणं दृष्टान्त माह। यथा परशुरिति परशुः छेद्यं वृक्षं मूलेन वियोजयति अशुद्ध्या वियोजयद् बुद्धि सत्वं विवेकख्यातिं प्रापयति यथा धर्म्मः सुखं तथा योगाङ्गानुष्ठानं विवेकख्यातेः प्राप्तिकारणं नान्येन प्रकारेणेत्याह। विवेकख्यातेस्त्विति नान्यथेति। प्रतिषेध श्रवणात् पृच्छति कति चैतानीति। उत्तरं नवैवेति तानि दर्शयति कारिकया तद्यथा उत्पत्ति इति अत्रोदाहरणान्याह तत्रोत्पत्तिकारणमिति मनोविज्ञान मव्यपदेश्यावस्थातोपनीय वर्त्तमानावस्थामापादय दुत्पत्ति कारणं विज्ञानस्य स्थिति कारणं मनसः पुरुषार्थता अस्मिताया उत्पन्नं मनस्तावदेव तिष्ठते न यावद्विविधं पुरुषार्थमभि निर्वर्त्तयति अथ निर्वर्त्तित पुरुषार्थे इयं स्थितेरपैति तस्मात् स्वकारणादुत्पन्नस्य मनसोनागत पुरुषार्थता स्थिति कारणं दृष्टान्तमाह। शरीरस्येवेति प्रत्यक्षज्ञान निमित्त मिन्द्रियद्वारा स्वतो वा विषयस्य संविदाभिव्यक्तिस्तस्याः कारणं यथा रूपस्यालोकः विकार कारणं मनसो विषयान्तरं यथा हि स्वकर्थीः समाहित मनसो वल्लकी विपञ्चभान पञ्चमस्वर श्रवण समनन्तर सुखीलित्मानस।

स्मृत''मिति। तत्रोत्पत्तिकारणं मनोभवति ज्ञानस्य स्थिति-
कारणं मनसः पुरुषार्थता शरीरस्येवाहारइति अभि-
व्यक्तिकारणं यथा रूपस्यालोकस्तथा रूपज्ञानं। विकार-
कारणं मनसो विषयान्तरम् यथाग्निः पाक्यस्य
प्रत्ययकारणं धूमज्ञान मग्निज्ञानस्य प्राप्तिकारणं योगा-
ङ्गानुष्ठानं विवेकख्यातेः वियोगकारणं तदेवाशुद्धेः अन्य-

स्वरूप लावण्य यौवनसम्पन्ना मप्सरसं प्रम्लोचा मीक्षमानस्य समाधिमपहाय तस्यां
सक्तं मनोबभूवेति अत्रैव निदर्शनमाह। यथाग्निः पाक्यस्य तण्डुलादेः कठिना-
वयव सन्निवेशस्य प्रशिथिलावयवसंयोगलक्षणस्य विकारस्य कारणं मतएव विषयस्य
प्रत्ययकारणं धूमज्ञानमग्निज्ञानस्येति ज्ञायतइति ज्ञानं अग्निश्चासौ ज्ञानं चेति
अग्निज्ञानं तस्य एतदुक्तं भवति वर्त्तमानस्यैवाग्नेर्ज्ञेयस्य प्रत्यय कारणतया कारण-
मिति औत्सर्गिकी निरपेक्षाणां कारणानां कार्य्यक्रिया प्राप्तिस्तस्याः कुतश्चिदपवादी
ऽप्राप्तिः यथा निम्नोपसर्पणस्वभावानामपां प्रतिबन्धः सेतुना तथेहापि बुद्धिसत्वस्य सुख
प्रकाश शीलस्य स्वाभाविकी सुख विवेकख्याति जनकता प्राप्तिः। सा कुतश्चिदधर्म्मा-
त्तमसो वा प्रतिबन्धान्न भवति धर्म्मात् योगाङ्गानुष्टानाद्वा तदपनये तद प्रतिबन्ध-
वृत्ति स्वभावत एव तज्जनकतया तदाप्नोत्ति यथा वक्ष्यति निमित्त प्रयोजकं प्रकृतीनां
वरणभेदस्तु ततः क्षेत्रिकवदिति तदेव विवेकख्याति लक्षण कार्य्यापेक्षया प्राप्तिकारण
मुक्त अवान्तर कार्य्यापेक्षया तु तदेव वियोग कारण मित्याह वियोगकारण मिति।

अन्यत्वकारणमाह। अन्यत्वकारणं यथा सुवर्णकारः सुवर्णस्य कटककुण्डल
केयूरादिभ्योभिन्नाभिन्नस्य भेद विवक्षया कटकादि भिन्नस्या भेदः विवक्षया कटकादि
भिन्नस्य सुवर्णस्य कुण्डलादन्यत्वं तथाच कटककारी सुवर्णकारः कुण्डलादभिन्नात्
सुवर्णादन्यत् कुर्व्वन्नन्यत्वकारणं अग्निरपि पाक्यस्यान्यत्व कारणं यद्यपि तथापि

त्वकारणं यथा सुवर्णकारः । एवमेकस्य स्त्रीप्रत्ययस्या
विद्यामूढत्वे द्वेषो दुःखत्वे रागः सुखत्वे तत्वज्ञानं माध्यस्थे
धृतिकारणं शरीरमिन्द्रियाणां तानि च तस्य महाभूतानि
शरीराणां तानि च परस्परं सर्व्वेषाम् । तैर्य्यग्यौनमानुष-
दैवतानि च परस्परार्थत्वादित्येवं नव कारणानि तानि
च यथासम्भवं पदार्थान्तरेष्वपि योज्यानि ॥ २८ ॥

धर्म्मिणोधर्म्मयोः पुलाकत्व तण्डुलत्वयोर्भेदाविवक्षया धर्म्मयोरुपजननापायेपि धर्म्मा-
नुवर्त्तत इति न तस्मान्यत्वं शक्यं कर्त्तुम् इति विकारमात्र कारणत्वमुक्तमिति न
सङ्करः न च संस्थानभेदो धर्म्मिणोन्यत्व कारणमिति व्याख्येयं सुवर्णकार इत्यस्य
सङ्गति बाह्यमन्यत्व कारणमुपलक्ष्याध्यात्मिकमुदाहरति एवमेकस्येति अविद्या
कमनीयेयं कन्यकेत्यादि ज्ञानं सम्मोहयोगात् सएव स्त्रीप्रत्ययो मूढो विषयो भवति
चैत्रस्य मैत्रस्य पुत्रवती कलत्ररत्नमेतन्नतु मम भाग्यहीनस्येति एवं सपत्नीजनस्य
तस्यां द्वेषः स्त्रीप्रत्ययस्य दुःखत्वे एवं मैत्रस्य तस्याः भर्त्तुः रागस्तस्यैव स्त्रीप्रत्ययस्य
सुखत्वे तत्वज्ञानं त्वङ्मांस मेदोस्थिमज्जा समूह स्त्रीकायः स्थानबीजादिभिरशुचि-
रिति विवेकिनां माध्यस्थे वैराग्ये कारणमिति धृतिकारणं शरीरमिन्द्रियाणां
विधारकमिन्द्रियाणि च शरीरस्य सामान्यकारण वृत्तेर्हि प्राणाद्यावायवः पञ्च तद-
भावे शरीरपातादेवं मांसादिकायाङ्गानामपि परस्पर विधार्य्य विधारकत्वं एवं
महाभूतानि पृथिव्यादीनि मनुष्य वरुण सूर्य्य गन्धर्व्व शशिलोकनिवासिनां शरी-
राणां तानि च परस्परं पृथिव्यां हि गन्धरसरूपस्पर्शशब्दगुणानां पञ्च महाभूतानि
परस्परं विधार्य्य विधारक भावेनावस्थितान्यप्सु चत्वारि तेजसि त्रीणि द्वे च
मातरिश्वनीति तैर्य्यग्यौन मानुष्य दैवादीनि च विधार्य्य विधारकभावेनावस्थितानि

योगाङ्गानुष्ठानन्तु द्विधैव कारणत्वं लभते इति योगाङ्गान्यवधार्य्यन्ते—

**यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयोऽष्टावङ्गानि ॥२९॥**

यथाक्रमं एतेषाम् अनुष्ठानं स्वरूपञ्च वच्यामः ॥२९॥

तत्र—

**अहिंसासत्यास्तेयब्रह्मचर्य्यापरिग्रहायमाः ॥३०॥**

तत्राहिंसा सर्व्वथा सर्व्वदा सर्व्वभूतानामनभिद्रोहः।

न्वाधाराधेयभावरहितानां कुतस्तत्वमित्यत आह। परस्परार्थत्वादिति मनुष्य-शरीरं हि पशुपक्षिमृगसरीसृपस्थावर शरीरोपयोगेन ध्रियते एवं व्याघ्रादि शरीर-मपि मनुष्यपशुमृगादि शरीरोपयोगेन एवं पशुपक्षिमृगादि शरीरमपि स्थावराद्युप-योगेन एवं दैव शरीरमपि मनुष्योपहृतच्छागमृगकपिञ्जलमांसाज्य पुरोडाश सह-कारि शाखाप्रस्तरादिभि रिज्यमानं तदुपयोगेन एवं देवतामपि वरदान वृष्ट्या-दिभिर्मनुष्यादीनि धारयतीत्यस्ति परस्परार्थत्वमित्यर्थः शेषं सुगमं ॥ २८ ॥

सम्प्रति न्यूनाधिक सङ्ख्याव्यवच्छेदार्थं योगाङ्गान्यवधारयति। तत्र योगाङ्गान्य वधार्य्यन्ते इति। य—नि। अभ्यासवैराग्यश्रद्धावीर्य्यादयोऽपि यथायोगमेतेष्वेव स्वरूपतो नान्तरीयकतया चान्तर्भावयितव्याः ॥ २९ ॥

यमनियमाद्यङ्गान्युद्दिश्य यम निर्द्देशकं सूत्रमवतारयति तत्रेति। यमाः

उत्तरे च यमनियमास्तन्मूलास्तत्सिद्धिपरतया तत्प्रति-पादनाय प्रतिपाद्यन्ते तदवदातकरणायैवोपादीयन्ते। तथाचोक्तं। स खल्वयं ब्राह्मणो यथा यथा व्रतानि बहूनि समादित्सते तथा तथा प्रमादकृतेभ्यो हिंसानिदानेभ्यो निवर्त्तमानस्तामेवावदातरूपामहिंसां करोति सत्यं यथार्थे वाङ्मनसे यथादृष्टं यथानुमितं यथाश्रुतं तथा वाङ्मनश्चेति परत्र स्वबोधसंक्रान्तये वागुक्ता सा यदि

योगाङ्गमहिंसामाह सर्व्वथेति। ईदृशीमहिंसां स्तौति उत्तरे चेति तन्मूला इत्यहिंसामपरिपाल्यकृता अप्यकृतकल्पाः निष्फलत्वादित्यर्थः तत्सिद्धिपरतया एवानुष्ठानमहिंसाचेन्मूलमुत्तरेषां कथं ते अहिंसा सिद्धिपरा इत्यत आह। तत्प्रतिपादनायेति सिद्धिज्ञानं नोत्पत्तिरित्यर्थः स्यादेतद् हिंसा भागार्थं यद्युत्तरे-क्तं तैरन्यतएव तदवगमादित्यत आह तदवदातेति। यद्युत्तरेनानुष्ठीयेरन् अहिंसामलिनास्यादसत्यादिभिरित्यर्थः अत्रैवागमिकानां सम्मतिमाह। तथाचेति सुगमं। सत्यलक्षणमाह यथार्थे वाङ्मनसे इति। यथा शब्दं साकाङ्क्षं पूरयति यथादृष्टमिति प्रतिसम्बन्धिनं तथा शब्दं प्रतिक्षिपति॥ तथा वाङ्मनश्च विवक्षया कर्त्तव्यायामिति। अन्यथा तु न सत्यं एतस्योपपत्तिक्रमाह परत्र पुरुषे स्वबोध संक्रान्त ये स्वबोध सदृशबोध जनना यवागुक्ती च्याविता अतः सा यदि न वञ्चिता वञ्चिता यथा द्रोणाचार्य्येण स्वतनयाश्वत्थाममरणमायुष्मस्यधनाश्वत्थामाहत इति पृष्टस्य युधिष्ठिरस्य प्रतिवचनं हस्तिनमभिसन्धाय "सत्यं हतोऽश्वत्थामेति॥ तदिदमुक्तस्योत्तरं न युधिष्ठिरस्य स्वबोधं संक्रामयति स्वबोधस्य तस्य हस्तिहनन-विषय इन्द्रिय जन्या नासौ संक्रान्तः किन्त्वन्यएव तस्य तनयवधबोध जात इति

न वञ्चिता भ्रान्ता वा प्रतिपत्तिवन्ध्या वा भवेत् इत्येषा सर्व्वभूतोपकारार्थं प्रवृत्ता न भूतोपघाताय यदि चैवमप्यभिधीयमाना भूतोपघातपरैव स्यान्न सत्यं भवेत् पापमेव भवेत् तेन पुण्याभासेन पुण्यप्रतिरूपकेन कष्टं तमः प्राप्नुयात् तस्मात् परीक्ष्य सर्व्वभूतहितं सत्यं ब्रूयात् स्तेयमशास्त्रपूर्व्वकं द्रव्याणां परतः स्वीकरणं। तत्प्रतिषेधः पुनरस्पृहारूपमस्तेयमिति ब्रह्मचर्य्यं गुप्तेन्द्रियस्योपस्थस्य संयमः। विषयानामर्जनरक्षणक्षयसङ्गहिंसादोषदर्शनादस्वीकरणमपरिग्रह इत्येते यमाः ॥३०॥




भ्रान्ता वा भ्रान्तिजा भ्रान्तिश्च विवक्षा समये वा ज्ञेयार्थावधारण समये वा प्रतिपत्त्यावन्ध्या प्रतिपत्तिवन्ध्या यथा दक्षार्थ्यान प्रति म्लेच्छभाषा प्रतिपत्तिवन्ध्यानि निष्प्रयोजना वा स्यादिति यथाऽनपेक्षिताभिधाना वाक् तत्र हि परत्र स्वबोधस्य संक्रान्तिरप्यसंक्रान्तिरेव निष्प्रयोजनत्वादिति एवं लक्षणमपि सत्यं परोपकार फलं सत्याभासं न तु सत्यमित्याह एषेति तद्यथा सत्यतपसस्तस्करैः सार्थगमनं पृष्टस्य सार्थगमनाभिधानमिति अभिधीयमानोच्चार्य्यमाणा शेषसुगमं अभावस्य भावधीन निरूपणतया स्तेयलक्षणमाह स्तेयमशास्त्र पूर्व्वकमिति विशेषेण सामान्यं लक्ष्यते इत्यर्थः मानस व्यापारपूर्व्वकत्वाद्वाचनिक कायिक व्यापारयो प्राधान्यान्मनो व्यापार उक्तोऽस्पृहा रूपमिति ब्रह्मचर्य्यं स्वरूपमाह गुप्तेति। संयतोभस्थोऽपि हि स्त्रीप्रेक्षण तदालाप कन्दर्पायतन तदङ्ग स्पर्शेन शक्तो न ब्रह्मचर्य्यं वानिति तन्निरासायोक्तं गुप्तेन्द्रियस्येति इन्द्रियान्तराण्यपि तत्र लोलुपानि रक्षणीयानीति अपरिग्रह स्वरूप-

ते तु—

जातिदेशकालसमयानवच्छिन्ना सार्व्वभौमा महाव्रतम् ॥३१॥

तत्राहिंसाजात्यवच्छिन्ना मत्स्यवधकस्य मत्स्येष्वेव नान्यत्र हिंसा सैव देशावच्छिन्ना न तीर्थे हनिष्यामिति सैव कालावच्छिन्ना न चतुर्द्दश्यां न पुण्ये अहनि हनिष्यामिति सैव त्रिभि रुपरतस्य समयावच्छिन्ना देवब्राह्मणार्थेनान्यथा हनिष्यामिति यथा च क्षत्रियाणां युद्ध एव हिंसान्यत्रेति एभिर्जातिदेशकालसमयैरनवच्छिन्ना अहिंसादयः सर्व्वथैव परिपालनीयाः सर्व्वभूमिषु सर्व्वविषयेषु सर्व्वथैवाविदित-व्यभिचाराः सार्व्वभौमा महाव्रतमित्युच्यन्ते ॥ ३१ ॥

माह विषयाणामिति तत्र सङ्गदोष उक्तो भोगाभ्यासमनु विवर्द्धन्ते रागाः कौशलानि चेन्द्रियाणामिति हिंसालक्षणस्य दोषोनानुपहत्य भूतान्युपभोगः सम्भवतीति अशास्त्रीयाणामयत्नोपलभ्यानामपि विषयाणां निन्दित प्रतिग्रहादिरूपार्ज्जन दोष दर्शनात् शास्त्रीयाणामप्युपार्ज्जितानाञ्च रक्षणादि दोषदर्शनाद स्वीकरणमपरिग्रहः ॥ ३० ॥

सामान्यत उक्ता यादृशाः पुनर्योगिनामुपादेयास्तादृशान् वक्तुं सूत्रमवतारयति। तेत्विति। जा—तं। सर्व्वासु जात्यादि लक्षणासु भूमिषु विदिताः सार्व्वभौमाः अहिंसादय इत्यन्यत्राप्यवच्छेद ऊहनीयः सुगमं भाष्यं ॥३१॥

**शौचसन्तोषतपःस्वाध्यायेश्वरप्रणिधानानि-**
**नियमाः ॥३२॥**

तत्र शौचं मृज्जलादिजनितं मेध्याभ्यवहरणादि च बाह्यमाभ्यन्तरं चित्तमलानामाक्षालनं। सन्तोषः सन्निहितसाधनादधिकस्यानुपदित्सा। तपोद्वन्द्वसहनं द्वन्द्वश्च जिघत्सापिपासे शीतोष्णे स्थानासने काष्ठमौन-आकारमौने च व्रतानि चैव यथायोगं कृच्छ्रचान्द्रायणसान्तपनादीनि। स्वाध्यायो मोक्षशास्त्राणा मध्ययनं प्रणवजपोवा ईश्वरप्रणिधानं तस्मिन् परमगुरौ सर्व्वकर्म्मार्पणं "शय्यासनस्थोथ पथि व्रजनं वा स्वस्थः परिक्षीणवितर्कजालः। संसारवीजक्षयमीक्षमाणः स्यान्नित्यमुक्तोऽमृतभोगभागी।" यत्रेदमुक्तं ततः प्रत्यक् चेतनाधिगमोप्यन्तराया भावश्चेति ॥ ३२ ॥

शौचादि नियममाचष्टे। शौ–माः। व्याचष्टे शौचमिति। आदि शब्देन गोमयादयो गृह्यन्ते। गोमुत्रयावकादि। मेध्यं तस्याभ्यवहरणादि आदिशब्दात् ग्रासपरिमाणसंख्यानि यमादयोग्राह्याः मेध्याभ्यवहरणादि जनितमिति वक्तव्ये मेध्याभ्यवहरणादि चेत्युक्तं कार्य्येकारणोपचारात् चित्तमलाः मदमानासूयादयः तदपनयो मनःशौचं प्राणयात्रामात्र हेतोरभ्यधिकस्यानुपादित्सा सन्तोषः प्रागेव स्वीकरण परित्यागादिति विशेषः काष्ठमौनमिङ्गितेनापि स्वाभिप्रायाप्रकाशनं अवचनमाकार मौनं परिक्षीण वितर्कजाल इति वितर्को वक्ष्यमाणः संशय विपर्य्ययौ चेति एतावता श्रद्धाभिसन्धिरुक्तः एते च यमनियमाः विष्णुपुराणे उक्ताः

एतेषां यमनियमानाम्—

वितर्कबाधने प्रतिपक्षभावनम् ॥३३॥

यदास्य ब्राह्मणस्य हिंसादयो वितर्काजायेरन् हनिष्या-म्यहमपकारिणमनृतमपि वक्ष्यामि द्रव्यमप्यस्य स्वीकरि-ष्यामि दारेषु चास्य व्यवायी भविष्यामि परिग्रहेषु चास्य स्वामी भविष्यामीति एवमुन्मार्गप्रबलवितर्कज्वरेणाति दीप्तेन बाध्यमानस्तत् प्रतिपक्षान् भावयेत् घोरेषु संसारा-ङ्गारेषु पच्यमानेन मया शरणमुपागतः सर्व्वभूताभयप्रदा-नेन योगधर्म्मः स खल्वहं त्यक्त्वा वितर्कान् पुनस्तानाददान



"ब्रह्मचर्य्यमहिंसा च सत्यास्तेयापरिग्रहान्। सेवेत योगी निष्कामी योग्यतां स्वमनो नयन्। स्वाध्याय शौच सन्तोषः तपांसि नियतात्मवान्। कुर्व्वीत ब्रह्मणि तथा परस्मिन् प्रवणं मनः" एते यमाः स नियमाः पञ्च पञ्च प्रकीर्त्तिताः। विशिष्ट फलदाः काम्या निष्कामानां विमुक्तिदा" इति ॥३२॥

श्रेयां बहुविघ्नानीति एषामपवादसम्भवे तत् प्रतिकारोपदेशपरं सूत्रमवतारति एतेषां यमनियमानामिति। सूत्रं वि—नं। वितर्कानां भाष्ये-नास्ति तिरोहितमिव किञ्चन तत्र वितर्कानां स्वरूप प्रकार कारणधर्म्म-फलभेदान् प्रतिपक्ष भावना विषयान् प्रतिपक्षभावना स्वरूपाभिधित्सया सूत्रमाह वि—नं। व्याचष्टे तत्र हिंसेति प्रायश्चित्तदसापरिसंख्येय-त्वान्नियम विकल्प समुच्चया सम्भविनः हिंसा हिंसादिषु तत्राधर्म्मतः तमः समुद्रके

स्तुल्यः स्वदृत्तेनेति भावयेत् यथा श्वावान्तावलेह्वत तथा त्यक्तस्य पुनरादान इति एवमादि सूत्रान्तरेष्वपि योज्यम् ॥ ३३ ॥

वितर्कहिंसादयः कृतकारितानुमोदिता लोभक्रोधमोहपूर्व्वका मृदुमध्याधिमात्रा दुःखाज्ञानानन्तफला इति प्रतिपक्षभावनम् ॥३४॥

तत्र हिंसा तावत् कृतकारितानुमोदितेति त्रिधा लोभेन मांसचर्म्मार्थेन क्रोधेनापकृतमनेनेति मोहेन धर्म्मोभविष्यति लोभक्रोधमोहाः पुनस्त्रिविधाः मृदुमध्याधिमात्रा इत्येवं सप्तविंशति भेदा भवन्ति हिंसायाः मृदुमध्याधिमात्राः पुन-स्त्रेधा मृदुमृदुर्मध्यमृदुस्तीव्रमृदुरिति। तथा मृदुमध्यः मध्य-मध्य स्तीव्रमध्यइति तथा मृदुतीव्रो मध्यतीव्रोऽधिमात्रतीव्र इति एवमेकाशीतिभेदा हिंसा भवति सा पुनर्नियम-विकल्पसमुच्चयभेदादसङ्ख्याया प्राणभृद्भेदस्यापरिसंख्येयत्वा-

सति चतुर्व्विध विपर्य्यय लक्षणस्या ज्ञानस्याप्युदय इत्यज्ञान फलत्वमप्येतेषामिति दुःखज्ञानानन्त फलत्वमेव हि प्रतिपक्षभावनं तद्वशादेभ्यो निवृत्तिरिति। तदेव प्रतिपक्षभावनं स्फोरयति वध्यस्य पश्वादेर्वीर्य्यं प्रयत्नं कायव्यापार हेतुं प्रथम-माक्षिपति यूपनियोजेन तेन हि पशोरप्रागल्भ्यं भवति शेषमति स्फुटम् ॥३३॥

उक्ता। यमनियमास्तदपवादकानाञ्च वितर्काणां प्रतिपक्षभावनातो हानिरुक्ता।

दिति एवमनृतादिष्वपि योज्यं ति खल्वमी वितर्का दुःखाज्ञानानन्तफलाइति प्रतिपक्षभावनं दुःखमज्ञानं चानन्तफलं येषामिति प्रतिपक्षभावनं तथाच हिंसकः प्रथमं तावत् बध्यस्य वीर्य्यमाक्षिपति । ततः शस्त्रादिनिपातेन दुःखयति । ततो जीवितादपि मोचयतीति । ततो वीर्य्याक्षेपादस्य चेतनाचेतनमुपकरणं क्षीणवीर्य्यं भवति दुःखोत्पादान्नरकतिर्य्यक्प्रेतादिषु दुःखमनु भवति जीवितव्यपरोपणात् प्रतिक्षणञ्च जीवितात्यये वर्त्तमानो-मरणमिच्छन्नपि दुःखविपाकस्य नियतविपाकवेदनीयत्वात् कथञ्चिदेवोच्छ्वसति यदिच कथञ्चित् पुण्यावापगता हिंसा-भवेत्तत्र सुखप्राप्तौ भवेदल्पायुरिति एव मनृतादिष्वपि योज्यं यथा सम्भवं एवं वितर्कानाञ्चासुमेवानुगतं विपाक-मनिष्टं भावयन्नवितर्केषु मनः प्रणिदधीत प्रतिपक्षभाव-नात् हेतोर्हेया वितर्का यदास्युरप्रसवधर्म्माणस्तदा तत्कृत-मैश्वर्य्यं योगिनः सिद्धिसूचकं भवति ॥ ३४ ॥

तद्यथा—

## अहिंसाप्रतिष्ठायां तत्सन्निधौ वैरत्यागः ॥ ३५ ॥

संप्रत्यप्रत्यूहं यमनियमाभ्यासात् सिद्धिपरिज्ञानसूचकानि चिह्नानि उपन्यसति यत्परिज्ञानात् योगी तव तच कृत कृत्यः कर्त्तव्येषु प्रवर्त्तते इत्याह यदेति ॥ ३४ ॥

शाश्वतिक विरोधा अप्यश्वमहिष मुषकमार्जाराऽहि नकुलादयोपि भगवत; प्रतिष्ठिताऽहिंसस्य सन्निधानात्तच्चित्तानुकारिणो वैरं परित्यजन्तीति ॥ ३५ ॥

सर्व्वप्राणिनां भवति ॥३५॥

**सत्यप्रतिष्ठायां क्रियाफलाश्रयत्वम्॥ ३६ ॥**

धार्म्मिकोभूया इति भवति धार्म्मिकः स्वर्गं प्राप्नु-हीति स्वर्गं प्राप्नोति अमोघास्य वाग् भवति ॥ ३६ ॥

**अस्तेयप्रतिष्ठायां सर्व्वरत्नोपस्थानम् ॥ ३७ ॥**

सर्वदिक्स्थान्यस्योपतिष्ठन्ते रत्नानि ॥३७॥



**ब्रह्मचर्य्यप्रतिष्ठायां वीर्य्यलाभः ॥ ३८ ॥**

यस्य लाभादप्रतिघान् गुणानुत्कर्षयति । सिद्धश्च विनेयेषु ज्ञानमाधातुं समर्थो भवति इति ॥ ३८ ॥

सत्वं क्रियासाध्यौ धर्म्माधर्म्मौ क्रिया तत्फलञ्च स्वर्गनरकादि ते एव आश्रय-णीया आश्रयस्तस्य भावस्तत्वं तदस्य भगवती वाचीभवतीति क्रियाश्रयत्वमाह धार्म्मिक इति। फलाश्रयत्वमाह स्वर्गमिति अमोघा अप्रतिहता ॥ ३६ ॥

अस्तेयप्रतिष्ठायां सर्व्वरत्नोपस्थानं सुबोधम् ॥ ३७ ॥

ब्रह्मचर्य्यप्रतिष्ठायां वीर्य्यलाभः। वीर्य्यं सामर्थं यस्य लाभाद प्रतिघान् गुणान् अणिमादीन् उत्कर्षयत्युपचिनोति सिद्धश्च तारादिभि रष्टाभिः सिद्धिभि रूहा द्यपरिणामभिरुपेतो विनेयेषु शिष्येषु ज्ञानं योगतदङ्ग विषयमाधातु समर्थो भवतीति॥ ३८ ॥

## अपरिग्रहस्थैर्य्ये जन्मकथन्तासम्बोधः ॥ ३९ ॥

अस्य भवति कोऽहमासं कथमहमासं किंस्विदिदं कथं स्विदिदं कोवा भविष्याम् कथं वा भविष्याम इत्येवमस्य पूर्व्वान्तपरान्तमध्येष्वात्मभावजिज्ञासा स्वरूपेणोपावर्त्तते एतायमस्थैर्य्ये सिद्धयः नियमेषु वक्ष्यमाणः ॥ ३९ ॥

## शौचात् स्वाङ्गजुगुप्सा परैरसंसर्गः ॥ ४० ॥

स्वाङ्गे जुगुप्सायां शौच मारभमाणः कायावद्यदर्शी कायानभिष्वङ्गीयति भवति किञ्च परैरसंसर्गः कायस्वभावा-

अपरिग्रहस्थैर्य्ये जन्म कथन्ता सम्बोधः। निकाय विशिष्टैः देहेन्द्रियादिभिरभि सम्बन्धो जन्म तस्य कथन्ता किं प्रकारता तस्याः सम्बोधः साक्षात्कारः सप्रकारातीन्द्रिय शान्तोदिताऽव्यपदिश्य जन्मपरिज्ञानमिति यावत् अतीतं जिज्ञासते कोऽहमासमिति। तस्यैव प्रकार भेदमुत्पादे स्थितौच जिज्ञासते कथमहमासमिति। वर्त्तमानस्य जन्मनः स्वरूपं जिज्ञासते। किं स्विदिति शरीरं भौतिकं किंभूतानां समूह मात्रमाहोस्वित्त भ्यौन्यदिति। अत्रापि कथं स्विदित्यनुषञ्जनीयं क्वचित्पठ्यते एवं अनागतं जिज्ञासते के भविष्याम इति अत्रापि कथं स्विदित्यनुषङ्गः एवमस्येति पूर्व्वान्तोतीतः परान्तं भविष्यन्मध्यो वर्त्तमानस्तेष्वात्मनोभावः शरीरादि सम्बन्धस्तस्मिन् जिज्ञासा ततश्च ज्ञानं यो हि यदिच्छति स तत्करोतीति न्यायात्। ॥ ३९ ॥

शौ—र्गः। अनेन वाह्यशौच सिद्धि सूचकं कथितं ॥ ४० ॥

वलोको स्वमपि कायं जिहासुर्मृज्जलादिभिः क्षालयन्नपि कायशुद्धिमपश्यन् कथं परकायैरत्यन्तमेवाप्रयतैः संसृज्यते।

किञ्च—

**सत्वशुद्धिसौमनस्यैकाग्र्येन्द्रियजयात्मदर्शन-योग्यत्वानि च ॥ ४१ ॥**

भवन्तीति वाक्यशेषः शुचेः सत्वशुद्धिस्ततः सौमनस्यं तत ऐकाग्र्यं तत इन्द्रियजयस्ततश्चात्मदर्शनयोग्यत्वं बुद्धिसत्वस्य भवतीति। एतच्छौचस्थैर्य्यादधिगम्यत इति ॥४१॥



तथाचोक्तम्—

**सन्तोषादनुत्तमः सुखलाभः ॥ ४२ ॥**

यच्च कामसुखं लोके यच्च दिव्यं महत् सुखम्। तृष्णाक्षयसुखस्यैते नार्हतः षोड़शीं कलामिति ॥ ४२ ॥

आन्तरं शौचसिद्धि सूचकमाह। किञ्चेति स च चित्तमलानामाक्षालने चित्तसत्वममलं प्रादुर्भवति वैमल्यात् सौमनस्यं स्वच्छता स्वच्छे तदैकाग्र्यं ततोमनस्तन्त्राणामिन्द्रियाणां तज्जयाज्जयस्तत आत्म दर्शनयोग्यत्वं बुद्धिसत्वस्य भवतीति ॥ ४१ ॥

स—भः। नविद्यतेऽस्मादुत्तमइत्यनुत्तमः। यथा चोक्तं यजातिना पुरो

**कायेन्द्रियसिद्धिरशुद्धिक्षयात्तपसः ॥ ४३ ॥**

निर्वर्त्यमानमेव तपोहिनस्त्यशुद्ध्यावरणमलं तदा-वरणमलापगमात् कायसिद्धिरणिमाद्या तथेन्द्रियसिद्धि दूराच्छ्रवणदर्शनाद्येति ॥ ४३ ॥

**स्वाध्यायादिष्टदेवतासम्प्रयोगः ॥ ४४ ॥**

देवा ऋषयः सिद्धाश्च स्वाध्यायशीलस्य दर्शनं गच्छन्ति कार्य्ये चास्य वर्त्तन्त इति ॥ ४४ ॥



**समाधिसिद्धिरीश्वरप्रणिधानात् ॥ ४५ ॥**

ईश्वरार्पितसर्व्वभावस्य समाधिसिद्धिर्य्यया सर्व्वमीप्सित-मवितथं जानाति देशान्तरे देहान्तरे कालान्तरे च ततोऽस्य प्रज्ञा यथाभूतं प्रजानातीति ॥ ४५ ॥

यौवनम यता "या दुस्त्यजोदुर्म्मतिभिर्या न जीर्य्यति जीर्य्यतां। तां तृष्णां संत्य-जन् प्राज्ञः सुखेनैवाभिपूर्य्यते"। तदेतद्दर्शयति। यच्च कामसुखं लोके इत्या-दिना ॥ ४२ ॥

तपःसिद्धिसूचकमाह। का—सः। अशुद्धिलक्षणमावरणं तामसमधर्म्मादि अणिमादि महिमा प्राप्तिश्च सुगमम् ॥ ४३ ॥

स्वाध्याय सिद्धि सूचक माह। स्वा—गः। सुगमम् ॥ ४४ ॥

स–णात्। नच वाच्यमीश्वर प्रणिधानादेव चेत् संप्रज्ञात सिद्धी च संयोग

उक्ताः सहसिद्धिभिर्यमनियमाः आसनादीनि वक्ष्यामः तत्र ।—

**स्थिरसुखमासनम् ॥ ४६ ॥**

तद्यथा पद्मासनं वीरासनं भद्रासनं स्वस्तिकं दण्डासनं सोपाश्रयं पर्य्यङ्कं क्रौञ्चनिषदनं हस्तिनिषदनं मुष्ट्रनिषदनं समसंस्थानं स्थिरसुखं यथासुखं चेत्येवमादीति ॥ ४६ ॥

पृथक्त्वेन दध्नद्रव क्रत्वर्थता पुरुषार्थताच । नचैव मनन्तरं गताधारणाध्यान समाधीनां संप्रज्ञात सिद्धौ संप्रज्ञात समान गोचर तयाङ्गान्तरेभ्योऽतद्गोचरेभ्योऽत्यान्तरंगत्व प्रतीतेरीश्वर प्रणिधानमपि हीश्वर गोचरं न संप्रज्ञेयगोचरमिति वहिरङ्गमिति सर्व्वमवदातं प्रजानातीति प्रज्ञाव्युत्पत्तिदर्शिता ॥ ४५ ॥

उत्तरसूत्रमवतारयति उक्ताः सहसिद्धिभि र्यमनियमाः आसनादीनि वक्ष्यामः । तत्र स्थि—नं । स्थिरं निश्चलं यत् सुखं सुखावहं तदासनमिति सूत्रार्थः आस्यते अत्र वाऽनेन इत्यासनं। तस्य प्रभेदानाह तद्यथेति पद्मासनं प्रसिद्धं । स्थितस्यैकतरः पादोभून्यस्तः एकतरश्चाकुञ्चितजानोरुपरिन्यस्तः । इत्येतद्वीरासनं । पादतले वृषण समीपे संपुटीकृत्य तस्योपरि पाणि कच्छपिकां कुर्य्यात् तद्भद्रासनं । सव्यमाकुञ्चितं चरणं दक्षिणजङ्घोर्व्वन्तरे दक्षिणञ्चाकुञ्चितं वामजङ्घोर्व्वन्तरे निक्षिपेदेतत् स्वस्तिकं । उपविश्य श्लिष्टाङ्गुलिकौ श्लिष्टगुल्फौभूमिश्लिष्ट जङ्घोरुपादौ प्रसार्य्य दण्डासन मभ्यसेत् योगपट्टक योगात्सोपाश्रयं जानुप्रसारित वाह्वोः शयनं पर्य्यङ्कः क्रौञ्चनिषदनादीनि । क्रौञ्चादीनां निषण्णानां संस्थानदर्शनात् प्रत्येतव्यानि पार्ष्णिपादाग्राभ्यां द्वयोराकुञ्चितयोरन्योन्य सम्पीड़नं सम संस्थानं येन संस्थानेनावस्थितस्य स्थैर्य्यं सुखं

## प्रयत्नशैथिल्यानन्तसमापत्तिभ्याम् ॥ ४७ ॥

भवतीति वाक्यशेषः प्रयत्नोपरमात् सिद्ध्यत्यासनं येन नाङ्गमेजयोभवति अनन्ते वा समापन्नं चित्तमासनं निर्वर्त्तयतीति ॥ ४७ ॥

## ततोद्वन्द्वानभिघातः ॥ ४८ ॥

शीतोष्णादिभिर्द्वन्द्वैरासनजयान्नभिभूयते ॥ ४८ ॥



सिध्यति तदासनं स्थिरं सुखं तत् तच्च भगवतः सूत्रकारस्य सम्मतं तस्य विवरणं यथा सुखञ्चेति ॥ ४६ ॥

आसन स्वरूपमुक्ता तत् साधनमाह। प्र—भ्यां। सांसिद्धिकोहि प्रयत्नः शरीरधारको न योगाङ्गस्योपदेष्टव्यासनस्य कारणं तस्य तत् कारणत्वे उपदेश वैयर्थ्यात् स्वरसत एव तत्सिद्धेः तस्मादुपदेशष्टव्यस्यासनस्यायमसाधकः विरोधीच स्वाभाविकः प्रयत्नः तस्यच याद्दच्छिकासन हेतुतयासन नियमोपहन्तृत्वात् तस्मादुपदिष्ट नियमासन मभ्यस्यता स्वाभाविक प्रयत्नशैथिल्यात्मा प्रयत्न आस्थेयो नान्यथोपदिष्टमासनं सिध्यतीति स्वाभाविक प्रयत्न शैथिल्यमासन सिद्धिहेतुः अनन्ते वा नागनायके स्थिरतरफणा सहस्र विधृत विश्वम्भरा मण्डले समापन्नं चित्तमासनं निर्वर्त्तयतीति ॥ ४७ ॥

आसन विजय सूचक माह। त—तः। निगदव्याख्यातं भाष्यं ॥ ४८ ॥

तस्मिन् सति श्वासप्रश्वासयोर्गतिविच्छेदः प्राणायामः ॥ ४९ ॥

सत्यासनजये वाह्यस्य वायोराचमनं श्वासः। कोष्ठस्य वायोर्निःसारणं प्रश्वासः तयोर्गतिविच्छेद उभयाभावः प्राणायामः ॥ ४९ ॥

स तु—

वाह्याभ्यन्तरस्तम्भवृत्तिर्देशकालसङ्ख्याभिः परिदृष्टोदीर्घसूक्ष्मः ॥ ५० ॥

यत्र प्रश्वासपूर्व्वको गत्यभावः स वाह्यः यत्र श्वासपूर्व्वको गत्यभावः स आभ्यन्तरः तृतीयस्तम्भवृत्तिर्यत्रोभयाभावः



आसन मप्युक्तं विष्णुपुराणे एवं भद्रासनादीनां समास्थाय गुणैर्युतं इति आसनानन्तरं तत् पूर्व्वकतां प्राणायामस्य दर्शयन् तल्लक्षणमाह त—मः। रेचक पूरक कुम्भकेष्वस्ति श्वास प्रश्वासयोर्गति विच्छेद इति प्राणायाम सामान्य लक्षण-मेतदिति तथाहि यत्र वाह्यवायुराचम्यान्तर्धार्य्यते पूरके तत्रास्ति श्वासप्रश्वासयोर्गति विच्छेदः यत्रापि कोष्ठोवायुर्विरेच्य वहिर्धार्य्यते रेचके तत्रास्ति श्वासप्रश्वासयोर्गतिः विच्छेदः एवं कुम्भकेपि इति तदेतद्भाष्येणोच्यते। सत्यासनेति ॥ ४९ ॥

प्राणायाम विशेष त्रयलक्षण परं सूत्रमवतारति सत्विति। वा—क्ष्मः। वृत्तिशब्दः प्रत्येकं संवध्यते। रेचक माह यत्र प्रश्वासेति। पूरकमाह यत्रश्वासेति। कुम्भक माह तृतीय इति। तदेव स्फुटयति यत्रोभयोः श्वास प्रश्वासयोः सकृदेव विधारकात् प्रयत्नादभावो भवति न पुनः पूर्व्ववदापरण

सक्तत्प्रयत्नाद् भवति यथा तप्तेन्यस्तमुपले जलं सर्व्वतः सङ्कोचमापद्यते। तथा द्वयोर्युगपद्गत्यभावइति त्रयोप्येते देशेन परिदृष्टाः इयानस्य विषयो देशइति। कालेन परिदृष्टाः क्षणानामियत्तावधारणेनावच्छिन्ना इत्यर्थः। सङ्ख्याभिः परिदृष्टाः एतावद्भिः श्वासप्रश्वासैः प्रथम उद्घात स्तद्वन्निगृहीतस्यैतावद्भिः द्वितीय उद्घातः एवं तृतीयः एवं मृदुरेवं मध्य एवं तीव्र इति सङ्ख्यापरिदृष्टः स खल्वयमेव मभ्यस्तो दीर्घसूक्ष्मः ॥ ५० ॥

प्रयत्नौघप्रविधारक प्रयत्नो नापि रेचक प्रयत्नौघ विधारण प्रयत्नोपेक्ष्यते किन्तु यथा तप्ते उपले निहितं जलं परिशुष्यत् सर्व्वतः संकोचमापद्यते एव मयमपि मारुतो वहनशीलो वलवद्विधारक प्रयत्न निरुद्धक्रियः शरीरएव सूक्ष्मीभूतोवतिष्ठते न तु पूरयति येन पूरकः न तु रेचयति येन रेचक इति। इयानस्य देशो विषयः प्रादेश वितस्तिहस्तादि परिमितो निवाते प्रदेशे ईषिका तूलादि क्रियानुमितो वाह्य एव मान्तरोप्यापादतलमामस्तकं पिपीलिका स्पर्शसदृशेनानुमितः स्पर्शन निमेष-क्रियावच्छिन्नस्य कालस्य चतुर्थो भागः क्षणस्तेषामियत्तावधारणेनावच्छिन्ना स्वजानु-मण्डलं पाणिना त्रिः परामृश्यच्छोटिकावच्छिन्नः कालोमात्रा ताभिः षट्त्रिंशन्मा-त्राभिः परिमितः प्रथम उद्घातो मन्दः स एव द्विगुणीकृतो द्वितीयो मध्यमः स एव त्रिगुणीकृत स्तृतीय स्तीव्रस्तमिमं सङ्ख्यापरिदृष्टं प्राणायाममाह सङ्ख्याभिरिति। स्वस्थस्य हि पुंसः श्वास प्रश्वास क्रियावच्छिन्नेन कालेन यथोक्तं छोटिका कालः समानः प्रथमोद्घात कर्म्मतां नीतः उद्घातो विजितो वशीकृतो निगृहीतः क्षणा-नामियत्ताकालो विवक्षितः श्वास प्रश्वासेयत्ता संख्येति कश्चिद्भेदः सखल्वयं प्रत्यह

बाह्याभ्यन्तरविषयाक्षेपी चतुर्थः ॥ ५१ ॥

देशकालसङ्ख्याभिर्बाह्यविषयः परिदृष्ट आक्षिप्तः तथाभ्यन्तरविषयः परिदृष्ट आक्षिप्तः उभयथा दीर्घसूक्ष्मः तत्पूर्व्वको भूमिजयात् क्रमेणोभयोर्गत्यभावश्चतुर्थः प्राणायामः । तृतीयस्तु विषयानालोचितो गत्यभावः सकृदारब्धएव देशकालसङ्ख्याभिः परिदृष्टोदीर्घसूक्ष्मश्चतुर्थस्तु श्वासप्रश्वासयोर्व्विषयावधारणात् क्रमेण भूमिजयादुभयाक्षेपपूर्व्वको गत्यभावश्चतुर्थः प्राणायामः इत्ययं विशेषइति ॥ ५१ ॥





मभ्यस्तो दिवसपक्षमासादिक्रमेण देशकाल प्रचय व्यापितया दीर्घः परमनैपुण्य समधिगमनीयः तयाच सूक्ष्मो न तु मन्दतया ॥ ५० ॥

एवं त्रयोविशेषा लक्षिताः चतुर्थं लक्षयति वा—र्थः । व्याचष्टे देशकाल सङ्ख्याभिरिति आक्षिप्तोऽभ्यासवशीकृताद्रूपादवरोपितः सोपि दीर्घसूक्ष्म एवं तत् पूर्व्वको बाह्याभ्यन्तर विषयः प्राणायामो देशकाल संख्यादर्शन पूर्व्वकः न चासौ चतुर्थः तृतीयइव सकृत् प्रयत्नादङ्गाय जायते किन्त्वभ्यस्यमानस्तां तामवस्थामापन्नः तत्तदवस्था विजयानुक्रमेण भवतीत्याह भूमिजयादिति ॥

ननूभयोर्गत्यभावस्तृतीयस्तावप्यस्तीति । कोस्मादस्य विशेष इत्यत आह । तृतीय इति अनालोचन पूर्व्व सकृत्प्रयत्न निर्वर्त्तित स्तृतीयश्चतुर्थस्त्वालोचन पूर्वोबहु प्रयत्न निर्वर्त्तनीय इति विशेषः तयोः पूरकरेचकयोर्विषयौ नालोचितौयं तु देश काल सङ्ख्याभिरालोचित इत्यर्थः ॥ ५१ ॥

## ततः क्षीयते प्रकाशावरणम् ॥ ५२ ॥

प्राणायामानभ्यस्यतोऽस्य योगिनः क्षीयते विवेकज्ञानावरणीयं कर्म्म यत्तदाचक्षते । महामोहमयेन इन्द्रजालेन प्रकाशशीलं सत्वमावृत्य तदेवाकार्य्ये नियुङ्क्ते इति तदस्य प्रकाशावरणं कर्म्म संसार निबन्धनं प्राणायामाभ्यासात् दुर्ब्बलं भवति प्रतिक्षणं च क्षीयते । तथाचोक्तम् "तपो न परं प्राणायामात्ततो विशुद्धिर्मलानां दीप्तिश्च ज्ञानस्येति" किञ्च धारणासु च योग्यता मनसः प्राणायामाभ्यासादेव । "प्रच्छर्द्दनविधारणाभ्यां वा प्राणस्येति" वचनात् ॥ ५२ ॥

प्राणायामस्यावान्तर प्रयोजनमाह । त—णं । आव्रियतेऽनेन बुद्धि सत्व प्रकाश इत्यावरणं क्लेशः पाप्मा च व्याचष्टे प्राणायामानिति । ज्ञायतेऽनेनेति ज्ञानं बुद्धि सत्व प्रकाशः विवेकस्य ज्ञानं विवेकज्ञानमावृणोतीति विवेक ज्ञानावरणीयं भव्यगेय प्रवचनीयादीनां कर्त्तरि निपातनस्य प्रदर्शनार्थत्वात् कोपनीयरञ्जनीयवत् अत्रापि कर्त्तरि कृत्यप्रत्ययः कर्म्मशब्देन तज्जन्य मपुण्यं तत् कारणं क्लेशं लक्षयति अत्रैवागमिना मनुमति माह । यत्तदाचक्षत इति महामोहोरागः तदविनिर्भाग वर्त्तित्वविद्यापि तद्‌ग्रहणेन गृह्यते अकार्य्यमधर्म्मः ननु प्राणायाम एव चेत्पाप्मानं क्षिणोति कृतं तर्हि तपसेत्यत आह दुर्ब्बलं भवतीति न तु सर्व्वथा क्षीयते अतस्तत्प्रक्षयाय तपोपेक्षते इति अत्राप्यागमिनामनुमतिमाह । तथा चोक्तमिति । मनुरप्याह प्राणायामैर्द्दहेद्दोषानिति । प्राणायामस्य योगाङ्गता विष्णुपुराणोक्ता "प्राणाख्य मनिलं वश्यमभ्यासात् कुरुते तु यः । प्राणायामः सविज्ञेय सबीजोऽबीजएव च । परस्परेणाभिभवं प्राणापानौ यदानिलौ । कुरुतस्सद्वि-

अथ कः प्रत्याहारः—

**स्वविषयाऽसम्प्रयोगे चित्तस्य स्वरूपानुकार इवेन्द्रियाणां प्रत्याहारः ॥ ५३ ॥**

स्वविषयसम्प्रयोगाभावे चित्तस्वरूपानुकार इवेति चित्तनिरोधे चित्तवन्निरुद्धानीन्द्रियानि नेतरेन्द्रियजयवदुपायान्तरमपेक्षन्ते। यथा मधुकरराजं मक्षिका उत्पतन्तमनूत्पतन्ति निविशमान मनुनिविशन्ते तथेन्द्रियाणि चित्तनिरोधे निरुद्धानीत्येष प्रत्याहारः ॥ ५३ ॥



धानेन तृतीयं संयमात्तयो" रिति। किञ्च व्यासः "प्राणायामोहि मनः स्थिरीकुर्व्वन् धारणासु योग्यं करोति ॥ ५२ ॥

तदेवं यमादिभिः संस्कृतः संयमाय प्रत्याहार मारभते तस्य लक्षण सूत्र मवतारयितुं पृच्छति अथेति। स—रः। चित्तमपि मोहनीय रञ्जनीय कोपनीयैः शब्दादिभिः विषयैर्नसंप्रयुज्यते तदसंप्रयोगाच्चक्षुरादीन्यपि न संप्रयुज्यन्त इति सोयमिन्द्रियाणां चित्तस्वरूपानुकारः यत् पुन सत्वं चित्तमभिनिविशते न तत्रेन्द्रियाणां वाह्यविषयाणा मनुकारोपि अत उक्त मनुकार इवेति स्वविषया संप्रयोगस्य साधारणस्य धर्म्मस्य चित्तानुकार निमित्तत्वं सप्तम्या दर्शयति स्वेति। अनुकारं विवृणोति चित्तनिरोध इति। द्वयोर्निरोधे निरोधहेतुश्च प्रयत्नस्तुल्य इति सादृश्यं। अत्रैव दृष्टान्त माह यथा मधुकर राजमिति। दार्ष्टान्तिके योजयति तथेति। अत्रापि विष्णुपुराण वाक्यं। "शब्दादिष्वनुषक्तानि निग्रह्याक्षाणि योगवित्। कुर्य्याच्चित्तानुकारीणि प्रत्याहार परा-

## ततः परमा वश्यतेन्द्रियाणाम् ॥ ५४ ॥

शब्दादिष्वव्यसनमिन्द्रियजय इति केचित् शक्तिर्व्यसनं व्यस्यत्येनं श्रेयस इति अविरुद्धा प्रतिपत्तिर्न्याय्या शब्दादिसम्प्रयोगः स्वेच्छयेत्यन्ये रागद्वेषाभावे सुखदुःखशून्यं शब्दादि ज्ञानमिन्द्रियजयइति केचित् चित्तैकाग्र्यादप्रतिपत्तिरेवेति जैगीषव्यः ततश्च परमा त्वियं वश्यता यच्चित्तनिरोधे

श्रयः"। तस्य प्रयोजनं तत्रैव दर्शितं "वश्यता परमा तेन जायते निश्चलात्मनाम्। इन्द्रियाणामवश्यैस्तैर्न योगी योगसाधकः" इति ॥ ५३ ॥

अस्यानुवादकं सूत्रं त—णां। ननु सन्ति किमन्या अपरमा इन्द्रियाणां वश्यता या अपेक्ष्य परमेयमुच्यते अत्राह ता दर्शयति। शब्दादिष्विति एतदेव विवृणोति। शक्तिः रागोव्यसनं कया व्युत्पत्त्या व्यस्यति क्षिपति निरस्यत्येनं श्रेयस इति तदभावोऽव्यसनं वश्यता। अपरामपि वश्यतामाह अविरुद्धा श्रुताद्यविरुद्धं शब्दादिसेवनं तदविरुद्धेष्वप्रवृत्तिः सैव न्याय्या न्यायादनपेता यतः अपरामपि वश्यतामाह शब्दादि संप्रयोग इति शब्दादिष्विन्द्रियाणां संप्रयोगः स्वेच्छया भोग्येषु स खल्वयं स्वतन्त्रो न भोग्यतन्त्रइत्यर्थः। अपरामपि वश्यतामाह रागद्वेषाभावे सुखदुःखशून्यं माध्यस्थ्येन शब्दादि ज्ञानं इत्येके सूत्रकाराभिमतां।

परमर्षि संमतामाह चित्तस्यैकाग्र्यात् सहेन्द्रियैरप्रवृत्तिरेव शब्दादिष्विति जैगीषव्यः। अस्याः परमतामाह परमात्विति तु शब्दो वश्यतान्तरेभ्यो विशिनष्टि वश्यतान्तराणि हि विषयाशी विषसम्प्रयोगशालितया क्लेशविषसम्पर्कशङ्कानाप- क्रामन्ति नहि विषविद्यावित् प्रकृष्टोपि वशीकृत भुजङ्गमो भुजङ्गममङ्के निधाय स्वपिति विस्रब्धः इयन्तु वश्यता विदूरीकृत निखिल विषयव्यतिषङ्गानिराशङ्कतया

निरुद्धानीन्द्रियाणि नेतरेन्द्रियजयवत् प्रयत्नकृत मुपायान्तरमपेक्षन्ते योगिनइति ॥ ५४ ॥

इति पातञ्जले योगशास्त्रे साङ्ख्यप्रवचने
साधननिर्द्देशोनाम द्वितीय पादः ॥ २ ॥

---

परमेत्युच्यते नेतरेन्द्रिय जयवदिति। यथा यतमानसंज्ञायामेकेन्द्रिय जयेनो-न्द्रियान्तर जयाय प्रयत्नान्तर मपेक्षन्ते नचैवं चित्तनिरोधे वाह्येन्द्रिय निरोधाय प्रयत्नान्तरापेक्षेत्यर्थः ॥ ५४ ॥

क्रियायोगं जगौ क्लेशान् विपाकान् कर्म्मणामिह।
तत् व्यूहानच द्वितीये पादे योगस्य पञ्चकमिति ॥ २ ॥

इति महामोहपाध्याय वाचस्पतिमिश्रविरचितायां पातञ्जलभाष्यव्याख्यायां
साधननिर्द्देशोनाम द्वितीयपादः ॥२॥

---

# विभूतिपादः।

उक्तानि पञ्च वहिरङ्गानि साधनानि धारणा वक्तव्याः —

**देशबन्धश्चित्तस्य धारणा ॥ १ ॥**

नाभिचक्रे हृदयपुण्डरीके मूर्द्ध्नि ज्योतिषि नासिकाग्रे जिह्वाग्रइत्येवमादिषु देशेषु वाह्ये वा विषये चित्तस्य वृत्ति-मात्रेण बन्ध इति बन्धोधारणा ॥ १ ॥

प्रथम द्वितीय पादाभ्यां समाधिस्तत्साधनं चोक्तम्। तृतीयपादे ततप्रत्ययन गुणाः श्रद्धीत्यादहेतवो विभूतयो वक्तव्याः ताश्च संयमसाध्याः संयमश्च धारणाध्यान समाधि समुदाय इति विभूति साधनतया पञ्चभ्यश्च योगाङ्गेभ्यो वहिरङ्गेभ्योऽस्याङ्ग-त्रयस्यान्तरङ्गतया विशेष ज्ञापनार्थ मत्र त्रयस्योपन्यासः तत्रापि च धारणाध्यान-समाधीनां कार्य्यकारणभावेन नियतपौर्व्वापर्य्यत्वात्तदनुरोधेनोपन्यासक्रम इति प्रथमं धारणा लक्षणीयेत्याह उक्तानीति। देशाध्यात्मिक देशमाह। नाभिचक्र इति। आदिशब्देन ताल्वादयो ग्राह्याः बन्धः सम्बन्धः। वाह्यदेशमाह वाह्यइति। वाह्ये च न स्वरूपेण चित्तस्य सम्बन्धः सम्भवतीत्युक्तं वृत्तिमात्रेण ज्ञानमात्रेण इति अत्रापि पुराणं "प्राणायामेन पवनं प्रत्याहारेण चेन्द्रियं। वशीकृत्य ततः कुर्य्याच्चित-स्थानं शुभाश्रये' शुभाश्रया वाह्या हिरण्यगर्भ वासव प्रजापति प्रभृतय इदञ्च तत्रोक्तम्। "मूर्त्तं भगवतोरूपं सर्व्वोपाश्रय निष्पृहम्। एषा वै धारणा ज्ञेया यच्चित्तं तत्र धार्य्यते॥ तच्च मूर्त्तं हरेरूपं तद्विचिन्त्य नराधिप। तत् श्रूयता मनाधारा धारणा नोपपद्यते। प्रसन्न वदनं चारु पद्मपत्रनिभेक्षणम्। सुकपोलं सुविस्तीर्णं ललाट फलकोज्वलम्। समकर्णान्त विन्यस्त चारुकुण्डलभूषणम्। कम्बुग्रीवं सुविस्तीर्णं श्रीवत्साङ्कित वक्षसम्। वलीविभङ्गिना मग्ननाभिना चोदरेणच। प्रलम्बाष्टभूजं विष्णु मथवापि चतुर्भूजम्। समस्थितोरुजङ्घञ्च स्वस्तिकाङ्घ्रि कराम्बुजम्। चिन्तये

तत्र प्रत्ययैकतानता ध्यानम् ॥ २ ॥

तस्मिन् देशे ध्येयालम्बनस्य प्रत्ययस्यैकतानता। सदृशप्रवाहप्रत्ययान्तरेणापरामृष्टो ध्यानम् ॥ २ ॥

तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः ॥ ३ ॥

ध्यानमेव ध्येयाकारनिर्भासं प्रत्ययात्मकेन स्वरूपेण शून्यमिव यदा भवति ध्येयस्वभावावेशात्तदा समाधिरित्यु-च्यते ॥ ३ ॥





ब्रह्मभूतं तं पीतनिर्म्मलवाससम्। किरीट चारु केयूर कटकादि विभूषितम्। शार्ङ्गचक्रगदा खड्ग शङ्खाच्च वलयान्वितम्। चिन्तयेत्तन्मयो योगी समाधायात्ममानसम्। तावत् यावत् दृढ़ीभूता तत्रैव नृप धारणा। एतदातिष्ठतोन्यद्वा स्वेच्छया कर्म्म कुर्व्वतः। नापयाति यदा चित्तं सिद्धां मन्येत तां तदेति" ॥ १ ॥

धारणा साध्य ध्यानं लक्षयति। त—नं। एकतानता एकाग्रता सुगमं भाष्यम्। पुराणं "तद्रूप प्रत्ययैकाग्रा सन्ततिश्चान्य निस्पृहा। तद्ध्यानं प्रथमैरङ्गैः षड्भिर्निष्पाद्यते नृपेति" ॥ २ ॥

ध्यानसाध्यं समाधिं लक्षयति। त–धिः। व्याचष्टे। ध्यानमेवेति। ध्येयाकारनिर्भासमिति। ध्येयाकारस्य निर्भासो न ध्यानाकारस्येति अतएवाह। शून्यमिति ननु शून्यं चेत् कथं ध्येयं प्रकाशतेत्याह इवेति। अत्रैव हेतुमाह। ध्येयस्वभावावेशादिति। अत्रापि पुराणम् "तस्यैव कल्पनाहीनं स्वरूप

**त्रयमेकत्र संयमः ॥ ४ ॥**

तदेतत् धारणाध्यानसमाधित्रयमेकत्र संयमः एक विषयाणि त्रीणि साधनानि संयम इत्युच्यते तदस्य त्रयस्य तान्त्रिकी परिभाषा संयमः इति ॥ ४ ॥

**तज्जयात् प्रज्ञालोकः ॥ ५ ॥**

तस्य संयमस्य जयात् समाधिप्रज्ञाया भवत्यालोको यथा यथा संयमः स्थिरपदो भवति तथा तथा समाधिप्रज्ञा विशारदी भवति ॥ ५ ॥



ग्रहणं हि यत्। मनसा ध्याननिष्पाद्य समाधिः सोऽभिधीयते” इति। ध्येयात् धानस्य भेदः कल्पना तद्धीनमित्यर्थ अष्टाङ्ग योगमुक्त्वा खाण्डिक्याय केशिध्वज उपसंहारः। “क्षेत्रज्ञ करणी ज्ञानं करणं तदचेतनं। निष्पाद्य मुक्तिकार्य्यं वै कृतकृत्यं निवर्त्तते” इति ॥ ३ ॥

धारणा ध्यान समाधि रित्येतत् त्रयस्य तत्र तत्र नियुज्यमानस्य प्रातिस्विक संज्ञोच्चारणे गौरवं स्यादिति लाघवार्थं परिभाषा सूत्रमवतारयति त्र—मः। व्याचष्टे। एकविषयाणीति वाचकत्व शङ्काम पनयति तदस्येति। तन्त्रात् व्युत्पाद्यते योगी येन शास्त्रेण तत्तन्त्रं तद्भवा तान्त्रिकी संयमः प्रदेशाः परिणाम-त्रय संयमादित्येवमादयः ॥ ४ ॥

संयम विजयस्याभ्यास साधनस्य फलमाह। तत्—कः प्रत्ययान्तरानभिभूतस्य निर्म्मले प्रवाहेऽवस्थानमालोकः प्रज्ञायाः सुगमं भाष्यं ॥ ५ ॥

तस्य भूमिषु विनियोगः ॥ ६ ॥

तस्य संयमस्य जितभूमेर्यानन्तराभूमिस्तत्र विनियोगः। नह्यजिताधरभूमिरनन्तर भूमि विलङ्घ्य प्रान्तभूमिषु संयमं लभते तदभावाच्च कुतः तस्य प्रज्ञालोक ईश्वरप्रसादाज्जितोत्तर भूमिकस्य च नाधारभूमिषु परचित्तज्ञानादिसंयमोयुक्तः कस्मात् तदर्थस्यान्यतएवावगतत्वात् भूमेरस्या इयमनन्तरा भूमिरित्यत्र योग एवोपाध्यायः कथमेवमुक्तम्। "योगेन योगोज्ञातव्यो योगोयोगात् प्रवर्त्तते। योऽप्रमत्तस्तु योगेन स योगी रमते चिरमिति" ॥६॥

क्व पुनर्विनियुक्तस्य संयमस्य फलमेतदित्यत आह त—गः। भूमिं विशेषयति भाष्यकारः तस्येति जिताधाभूमिः यानन्तरा भूमिरवस्था अजिता तत्र विनियोगः स्थूलविषये वितर्के समाधौ वशीकृते संयमेन संयमस्याविजिते निर्वितर्के विनियोगः तस्मिन्नपि वशीकृते सविचारे विनियोगः एवं निर्विचारे विनियोगः इत्यर्थः अतएव स्थूलविषय समापत्ति सिद्धौ सत्यां पुराणे "तत्तदायुध भूषणापनयेन सूक्ष्म विषयः समाधिरवतारितः ततः। शंखगदाचक्रशार्ङ्गादि रहितं बुधः। चिन्तयेत् भगवद्रूपं प्रशान्तं साक्षसूत्रकं। यदा च धारणा तस्मिन्नवस्थानवती ततः। किरीट केयूर मुखैर्भूषणै रहितं स्मरेत्। तदेकावयवं देव सोऽहं चेति पुनर्बुधः। कुर्य्यात् ततोह्यहमिति प्रणिधानपरोभवेदिति। कस्मात् पुनरधरांभूमिं विजित्योत्तरां विजयते विपर्य्ययः कस्मान्न भवति इत्यत आह। नह्यजिताधरभूमिरिति। न हि शिलाह्रदात् गङ्गां प्रतिप्रस्थितो प्राप्य मेघवनं गङ्गां प्राप्नोति ईश्वरप्रसादाज्जितोत्तर भूमिकस्यचेति। कस्मात्तदर्थस्य उत्तर भूमि विजयस्य प्रत्यासन्नस्यान्यत एवेश्वर

**त्रयमन्तरङ्गं पूर्व्वेभ्यः ॥ ७ ॥**

तदेतद्धारणाध्यानसमाधित्रयमन्तरङ्गं सम्प्रज्ञातस्य समाधेः पूर्व्वेभ्यो यमादिभ्यः पञ्चभ्यः साधनेभ्यः इति ॥ ७ ॥

**तदपि वहिरङ्गं निर्व्वीजस्य ॥ ८ ॥**

तदप्यन्तरङ्गं साधनत्रयं निर्व्वीजस्य योगस्य वहिरङ्गं भवति कस्मात् तदभावेऽभावादिति ॥ ८ ॥

प्रणिधानादेवावगतत्वात् । निष्पादितक्रिये कर्मण्यविशेषाधायिनः साधनस्य साधनन्यायादिति । स्यादेतदागमतः सामान्यतोवगतानामप्यवान्तरभूमिभेदानां कुतः पौर्व्वापर्य्यावगतिरित्यत आह । भूमिरस्या इति जितः पूर्व्वो योग उत्तरस्य योगस्य ज्ञान प्रवर्त्याधिगमहेतुः अवस्थे वावस्थावानित्यभिप्रेत्ये तत् द्रष्टव्यम् ॥ ६ ॥

कस्मात् पुनर्योगाङ्गत्वाविशेषेपि संयमस्य तत्र तत्र विनियोगः नेतरेषां पञ्चानामित्यत आह । त्र–भ्यः । तदिदं साधन त्रयं साध्यसमान विषयत्वेनान्तरङ्गं नत्वेवं यमादयस्तस्मात् ते वहिरङ्गाइत्यर्थः साधनत्रयस्य संप्रज्ञात एवान्तरङ्गत्वं नत्वसंप्रज्ञाते ॥ ७ ॥

तस्य निर्व्वीजतया तैः सह समानविषयत्वाभावात् तेषु चिरनिरूढेषु संप्रज्ञात परमकाष्ठाऽपरनाम । ज्ञानप्रसादरूप परवैराग्यानन्तर मुत्पादाच्चेत्याह तदिति । तस्य समान विषयत्व मन्तरङ्गत्व प्रयोजकमिह न तु तदनन्तरभावस्तस्य वहिरङ्गेश्वर प्रणिधानवर्त्तितया स व्यभिचारत्वादिति स्थिते स व्यभिचार मप्यन्तरङ्ग लक्षणं तदनन्तर भावित्वमस्य नास्ति तस्माद दूरापेतान्तरङ्गता संयमस्यासंप्रज्ञात इति दर्शयितुं तदभावे भावादित्युक्तं ॥ ८ ॥

अथ निरोधचित्तक्षणेषु चलं गुणवृत्तमिति कीदृग-स्तदाचित्तपरिणामः—

**व्युत्थाननिरोधसंस्कारयोरभिभवप्रादुर्भावौ निरोधक्षणचित्तान्वयो निरोधपरिणामः ॥९॥**

व्युत्थानसंस्काराश्चित्तधर्म्मा न ते प्रत्ययात्मका इति प्रत्ययनिरोधेन निरुद्धा निरोधसंस्कारा अपि चित्तधर्म्मा-स्तयोरभिभवप्रादुर्भावौ व्युत्थानसंस्कारा हीयन्ते निरोध-संस्कारा आधीयन्ते निरोधक्षणं चित्तमन्वेति तदेकस्य



परिणामत्रय संयमादित्यत्नोपयोच्यमाण परिणाम त्रयं प्रति पिपादयिषुः नि र्जि प्रसङ्गेन पृच्छति अथेति व्युत्थान संप्रज्ञातयो श्चित्तस्य स्फुटतर परिणाम भेद प्रचया-नुभवान्न प्रश्नावतारो निरोधे तु नानुभूयते परिणामो नास्ति चित्तस्य त्रिगुणतया चलत्वेन गुणानां क्षणमपि अपरिणामस्यासम्भवादित्यर्थः। प्रश्नोत्तरं सूत्रं। व्युत्थान निरोधपरिणामः असंप्रज्ञातं समाधिमपेक्ष्य संप्रज्ञातो व्युत्थानं निरुध्यतेऽनेनेति निरोधो ज्ञान प्रसादःपरवैराग्यं तयो व्युत्थाननिरोध संस्कारयोरभिभव प्रादुर्भावौ तत्र व्युत्थान संस्कारस्याभिभवो निरोध संस्कारस्याभिर्भावः चित्तस्य धर्म्मिणो निरोध-क्षणस्य निरोधावसरस्य द्वयोरवस्थयोरन्वयः न हि चित्तं धर्म्मि संप्रज्ञातावस्थायाञ्च संस्काराभिभवप्रादुर्भावयोः स्वरूपेण भिद्यते इति। ननु यथोत्तरे क्लेशा अविद्या निवृत्तौ निवर्त्तन्ते इति तन्निवृत्तौ न पृथक् प्रयत्नान्तरमास्थीयते एवं व्युत्थान दृप्रत्यय मूलाः संस्कारा व्युत्थान निवृत्तावेव निवर्त्तन्ते इति तन्निवृत्तौ न निरोध

चित्तस्य प्रतिक्षणमिदं संस्कारान्यथात्वं निरोधपरिणाम स्तदा संस्कारशेषं चित्तमिति निरोधसमाधौ व्याख्यातम् ॥ ९ ॥

## तस्य प्रशान्तवाहिता संस्कारात् ॥ १० ॥

निरोधसंस्काराभ्यासपाटवापेक्षाप्रशान्तवाहिता चित्तस्य भवति । तत्संस्कारमान्द्ये व्युत्थानधर्म्मिणा संस्कारेण निरोधधर्म्मः संस्कारोभिभूयत इति ॥ १० ॥




संस्कारोपिचितस्य इत्यत आह । व्युत्थान संस्कारा इति न कारण मात्र निवृत्तिं कार्य्यनिवृत्तिहेतुर्मभूत् कुविन्द निवृत्तावपि पटस्य निवृत्तिरपितु यत् कारणात्मकं यत् कार्य्यं तत् कारण निवृत्तौ तत् कार्य्य निवृति: उत्तरे च क्लेशा अविद्यात्मान इत्यक्तं अतस्तन्निवृत्तौ तेषां निवृत्तिरुपपन्ना नत्वेवं प्रत्ययात्मानः संस्काराश्चिर निरूढे प्रत्यये संप्रतिसारणदर्शनात्तस्मात् प्रत्यय निवृत्तावपि तन्निवृत्तौ निरोध संस्कार प्रचय एवोपासनीय इत्यर्थः सुगममन्यत् ॥ ९ ॥

सर्व्वथा व्युत्थान संस्काराभिभवेतु बलवता निरोध संस्कारेण चित्तस्य कीदृशः परिणाम इत्यत आह । व्युत्थान संस्कार मलरहित निरोध संस्कार परम्परामात्र वाहिता प्रशान्तवाहिता । कस्मात् पुनः संस्कार पाटवमपेक्षते नतु संस्कार मात्र मित्यत आह । तत् संस्कारमान्द्य इति तदिति निरोधं परामृशति ये तु नाभिभूयत इति पठन्ति ते तदाव्युत्थानं परामृशन्ति ॥ १० ॥

**सर्व्वार्थतैकाग्रतयोः क्षयोदयौ चित्तस्य समाधिपरिणामः ॥ ११ ॥**

सर्व्वार्थता चित्तधर्म्मः एकाग्रता चित्तधर्म्मः सर्व्वार्थतायाः क्षयस्तिरोभाव इत्यर्थः एकाग्रताया उदय आविर्भाव इत्यर्थः तयोर्धर्म्मित्वेनानुगतं चित्तं तदिदं चित्तमपायोपजननयोः स्वात्मभूतयोर्धर्म्मयोरनुगतं समाधीयते स चित्तस्य समाधि-परिणामः ॥ ११ ॥

**ततः पुनः शान्तोदितौ तुल्यप्रत्ययौ चित्तस्यैकाग्रता परिणामः ॥ १२ ॥**

समाहितचित्तस्य पूर्व्वप्रत्ययः शान्त उत्तरस्तत्सदृश उदितः समाधिचित्त मुभयोरनुगतं पुनस्तथैव। आस-

संप्रज्ञात समाधि परिणामावस्थां चित्तस्य दर्शयति। स—मः। विक्षिप्तता सर्व्वार्थता सर्व्वविनश्यतीति क्षयस्तिरोभावः नासदुत्पद्यत इति उदय आविर्भावः आत्मभूतयोः सर्व्वार्थतैकाग्रतयोः धर्म्मयोः यौ अपायोपजनौ सर्व्वार्थताया अपाया एकाग्रताया उपजनस्तयोरनुगतं चित्तं समाधीयते पूर्व्वापरीभूत साध्यमान समाधि विशेषणं भवतीति। ११ ॥

त—मः पुनः समाधेः पूर्व्वापरीभूताया अवस्थायाः निष्पत्तौ सत्यां शान्तोदि-तावतीत वर्त्तमानौ तुल्यौच तौ प्रत्ययौ चेति तुल्यप्रत्ययौ एकाग्रतायान्तु द्वयोः

एतेन भूतेन्द्रियेषु धर्म्मलक्षणावस्थापरिणामा व्याख्याताः॥१३॥

माधिभ्रंषादिति। स खल्वयं धर्म्मिणश्चित्तस्यैकाग्रता परिणामः॥ १२॥

एतेन पूर्व्वोक्तेन चित्तपरिणामेन धर्म्मलक्षणावस्थारूपेण भूतेन्द्रियेषु धर्म्मपरिणामो लक्षणपरिणामश्चोऽवस्थापरिणामश्चोक्तोवेदितव्यः तत्र व्युत्थाननिरोधयोर्धर्म्मयोरभिभवप्रादुर्भावौ धर्म्मिणि धर्म्मपरिणामो लक्षणपरिणामश्च निरोधस्त्रिलक्षणः त्रिभिरध्वभियुक्तः स खल्वनागतलक्षणमध्वानं प्रथमं हित्वा धर्म्मत्वमनतिक्रान्तो वर्त्तमानं लक्षणं प्रतिपन्नः



प्राद्दश्य समाहित चित्तस्येति समाधि निष्पत्तिः दर्शिता॥ तथैवैकाग्रमेव अवधिमाह आसमाधि भ्रंषात्। भ्रंशादिति॥ १२॥

प्रासङ्गिकञ्च वक्ष्यमाणोपयिकञ्च भूतेन्द्रिय परिणामं विभजते ए-ता:। आचष्टे एतेनेति ननु चित्तपरिणतिमात्रमुक्तं न तु तत्प्रकारा धर्म्मलक्षणावस्थापरिणामास्तत् कथं तेषामतिदेश इत्यत आह। तत्र व्युत्थाने निरुद्धयोरिति धर्म्मलक्षणावस्था शब्दाः परं नोच्चारिताः न तु धर्म्मलक्षणावस्था परिणामा नोक्ता इति संक्षेपार्थः तथा हि व्युत्थान निरोध संस्कारयोरित्यनेन सूत्रे धर्म्म परिणाम उक्त इमश्च धर्म्मपरिणामं दर्शयता तेनैव धर्म्माधिकारयो लक्षणपरिणामोपि सूचित एवेत्याह लक्षण परिणाम इति लक्ष्यते अनेनेति लक्षणं कालभेदः तेन हि लक्षितवस्तु वस्त्वन्तरेभ्यः कालान्तर युक्तेभ्योव्यवच्छिद्यत इति

यत्रास्य स्वरूपेणाभिव्यक्तिरेषोऽस्य द्वितीयोऽध्वा न चातीतानागताभ्यां वियुक्तः तथा व्युत्थानं त्रिलक्षणं त्रिभिरध्वभिर्युक्तं वर्त्तमानं लक्षणं हित्वा धर्म्मत्वमनतिक्रान्तमतीतलक्षणं। प्रतिपन्नमेषोऽस्य तृतीयोऽध्वा नचानागतवर्त्तमानाभ्यां लक्षणाभ्यां वियुक्तः। एवं पुन व्युत्थानमुपसम्पद्यमानमनागतलक्षणं हित्वा धर्म्मत्वमनतिक्रान्तं वर्त्तमानं लक्षणं प्रतिपन्नं यत्रास्य स्वरूपाभिव्यक्तौ सत्यां व्यापार एवोऽस्य द्वितीयोऽध्वा न चातीतानागताभ्यां लक्षणाभ्यां विमुक्तमित्येवं पुननिरोध एवं पुनर्व्युत्थानर्मिति। तथाऽवस्थापरिणामो निरोधलक्षणेषु निरोधसंस्कारा बलवन्तो भवन्ति दुर्व्वला व्यु-



निरोध स्त्रिलक्षणः अस्यैव व्याख्यानं त्रिभिरध्वभिर्युक्तः अध्वशब्दः कालवचनः स खल्वनागत लक्षण मध्वानं प्रथमं हित्वा तत् किमध्ववत् धर्म्मनिरोधत्व मप्यति पतति नेत्याह धर्म्मत्वमनतिक्रान्तो वर्त्तमानं लक्षणं प्रतिपन्नं यत्र विरोधी ऽनागत आसीत् सएव संप्रति वर्त्तमानो न तु निरोधी ऽनिरोध इत्यर्थः। वर्त्तमानता स्वरूप व्याख्यानं यत्रास्य स्वरूपेण स्वोचितार्थः क्रियाकारिणाभिव्यक्तिः समुदाचारः एषोऽस्य प्रथम मनागत मध्वानमपेक्ष्य द्वितीयोऽध्वा। स्यादेतत् अनागत मध्वानं हित्वा चेद्वर्त्तमानता मापन्नस्ताञ्च हित्वा अतीता मापत्स्यते हन्त भो रध्वना मुत्पादविनाशौ स्यातां न चेष्यते नह्यसतीत्पादो नापि सतीविनाश इत्यत आह। नचातीता नागताभ्यां सामान्यात्मनावस्थिताभ्यां वियुक्तइति। अनागतस्य निरोधस्य वर्त्तमानता लक्षणं दर्शयित्वा वर्त्तमान व्युत्थानस्यातीततां तृतीय मध्वानमाह तथा व्युत्थानमिति तत् किं निरोध एवानगतो न व्युत्थानं नेत्याह। एवं पुनर्व्युत्थानमिति व्युत्थान जात्यपेक्षया पुनर्भावः न व्यक्त्यपेक्षया न ह्यतीतं

त्थानसंस्कारा इत्येष धर्म्मिणामवस्थापरिणामः तत्र धर्म्मि-णोधर्म्मैः परिणामो धर्म्माणां अध्वनां लक्षणैः परिणामो लक्षणानामप्यवस्थाभिः परिणामः इत्येवं धर्म्मलक्षणावस्था परिणामैः शून्यं क्षणमपि गुणवृत्तमवतिष्ठते । चलञ्च गुण-वृत्तं गुणस्वाभाव्यन्तु प्रवृत्तिकारणमुक्तं गुणानामिति । एतेन भूतेन्द्रियेषु धर्म्मधर्म्मिभेदात् त्रिविधपरिणामो वेदि-तव्यः । परमार्थतस्त्वेक एव परिणामो धर्म्मिस्वरूपमात्रो

पुनर्भवतीति । स्वरूपाभिव्यक्तिरवं क्रियाक्षमस्याविर्भावः सचैवं लक्षणपरिणाम उक्तः तज्जातीयेषु पौनः पुन्येन वर्त्तत इत्यत आह । एवं पुनरिति धर्म्मपरिणाम-सूचितमेवावस्था । परिणाममाह तथेति धर्म्माणां वर्त्तमानाध्वनां बलवत्ता बलवत्वे ऽवस्था तस्याः प्रतिक्षणं तारतम्यं परिणामः उपसंहरति एष इति परिणाम भेदानां सम्बन्धिभेदान्निर्धारयति । तत्रानुभवानुसारात् धर्म्मिण इति ॥ तत् किमेष परिणामो गुणानां कादाचित्को नेत्याह । एवमिति कस्मात् पुनरयं परिणामः सदातन इत्यत आह । चलञ्चेति । चोहेत्वर्थः वृत्तं प्रचारः एतदेव कुत इत्यत आह । गुणस्वाभाव्य-मिति उक्तमवेव पुरस्तात् सोयं त्रिविधोपि चित्तपरिणामः भूतेन्द्रियेषु सत्रकारेण निर्द्दिष्ट इत्याह । एतेनेति । एष धर्म्मधर्म्मिभेदो धर्म्मधर्म्मिणोर्भेदमालक्ष्य तत्र भूतानां पृथिव्यादीनां धर्म्मिणां गवादि घटादि र्वा धर्म्मपरिणामः । धर्म्माणां चातीतानागत वर्त्तमान रूपता लक्षण परिणामः वर्त्तमान लक्षणापन्नस्य गवादे-र्बाल्य कौमार यौवनवार्द्धक्यमवस्थापरिणामः घटादीनामपि नव पुरातनतावस्था परिणाम एवमिन्द्रियाणामपि धर्म्मिणां तत्तन्नीलाद्यालोचनं धर्म्मपरिणामो धर्म्मस्य वर्त्तमानादि लक्षण परिणामो वर्त्तमान लक्षणस्य स्त्राद्यालोचन स्फुटत्वा स्फुटत्वादिरवस्था परिणामः सोयमेवं विधो भूतेन्द्रिय परिणामो धर्म्मिणो धर्म्म-

हि धर्म्मो धर्म्मिविक्रियैवैष धर्म्मद्वारा प्रपञ्चते इति तत्र धर्म्मस्य धर्म्मिणि वर्त्तमानस्यैवाध्वस्वतीतानागतवर्त्तमानेषु भावान्यथात्वं भवति न द्रव्यान्यथात्वं यथा सुवर्णभाजनस्य भित्त्वान्यथाक्रियमाणस्य भावान्यथात्वमिति अपर आह “धर्म्मानभ्यधिको धर्म्मी पूर्व्वतत्त्वानतिक्रमात्” पूर्व्वपरावस्थाभेद मनुपतितः कौटस्थ्येन विपरिवर्त्तेत यद्यन्वयी स्यादित्ययमदोषः कस्मात् एकान्तानभ्युपगमात् तदेतत्त्रैलोक्यं व्यक्ते

लक्षणावस्थानां भेदमाश्रित्य वेदितव्यः। अभेदमाश्रित्याह। परमार्थतस्त्विति तुशब्दोऽभेदपक्षाद्विशिनष्टि पारमार्थिकत्वमस्य ज्ञाप्यते न त्वन्यस्य परिणामस्य निषिध्यते। कस्मात् धर्म्मिस्वरूपमाचष्टे हीति ननु यदि धर्म्मिक्रियेव धर्म्मः कथमसङ्करप्रत्ययो लोके परिणामेष्वित्यत आह। धर्म्मद्वारेति धर्म्मशब्देन धर्म्मलक्षणावस्थाः परिगृह्यन्ते तत् द्वारेण धर्म्मिण एव विक्रियेत्येकाचासङ्कीर्णा च द्वाराणामभेदेऽपि धर्म्मिणः परस्परासङ्करात्। ननु धर्म्माणामभिन्नत्वे धर्म्मिणोऽध्वनाञ्च भेदे धर्म्मिणोऽनन्यत्वेन धर्म्मेणापि इहधर्म्मिवद्भवितव्यमित्यत आह तत्र धर्म्मस्येतिभावः संस्थानभेदः सुवर्णादेर्यथा भाजनस्य रुचक स्वस्तिक व्यपदेशभेदो भवति तन्मात्रमन्यथा भवति न तु द्रव्यं सुवर्णतामुपैति अत्यन्तभेदाभावादिति वक्ष्यमाणोऽभिसन्धिः एकान्तवादिनं वौद्धमुत्थापयति अपर आहेति धर्म्मा एवहि रुचकादयस्तथ्योत्पन्नाः परमार्थसन्तो न पुनः सुवर्णं नाम किञ्चिदेकमनेकेष्वनुगतं द्रव्यमिति यदि पुनर्निवर्त्तमानेष्वपि धर्म्मेषु द्रव्यमनुगतं भवेत्ततो न चितिशक्तिवत् परिणमेत अपितु कौटस्थ्येनैव परिवर्त्तेत परिणामात्मकं रूपं परिहाय रूपान्तरेण कौटस्थ्येन परिवर्त्तनं परिवृत्तिः यथा चितिशक्तिरन्यथान्यथाभावं भजमानेष्वपि गुणेषु स्वरूपादप्रच्युता कूटस्थनित्यैवं सुवर्णाद्यपि स्यान्न चेष्यते तस्मान्न द्रव्यमतिरिक्तं धर्म्मेभ्य इति परि-

रूपेति नित्यत्वप्रतिषेधात् अपेतमप्यस्ति विनाशप्रतिषेधात्
संसर्गाच्चास्य सौक्ष्म्यं सौक्ष्म्याच्चानुपलब्धिरिति । लक्षण-
परिणामः धर्म्मोऽध्वसु वर्त्तमानः अतीतोऽतीतलक्षणयुक्तो-
ऽनागतवर्त्तमानाभ्यां लक्षणाभ्यामवियुक्तस्तथाऽनागतो-
ऽनागतलक्षणयुक्तः वर्त्तमानातीताभ्यां लक्षणाभ्यामवि-
युक्तस्तथा वर्त्तमानलक्षणयुक्तोऽतीतानागताभ्यामवियुक्त
इति यथापुरुष एकस्यां स्त्रियां रक्तो न शेषासु विरक्तो
भवतीति । अत्र लक्षणपरिणामे सर्व्वलक्षणयोगाद-
ध्वसङ्करः प्राप्नोतीति परैर्दोषश्चोद्यत इति तस्य परिहारो

हरति अयमदोष इति कस्मादेकान्तानभ्युपगमात् यदि चितिशक्तिरिव द्रव्यस्यै-
कान्तिकीं नित्यतामभ्युपगच्छेम अतएवमुपालभ्येमहि नत्वैकान्तिकीं नित्यता
मातिष्ठामहे किन्तु तदेतत् त्रैलोक्यं न तु द्रव्यमात्रं व्यक्तेरर्थक्रियाकारिणोऽपा-
दपैति कस्मान्नित्यत्व प्रतिषेधात् प्रमाणेन यदिह घटीव्यक्तेर्नापेयात् कपाल शर्करा
चूर्णादिष्ववस्थास्वपि व्यक्तौ घट इति पूर्व्ववत् उपलम्भार्थक्रिये कुर्य्यात्तस्मादनित्यं
त्रैलोक्यं अस्तु तर्ह्यनित्यमेवोपलम्भार्थ क्रियारहितत्वेन गगणारविन्दवदिति
तुच्छत्वादित्यत आह । अपेतमप्यस्ति नात्यन्त तुच्छता येनैकान्ततोऽनित्यं स्यादि-
त्यर्थः कस्माद्विनाश प्रतिषेधात् प्रमाणेन तथाहि यत्तुच्छं न तत् कदाचिदप्युप-
लम्भार्थ क्रिये करोति यथा गगणारविन्दं करोति चैतत् त्रैलोक्यं कदाचिदुप-
लम्भार्थक्रिये इति तथोत्पत्तिमत् द्रव्यत्व धर्म्मलक्षणावस्था योगित्वादयोप्यत्यन्त
तुच्छ गगननलिन नरविषाणादि व्यावृत्ताः सत्वहेतव उन्नाहार्य्या तथाच नात्यन्त
मिथ्यो येन चितिशक्तिवत् कूटस्थ नित्यः स्यात् किन्तु कथं चिन्नित्य तथाच परि-
णमीति सिद्धं एतेन मृत्पिण्डाद्यवस्थासु कार्य्याणां घटादीनामनागतानां सत्वं

धर्म्माणां धर्म्मित्वप्रसाध्यं। सति च धर्म्मित्वे लक्षणभेदोपि वाच्यो न वर्त्तमान समय एवास्य धर्म्मित्वं एवं हि चित्तं राग धर्म्मकं स्यात् क्रोधकाले रागस्यासमुदाचारादिति किञ्च त्रयाणां लक्षणानां युगपदेकस्यां व्यक्तौ नास्ति सम्भवः क्रमेण तु स्वव्यञ्जकाञ्जनस्य भावोभवेदिति। उक्तञ्च रूपातिशया वृत्त्यतिशयाश्च विरुध्यन्ते सामान्यानित्वतिशयैः सह प्रवर्त्तन्ते तस्मादसङ्करो यथा रागस्यैव क्वचित् समुदाचार इति न तदानीमन्यतराभावः किन्तु केवलं सामान्येन समन्वागत

वेदितव्यं स्यादेतदपेतमपि चेदस्ति। कस्मात्तन्नोपलभ्यत इत्यत आह। संसर्गात् स्वकारण लयात् सौक्ष्म्यं दर्शनानर्हत्वं ततश्च अनुपलब्धिरिति। तदेव धर्म्मपरिणामं लक्षणपरिणाममपि लक्षणानां परस्परानुगमनेन समर्थ्यते। लक्षण परिणाम इति एकैकं लक्षणं लक्षणान्तराभ्यां समनुगतमित्यर्थः। नन्वेक लक्षण-योगे लक्षणान्तरेणानुभूयेते तत्कथं तद्योग इत्यत आह। यथा पुरुष इति। नह्यनुभवाभावः प्रमाण सिद्धमपलपित तदुत्पादएव तत्र तत्सद्भावे प्रमाणमसत उत्पादासम्भवात् नरविषाणवदिति।

परीक्षा दोषमुत्थापयति। अत्र लक्षण परिणाम इति यदा धर्म्मवर्त्तमान स्तदैव यद्यतीतो नागतश्च तदात्रयोप्यध्वानः सङ्कीर्य्येरन् अनुक्रमेण च अध्वनां भावे असदुत्पाद प्रसङ्ग इति भावः। परिहरति तस्य परिहार इति वर्त्तमानत्वैव हि धर्म्मस्यामनुभवसिद्धा ततः प्राक् पश्चात् काल सम्बन्ध मवगमयति न खल्वसदुत्पद्यते न च सद्विनश्यति। तदिदमाह एवं हि न चित्तमिति क्रोधोत्तर काल हि चित्तं राग धर्म्मकमनुभूयते यदा च रागः क्रोध समयेऽनागतत्वेन नासीत्तत्कथमसावुत्पद्येत अनुत्पन्नश्च कथमनुभूयेतेति भवत्वेवं तथापि कुतोध्वनामसङ्कर इति पृच्छति किञ्चेति

इत्यस्ति तदा तत्र तस्य भावः। तथा लक्षणस्येति न धर्म्मी त्र्यध्वा धर्म्मास्तु त्र्यध्वानस्ते लक्षिता अलक्षिताश्च तां ताम वस्थां प्राप्नुवन्तोऽन्यत्वेन प्रतिनिर्द्दिश्यन्ते अवस्थान्तरतो न द्रव्यान्तरतः यथैका रेखा शतस्थाने शतं दशस्थाने दशैका चैकस्थाने यथाचैकत्वेपि स्त्रीमता चोच्यते दुहिता च स्वसा चेति। अवस्थापरिणामे कौटस्थ्यप्रसङ्गदोषः कैश्चिदुक्तः कथं अध्वनो व्यापारेण व्यवहितत्वात् यदा धर्म्मः स्वव्यापारं

किं कारणमसङ्करे च पुनरर्थे उत्तरमाह त्रयाणां लक्षणानां युगपन्नास्ति सम्भवः कस्मिन्नेकस्यां चित्तवृत्तौ क्रमेण क्रमेण तु स्वव्यञ्जकाञ्जनस्य भावो-भवेत् सम्भवेत् लक्षणाधीन निरूपण तया लक्षणानां लक्षणानुसारेण तद्वत्ता। अत्रैव पञ्चशिखाचार्य्य सम्मति माह उक्तञ्चेति एतच्च प्रागेव व्याख्यातं उपसंहरति तस्मादिति आविर्भाव तिरोभाव रूप विरुद्धधर्म्म संसर्गाद सङ्करोध्वनामिति दृष्टान्त माह। यथा रागस्येति पूर्व्वं क्रोधस्य रागसम्बन्धावगमो दर्शित इति। इदानीन्तु विषयान्तरवर्त्तिनो रागस्य विषयान्तरवर्त्तिना रागान्तरेण सम्बन्धावगम इति। दार्ष्टान्तिक माह। तथा लक्षणस्येति। ननु सत्यप्यनेकान्ताभ्युपगमे भेदोस्तीति धर्म्मलक्षणावस्थान्यत्वे तदभिन्नस्य धर्म्मिणोप्यन्यत्व प्रसङ्गः स एव च नेष्यते तदनुग-मानुभव विरोधादित्यत आह। न धर्म्मीत्र्यध्वा यत स्तदभिन्ना धर्म्मास्त्र्यध्वानः धर्म्मा-णामध्वत्रय योग मेव स्फोरयति। ते लक्षिता अभिव्यक्ता वर्त्तमाना इति यावत् अलक्षिता अनभिव्यक्ता अनागता अतीता इति यावत् तत्र लक्षितास्तां तामवस्थां बलवत्व दुर्ब्बलत्वादिकां प्राप्नुवन्तो ऽन्यत्वेन प्रतिनिर्द्दिश्यन्ते। अवस्थान्तरतो न द्रव्यान्तरतः। अवस्था शब्देन धर्म्मलक्षणावस्था उच्यन्ते। एतदुक्तं भवत्यनुभव एव हि धर्म्मिणो धर्म्मादीनां भेदाभेदौ व्यवस्थापयति नह्यैकान्तिके ऽभेदधर्म्मादीनां

न करोति तदानागतः यदा करोति तदा वर्त्तमानः यदा-कृत्वा निवृत्तस्तदातीत इत्येवं धर्म्मधर्म्मिणो लक्षणानाम-वस्थानाञ्च कौटस्थ्यं प्राप्नोतीति परैर्दोष उच्यते नासौ दोषः कस्मात् गुणिनित्यत्वेपि गुणानां विमर्द्दवैचित्र्यात् यथासं-स्थानमादिमद्धर्म्ममात्रं शब्दादीनां विनाश्यविनाशिनामेवं लिङ्गमादिमद्धर्म्ममात्रं सत्वादीनां गुणानां विनाश्यविना-शिनां तस्मिन् विकारसंज्ञेति तत्रेदमुदाहरणं मृद्धर्म्मी-पिण्डाकाराद्धर्म्माद्धर्म्मान्तरमुपसम्पद्यमानोधर्म्मतः परिणमते

धर्म्मिणो धर्म्मिरूपवद्धर्म्मादित्वं नाप्यैकान्तिकंभेदे गवाश्ववत् धर्म्मादित्वं स चानुभवो नैकान्तिकत्व मवस्थापयन्नपि धर्म्मादिषूपजनापाय धर्म्मकेष्वपि धर्म्मिण मेक मनुगमयन् धर्म्मांश्च परस्परतोव्यावर्त्तयन् प्रत्यात्म मनुभूयते इति तदनुसारिणो वयं न तमति वर्त्य स्वेच्छया धर्म्मानुभवान् व्यवस्थापयीतु मीश्मह इति अत्रैव लौकिकं दृष्टान्त माह। यथैकारेरेति। यथा तदेव रेखास्वरूपं तत्तत्स्थानापेक्षया शतादित्वेन व्यपदिश्यते एवं तदेव धर्म्मिरूपं तत्तत् धर्म्म लक्षणावस्था भेदेनान्यत्वेन प्रति निर्द्दिश्यते इत्यर्थः। दार्ष्टान्तिकार्थं दृष्टान्तान्तर माह। यथा चैकत्वेपीति। अत्रान्तरे परोक्तं दोषमुत्थापयति अवस्थेति। अवस्था परिणामे धर्म्मलक्षणावस्था परिणामे कौटस्थ्य दोष प्रसङ्ग उक्तो धर्म्मिधर्म्म लक्षणावस्थानां पृच्छति। कथमिति उत्तरं अध्वनो व्यापारेणेति दध्नः किल योऽनागतोऽध्वा तस्य व्यापारः क्षीरस्य वर्त्तमानत्वं तेन व्यवहितत्वाद्दध्नो यदा धर्म्मं दधिलक्षणः स्वव्यापारं दाधिकाद्यारं भं क्षीरे सन्नपि न करोति तदा नागतः यदा करोति तदा वर्त्तमानः यदा कृत्वा निवृत्तः सन्नेव स्वव्यापारात् दाधिक्याद्यारम्भात् तदातीत इति। एवं त्रैकाल्येपि सत्वाद्धर्म्मधर्म्मिणो लक्षणानामवस्थानाञ्च कौटस्थ्यं प्राप्नोति सर्व्वदा सत्ताहि

घटाकार इति घटाकारोनागतं लक्षणं हित्वा वर्त्तमान लक्षणं प्रतिपद्यते इति लक्षण परिणमते घटोनवपुराणतां प्रतिक्षणमनुभवन् अवस्थापरिणामं प्रतिपद्यत इति धर्म्मिणोपि धर्म्मान्तरमवस्था धर्म्मस्यापि लक्षणान्तरमवस्थेति एक एव द्रव्यपरिणामः भेदेनोपदर्शित इति एवं पदार्थान्तरेष्वपि योज्यमिति एते धर्म्मलक्षणावस्था परिणामा धर्म्मिस्वरूपमनतिक्रान्ता इत्येक एव परिणामः सर्व्वानमून् विशेषानभिप्लवते । अथ कथं परिणामः अवस्थितस्य द्रव्यस्य पूर्व्वधर्म्मनिवृत्तौ धर्म्मान्तरोत्पत्तिः परिणामइति ॥१३॥



नित्यत्वं चतुर्णामपि च सर्व्वदा सत्वे असत्वे वा नोत्पादः तावन्मात्रञ्च लक्षण कूटस्थ नित्यतायाः न हि चितिशक्तेरपि कूटस्थ नित्यायाः कश्चिदन्योविशेष इति भावः परिहरति नासौ दोषः कस्मात् गुणिनित्यत्वेपि गुणानां विमर्द्दो अन्योन्यभिभाव्याभिभावकत्वं तस्य वैचित्र्यात् एतदुक्तं भवति यद्यपि सर्व्वदा सत्वञ्चतूर्णामपि गुणि गुणानां तथापि विमर्द्द वैचित्र्येण तदात्मभूत तद्विकाराविर्भाव तिरोभाव भेदेन परिणामशालितया न कौटस्थ्यं चितिशक्तेस्तु न स्वात्मभूत विकाराविर्भावः तिरोभाव इति कौटस्थ्यं यथाहुः"नित्यन्तमाहु विद्वांसो यत्स्वभावो न नश्यति" इति विमर्द्द वैचित्र्यमेव विकार वैचित्र्ये हेतुं प्रकृतौ विकृतौ च दर्शयति यथा संस्थानं पृथिव्यादि परिणाम लक्षण मादिमद्धर्म्ममात्रं विनाशि तिरोभावि शब्दादीनां शब्दस्पर्शरूप रसगन्ध तन्मात्राणां स्वकार्य्यमपेक्ष्याविनाशिनाम तिरोभाविनाम् । प्रकृतौ दर्शयति एवं लिङ्गमिति तस्मिन् विकार संज्ञा नत्वेवं विकारवती चितिशक्तिरिति तदेवं परीक्षक सिद्धां विकृतिञ्च प्रकृतिञ्चोदाहृत्य विकृतावेव लोकसि-

तत्र शान्तोदिताव्यपदेश्यधर्म्मानुपाती धर्म्मी ॥ १४ ॥

योग्यतावच्छिन्ना धर्म्मिणः शक्तिरेव धर्म्मः सच फल-प्रसवभेदानुमितसद्भावः एकस्यान्योन्यश्च परिदृष्टः तत्र वर्त्तमानः स्वव्यापार मनुभवधर्म्मो धर्म्मान्तरेभ्यः शान्तेभ्य-श्चाव्यपदेश्येभ्यश्च भिद्यते। यदा तु सामान्येन-सम-न्वागतो भवति। तदा धर्म्मिस्वरूपमात्रत्वात् कोसौ केन भिद्येत। तत्र ये खलु धर्म्मिणो धर्म्माः शान्ता उदिता ऽव्यपदेश्याश्चेति तत्र शान्ता ये कृत्वा व्यापारानुप-रताः स्वव्यापारा उदितास्ते चानागतस्य लक्षणस्य समन-न्तराः वर्त्तमानस्यानन्तरा अतीताः किमर्थमतीतस्यानन्तरा



हायां गुणविमर्द्द वैचित्र्यं धर्म्मलक्षणावस्था परिणाम वैचित्र्य हेतुमुदाहरति। तत्रेद मुदाहरणमिति न चायं नियमो लक्षणानामेवावस्थापरिणाम इति सर्व्वेषामेव धर्म्मलक्षणावस्था भेदानामवस्थाशब्दा वाच्यत्वादेक एवावस्था परिणामः सर्व्वसाधा रण इत्याह धर्म्मिणोपीति व्यापकं परिणाम लक्षणमाह अवस्थितस्येति। धर्म्मशब्द श्रितत्वेन धर्म्मालक्षणावस्थावाचकः॥१३॥

यस्यैष त्रिविध परिणामस्तं धर्म्मिणं सूत्रेण लक्षयति। तत्र शान्तोदिती व्यपदेश्य धर्म्मानुपाती धर्म्मी। धर्म्मास्यास्तीति धर्म्मीति नाविज्ञाते धर्म्मे स शक्यो ज्ञातुमिति धर्म्मं दर्शयति। योग्यस्येति धर्म्मिणो द्रव्यस्य मृदादेः शक्तिरेव चूर्ण पिण्ड घटाद्युत्पत्ति शक्तिरेव धर्म्मास्तेषां तत्राव्यक्तत्वेन भावइति यावत्॥

न भवन्ति वर्त्तमानाः पूर्व्वपश्चिमताया अभावात् यथानागत वर्त्तमानयोः पूर्व्वपश्चिमता नैवमतीतस्य तस्मान्नातीतस्यास्ति समनन्तरस्तदानागत एव समनन्तरो भवति वर्त्तमानस्येति ॥

नन्वेवमव्यक्ततया सन्तस्तें ततः प्रादुर्भवन्तु उदकाहरणादयस्तु तेः स्वकारणाद् नासादिताः कुतः प्राप्ता इत्यत उक्तम् । योग्यतावच्छिन्न ति यासौ घटादीनामुत्पत्ति शक्तिः सोदकाहरणादि योग्यतावच्छिन्ना तेनोदकाहरणादयो घटादिभिः स्वकारणादेव प्राप्ता इति नाकस्मिका इतिभावः । अथवा के धर्म्मिण इत्यत्रोत्तर योग्यतावच्छिन्ना धर्म्मिण इति कोधर्म्म इत्यत्रोत्तरं शक्तिरेव धर्म्मस्तेषां योग्यतेव धर्म्म इत्यर्थः अतस्तद्वान् धर्म्मी इति सिद्धं भवति तत्सद्भावे प्रमाणमाह स च फल प्रसव भेदानुमित एकस्य धर्म्मिणोन्यश्चान्यश्च चूर्णपिण्ड घटादिरूप इत्यर्थः कार्य्यभेददर्शनाच्च भिन्न इति यावत् परिदृष्ट उपलब्धः तत्रानुभवारोहिणो वर्त्तमानस्य स्वपिण्डस्य शान्ताव्यपदेश्याभ्यां स्वचूर्णं स्वद्घटाभ्यां भेदमाह तत्र वर्त्तमान इति । यदि न भिद्यते पिण्डवच्चूर्ण घटयोरपि तद्देव स्वव्यापार व्याप्ति प्रसङ्ग इति भावः अव्यक्तस्य तु पिण्डस्य नोक्तं भेदसाधनं सम्भवति इत्याह । यदात्विति कोसौ केन भेद स्वानेन भिद्यत । तदेवं धर्म्माणां भेदसाधन मभिधाय तं भेदं विभजते तत्र येखल्विति उदिता इति वर्त्तमाना इत्यर्थः अध्वनां पौर्व्वापर्य्यं निगमयति ते चेति चोदयति किमर्थमिति । किं निमित्तमतीतस्यानन्तरा न भवन्ति वर्त्तमानाः । हेतुमाह पूर्व्वपश्चिमताया अभावात् विषयेण विषयिणी मनुपलब्धिं सूचयति अनुपलम्भ मेवोपलम्भ वैधर्म्म्येण दर्शयति । यथा वर्त्तमानाऽनागतयोरिति । उपसंहरति तत्तस्मादनागत एव समनन्तरः पूर्व्वत्वेन भवति वर्त्तमानस्य

अथाव्यपदेश्याः के सर्व्वं सर्व्वात्मकमिति यत्रोक्तम्
जलभूम्योः पारिणामिकं रसादिवैश्वरूप्यं स्थावरेषु
दृष्टं तथा स्थावराणां जङ्गमेषु जङ्गमानां स्थावरेष्वित्येवं
जात्यनुच्छेदेन सर्व्वं सर्व्वात्मकमिति। देशकालाकारनि-
मित्तोपबन्धान्न खलु समानकालमात्मनामभिव्यक्तिरिति
यत्र तेष्वभिव्यक्तानभिव्यक्तेषु धर्म्मेषु अनुपाती सामान्य
विशेषात्मा सोऽन्वयी धर्म्मी यस्य तु धर्म्ममात्रमेवेदं निरन्वयं
तस्य भोगाभावः कस्मात् अन्येन विज्ञानेन कृतस्य कर्म्मणो-





शातीतः अतीतस्य वर्त्तमानः पूर्व्वत्वेन समनन्तरो नाव्यपदेश्यः तस्मादध्वानां यवि-
श्लीतीत इति सिद्धं स्यादेतदनुभूयमानावनुभूततया उदितातीतौ शक्यावुन्नेतु
मव्यपदेश्यास्तु पुनर्धर्म्मा अव्यपदेश्यतयैव शक्या नोन्नेतु मिथ्याशयवान् पृच्छति।
अथाव्यपदेश्या के। केषु समीचामहे। अत्रोत्तरमाह। सर्व्वं सर्व्वात्मकमिति
यत्रोक्तमिति। एतदेवोपपादयति जलभूम्योरिति जलस्यहि रसरूपस्पर्श शब्दवती
भूमेश्च गन्धरसरूपस्पर्श शब्दवत्याः पारिणामिकं वनस्पतिलता गुल्मादिषु मूलफल
प्रसव पल्लवादिगत रसादि वैश्वरूप्यं दृष्टं सोयमनेव मात्मिकाया भूमेरनीदृशस्य वा
जनस्य परिणामो भवतु मर्हतीति उपपादितं हि नासत् उत्पाद्यत इति तथा स्थाव-
राणां पारिणामिकं जङ्गमेषु मनुष्य पशु मृगादिषु रसादिवैचित्र्यं दृष्टं उपभुञ्जा-
ना हि ते फलादीनि रूपादि भेदमम्पदमासादयन्ति एवं जङ्गमानां पारिणामिकं
स्थावरेषु दृष्टं रुधिरावसेकात् किल दाडिमीफलानि तालफलमात्राणि भवन्ति उप-
संहरति। एवमिति एवं सर्व्वं जलभूम्यादि सर्व्वरसाद्यात्मकम्। तत्र हेतुमाह

ऽन्यत् कथं भोक्तृत्वेनाधिक्रियेत। तत् स्मृत्यभावश्च नान्यदृष्टस्य स्मरणमन्यस्यास्तीति वस्तुप्रत्यभिज्ञानाच्च स्थितोऽन्वयी धर्म्मी यो धर्म्मान्यथात्वमभ्युपगतः प्रत्यभिज्ञायते तस्मान्नेदं धर्म्ममात्रं निरन्वयमिति ॥ १४ ॥

क्रमान्यत्वं परिणामान्यत्वे हेतुः ॥ १५ ॥

एकस्य धर्म्मिण एक एव परिणामइति प्रसक्तेः क्रमा-

न्यत्वानुच्छेदेन जलत्वभूमित्वादिजातेः सर्व्वत्र प्रत्यभिज्ञायमानत्वे नानुच्छेदात् ननु सर्वं चेत् सर्व्वात्मकं हन्त भोः सर्व्वस्य सर्व्वदा सर्व्वत्र सर्व्वथा सन्निधानात् समानकालीनाभावानांव्यक्तिःप्रसज्येत न खलु सन्निहिताविकलकारणं कार्य्यं विलम्बितु मर्हति इत्यत आह। देशकालेति यद्यपि कारणं सर्व्वं सर्व्वात्मकं तथापि यो यस्य कार्य्यस्य देशो यथा कुङ्कुमस्य काश्मीरः तेषां सत्वेपि पाञ्चालादिषु न समुदाचार इति न कुङ्कुमस्य पाञ्चालादिष्वभिव्यक्तिरेवं निदाघेन प्रावृषः समुदाचार इति न तदा शालीनां एवं न मृगी मनुष्यं प्रसूते न तस्यां मनुष्याकारसमुदाचार इति एवं नापुण्यवान् सुखरूपं भूङ्क्ते न तस्मिन् पुण्यनिमित्तस्य समुदाचार इति तस्माद्देशकालाकारनिमित्तानामुपबन्धादुपश्रमान्न समानकालमात्मनां भावानामभिव्यक्तिरिति तदेवं धर्म्मान् विभज्य तेषु धर्म्मिणोनुगमं दर्शयति। यत्रतेष्विति। सामान्यं धर्म्मिरूपं विशेषोधर्म्मस्तदात्मोभयात्मक इत्यर्थः तदेव मनुभवसिद्धमनुगतं धर्म्मिणं दर्शयित्वातमनिच्छतो वैनाशिकस्य क्षणिकं विज्ञानमात्रं चित्तमिच्छतोनिष्ट प्रसङ्गमुक्तमारयति यस्यत्विति वस्तुप्रत्यभिज्ञानाच्चेति न हि देवदत्तेन दृष्टं यज्ञदत्तः प्रत्यभिजानाति तस्मादयमनुभविता स एव प्रत्यभिज्ञातेति ॥ १४ ॥

न्यत्वं परिणामान्यत्वे हेतुर्भवतीति तद्यथा चूर्णमृत्पिण्ड मृद्घट मृत्कपाल मृत्कण मृदिति च क्रमः । यो यस्य धर्म्मस्य समनन्तरो धर्म्मः स तस्य क्रमः । पिण्डः प्रच्यवते घट उपजायते इति धर्म्मपरिणामक्रमः लक्षणपरिणामक्रमो घटस्यानागतभावाद्वर्त्तमानभावक्रमः तथा पिण्डस्य वर्त्तमानभावादतीतभावक्रमः । नातीतस्यास्ति क्रमः कस्मात्

क्र—तुः। किमेकस्य धर्म्मिण एक एव धर्म्मलक्षणावस्थालक्षणः परिणामः उत बहवो धर्म्मलक्षणावस्थालक्षणाः परिणामास्तत्र किं प्राप्तं एकत्वाद्धर्म्मिण एक एव परिणामः न हि एकरूपात् कारणात् कार्य्यभेदो भवितुमर्हति तस्याकस्मिकत्व प्रसङ्गादिति । एवं प्राप्ते उच्यते । क्रमान्यत्वात् परिणामान्यत्वं एकस्मात्तद्यथा चूर्णपिण्ड घटकपाल कणाकारा परिणतिपरम्परा क्रमवती लौकिक परीक्षकै रध्यक्षं समीक्षते अन्यश्चेदं चूर्णपिण्डयो रानन्तर्य्यमन्यच्च पिण्डघटयोरन्यच्च घटकपालयोरेकत्र परस्यान्यत्र पूर्व्वत्वात्सोयं क्रमभेदः परिणामे एकस्मिन्नवकल्पमानः परिणामभेदमापादयति एकोपिच मृद्धर्म्मी क्रमोपनिपातित तत्तत्सहकारि समवधान क्रमेण क्रमवतीं परिणाम परम्परामुद्वहन्ने नामाकस्मिकयतीति भावः धर्म्म परिणामान्यत्ववत् लक्षणपरिणामान्यत्वे वस्थापरिणामान्यत्वे च समानं क्रमान्यत्वं हेतुरिति तदेतत् भाष्ये णावद्योत्यते एकस्य धर्म्मिण इति क्रम क्रमवतोरभेदमास्थाय स तस्य क्रम इत्युक्तं तथावस्था परिणाम क्रम इति तथाहि कीनाशेन कोष्टागारे प्रयत्न संरक्षिता अपि हि व्रीहयो हायनैरति बहुभिः पाणिस्पर्शमात्र विशीर्य्यमानावयव संस्थानाः परमाणुभाव मनुभवन्तो दृश्यन्ते न चायमभिनवानामकस्मादेव प्रादुर्भवितु मर्हति तस्मात् क्षण परम्पराक्रमेण सूक्ष्म सूक्ष्मतर सूक्ष्मतमः वृहत् वृहत्तर वृहत्तमादि क्रमेण प्राप्तेषु विशिष्टोयं लक्षत इति । तदिदं क्रमान्यत्वं धर्म्मधर्म्मिभेदापेक्षा । तत्र वेत्याह । तत्र इति आविकारेभ्यः आचालिङ्गादापेक्षिक धर्म्मधर्म्मिभावो मृदा-

पूर्व्वापरतायां सत्यां समनन्तरत्वं सा तु नास्त्यतीतस्य तस्मात् द्वयोरेव लक्षणयोः क्रमः। तथावस्थापरिणाम क्रमोऽपि घटस्याभिनवस्य प्रान्ते पुराणता दृश्यते सा च क्षणपरम्परानुपातिना क्रमेणाभिव्यज्यमाना परां व्यक्ति मापद्यतइति धर्म्मलक्षणाभ्याञ्च विशिष्टोऽयं तृतीयपरिणाम इति। तत्र ते क्रमा धर्म्मधर्म्मिभेदे सति प्रतिलब्धस्वरूपाः धर्म्मोऽपि धर्म्मी भवत्यन्यधर्म्मस्वरूपापेक्षयेति यदा तु परमार्थतो धर्म्मिन्यभेदोपचारास्तद्द्वारेण सएवाभिधीयते धर्म्मस्तदायमेकत्वेनैव क्रमः प्रत्यवभासते चित्तस्य ये धर्म्माः परिदृष्टाश्च अपरिदृष्टाश्च तत्र प्रत्ययात्मकाः परिदृष्टा वस्तु मात्रात्मका अपरिदृष्टास्ते च सप्तैव भवन्त्यनुमानेन प्रापित-



देरपि तन्मात्रापेक्षया धर्म्मत्वादित्याह धर्म्मोपीति यदा परमार्थे धर्म्मिणस्तल्लिङ्ग ऽभेदोपचारप्रयोगस्तद् द्वारेण सामानाधिकरण्य द्वारेण धर्म्मोऽव धर्म्म इति यावत् तदैकएव परिणामः धर्म्मिपरिणाम एवेत्यर्थः धर्म्मलक्षणावस्थानां धर्म्मि स्वरूपाभिनिवेशात् तदनेन धर्म्मिणो दूरीत्सारितं कूटस्थनित्यत्वमित्यु क्तप्रायं धर्म्मपरिणामं प्रतिपादयन प्रसङ्गेन चित्तधर्म्माणां प्रकारभेदमाह चित्तस्येति परिदृष्टाः प्रत्यक्षाः अपरिदृष्टाः परोक्षाः तत्र प्रत्ययात्मकाः प्रमाणादयो रागादयश्च वस्तुमात्रा इत्यप्रकाशरूपतामाह। स्यादेतदपरिदृष्टाश्चेन्न सन्त्येवेत्यत आह। अनुमानेन प्रापित वस्तुमात्र सद्भावो येषां ते तथोक्ताः यथागमसा धर्म्मादागमोप्यनुमानं। सप्त परिदृष्टान् कारिकया संगृह्णाति। निरोधेति निरोधोवृत्तीनामसम्प्रज्ञातावस्था चित्तस्यागमतः संस्कारशेषभावोऽनुमानश्च समाधिगम्यते धर्म्म ग्रहणेन पुण्यापुण्ये

वस्तुमात्रसद्भावा। "निरोधधर्म्मसंस्काराः परिणामोऽथ जीवनं। चेष्टाशक्तिश्च चित्तस्य धर्म्मादर्शनवर्ज्जिता" इति अतोयोगिन उपात्तसर्व्वसाधनस्य बुभुत्सितार्थप्रतिपत्तये संयमस्य विषय उपक्षिप्यते ॥ १५ ॥

परिणामत्रयसंयमादतीतानागतज्ञानम् ॥१६॥

धर्म्मलक्षणावस्थापरिणामेषु संयमात् योगिनां भवत्यतीतानागतज्ञानं धारणाध्यानसमाधित्रयमेकत्र संयम उक्तस्तेन परिणामत्रयं साक्षात् क्रियमाणमतीतानागतज्ञानं तेषु सम्पादयति ॥ १६ ॥



उपलक्षयति क्वचित् कर्मेतिपाठस्तत्रापि तज्जनिते पुण्यापुण्ये एव गृह्यते ते चागमतः सुखदुःखोपभोग दर्शनाद्वानुमानतो गम्यते संस्कारस्तु स्मृतेरनुमीयते एवं त्रिगुणत्वाच्चित्तस्य चञ्चलगुणवृत्तिमिति प्रतिक्षण परिणामोऽनुमीयते एवं जीवनं प्राणधारणं प्रयत्नभेदो असंविदितः चित्तस्य धर्मश्वासप्रश्वासाभ्यामनुमीयते एवं चेतसश्चेष्टाक्रिया यथा यथा तैस्तैरिन्द्रियैःशरीर प्रदेशैर्वा सं प्रयुज्यते सापि तत्संयोगादेवानुमीयते एवं शक्तिरपि उद्भूतानां कार्य्याणां सूक्ष्मावस्था चेतसोधर्मः स्थूलकार्य्यानुभवादेवानुमीयते इति ॥ १५ ॥

अतः परमापाद परिसमाप्तेः संयमविषयः तद्वशीकार सूचनो विभूतिश्च वक्तव्या तत्रोक्तप्रकारं परिणामत्रयमेव तावत् प्रथममुपात्त सकल योगाङ्गस्य योगिनः संयमविषयतयोपक्षिपेति। प - नं। ननु यत्र संयमः तत्रैव साक्षात्करणं तत्

शब्दार्थप्रत्ययानामितरेतराध्यासात् सङ्कर स्तत् प्रविभागसंयमात् सर्व्वभूतरुतज्ञानम् ॥१७॥

तत्र वाग् वर्णेष्वेवार्थवती। श्रोत्रञ्च ध्वनिपरिणाम-मात्र विषयं पदं पुनर्नादानुसंहारबुद्धिनिर्ग्राह्यमिति वर्णा एकसमयासम्भवित्वात् परस्परनिरनुग्रहात्मानस्तेपदम

कथं परिणामत्रयसंयमोतीतानागतं साचात्कारयेदित्यत आह। तेन परिणामत्रयं साचात् क्रियमाणं तेषु परिणामिष्वनुगते ये अतीतानागते तद्विषयज्ञानं सम्पादयति परिणामत्रय साचात् करणमेव तदन्तर्भूतातीतानागत साचात्करणात्मकमिति न विषयभेदः संयम साचात्कारयोरित्यर्थः ॥ १६ ॥

अयमपरसंयमस्य विषय उपचिप्यते। श—नं। अत्र वाचकं शब्दमाचिख्यासुः प्रथमं तावत् वाग्व्यापारविषयमाह। तत्र वाग्वागिन्द्रियं वर्णव्यञ्जकमष्टस्थानं यथाह। "अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा॥ जिह्वामूलञ्च दन्ताश्च नासिकौष्ठौ च तालुचेति" सा वाग्वर्णेष्वेव यथा लोकप्रतीति सिद्धेष्वर्थवती न च वाचक इत्यर्थः श्रोत्रव्यापारविषयं निरूपयति श्रोत्रं पुनर्ध्वनेरुपादानस्य वागिन्द्रियाभिघातिनो यः परिणतिभेदो वर्णात्मा तेनाकारेण परिणतं तन्मात्रविषयं न तु वाचकविषयमित्यर्थः यथा लोकप्रतीति सिद्धेभ्यो वर्णेभ्यो वाचकं भिनत्ति पदं पुनर्नादानुसंहारबुद्धिनिर्ग्राह्यं यथाप्रतीति सिद्धान्नादान् वर्णान् प्रत्येकं गृहीत्वा अनु पश्चाद् या संहरत्येकत्वमापादयति गौरित्येतदेकं पदमिति तया पदं गृह्यते यद्यपि प्राच्योपि बुद्धयो वर्णाकारं पदमेव प्रत्येकं गोचरयन्ति तथापि न विशदं प्रथते चरमे तु विज्ञाने तदतिविशदमिति नादानुसंहार बुद्धिनिर्ग्राह्य-

संस्पृश्यानुपस्थाप्याविर्भूतास्तिरोभूताश्चेति प्रत्येकमपद-
स्वरूपा उच्यन्ते वर्णः पुनरेकैकः पदात्मा सर्व्वाभिधानशक्ति-
प्रचितः सहकारिवर्णान्तरप्रतियोगित्वाद्वैश्वरूप्यमिवापन्नः
पूर्व्वश्चोत्तरेणोत्तरश्च सहकारिवर्णान्तरप्रतियोगित्वाद्वैश्व-
रूप्यमिवापन्नः पूर्व्वश्चोत्तरेणोत्तरश्च पूर्व्वेण विशेषेऽवस्थापित

स्युक्तं यस्तु वैनाश्यादेकपदानुभवमविज्ञाय वर्णानेव वाचकानातिष्ठते तं प्रत्याह
वर्णा इति ते खल्वमी वर्णाः प्रत्येकं वाच्यविषयां धियमादधीरन्नागदन्तका इव
शिक्यावलम्बनं संहता वा ग्रावाण इव पिठरधारणं न तावत् प्रथमकल्पः एकस्मा-
दर्थ प्रतीतेरनुत्पत्तेरुत्पत्तौ वा द्वितीयादीनामनुच्चारणप्रसङ्गो निष्पादितक्रिये
कर्म्मणि विशेषाणाधायिनः साधनस्य साधन न्यायातिपातात् तस्मात् द्वितीयः
परिशिष्यते सम्भवति हि ग्राव्णां संहतानां पिठरधारणं एक समयभावित्वात् वर्णा-
नान्तु यौगपद्यासम्भवीतः परस्परमनुग्राह्यानुग्राहकत्वायोगात् सम्भूयापि नार्थे
धियमादधते। ते पदरूपमेकमसंस्पृशन्तः तदात्मनातएवानुपस्थापयन्तः आविर्भू-
तास्तिरोभूता अयश्शलाकाकल्पा प्रत्येकमपदस्वरूपा उच्यन्ते यदि पुनः पदमेकं
तादात्म्येन स्पृशेयुः वर्णास्ततो नोक्तदोष प्रसङ्ग इत्याह। वर्णः पुनरेकैकः पदात्मा
सर्व्वाभिरभिधानशक्तिभिर्निश्चितो गौर्गणः गौरनग इत्यादिषु हि गकारो गोत्वा-
द्यर्थाभिधायिषु दृष्ट इति वत्तदभिधान शक्तिः एवं सोमशोचिरित्यादिष्वौश्वराद्यर्था-
भिधायिषु पदेषुः तु वर्णदृष्टः सोपि तत्तदभिधानशक्तिः एवं सर्व्वत्रोहनीयं सचै-
कैको वर्णः गकारादिः सहकारि यद्वर्णान्तरमौकारादि तदेव प्रतियोगि प्रति-
सम्बन्धि यस्य स तथोक्तस्तस्य भावस्तत्वं तस्माद्वैश्वरूपं नानात्वमिवापन्नो न तु
नानात्वमापन्नः तत्त्वादेव पूर्व्वो वर्णो गकारः उत्तरेण औकारेण गणादिपदेभ्यो

इत्येवं बहवोवर्णाः क्रमानुरोधिनोर्थसङ्केतेनावच्छिन्ना इयंतत्र ते सर्व्वाभिधानशक्तिपरिवृता गकारौकारविसर्ज्जनीया सास्नादिमन्तमर्थं द्योतयन्तीति। तदेतेषां अर्थसङ्केतेनावच्छिन्नानामुपसंहृतध्वनिक्रमाणां यएकोबुद्धि

व्यावर्त्तात्तरश्च औकारो गकारेण गोचिरादि पदेभ्यो व्यावर्त्य विशेषे गोत्ववाचके गोपदे स्फोटेवस्थापितोनुसंहार बुद्धौ अयमभिसन्धिरर्थ प्रत्ययो हि वर्णनियत क्रमतया परस्परमसम्भवद्भिरशक्यः कर्त्तुं न च संस्कार द्वाराग्नेयादीनामिव परमापूर्व्वं वा स्वर्गं वा जनयितव्ये नियत क्रमाणामपि साहित्यमर्थबुध्युपजनने च वर्णानामिति साम्प्रतं विकल्पासहत्वात्। स खल्वयं वर्णानुभवजन्यः संस्कार स्मृतिप्रसवहेतुरन्यो वाग्नेयादि जन्य इवा पूर्व्वाधानो न तावदन्तरः कल्पनागौरवापत्तेः स एव तावददृष्ट पूर्व्वं कल्पनीयं तस्य च क्रमवद्भिर्वर्णानुभवैरेकस्य जन्यत्वं न सम्भवतीति तज्जातीयानेकावान्तर संस्कार कल्पनेति गौरवं न चैष ज्ञापकहेत्वङ्गमज्ञातस्तदङ्गतामनुभवतीति न खलु सम्बन्धीयं प्रत्ययानां गमज्ञातोङ्गतामुपैति स्मृतिफलप्रसवानुमितस्तु संस्कारः स्वकारणानुभव विषय नियतो न विषयान्तरे प्रत्ययमाधातुमुत्सहते अन्यथा यत्किञ्चिदेवैकैकमनुभूय सर्व्वः सर्व्वं जानियादिति न च प्रत्येकवर्णानुभव जनित संस्कार पिण्डलब्ध जन्मस्मृतिदर्पण समारोहिणो वर्णाः समधिगत सहभावा वाचका इति साम्प्रतं क्रमाक्रम विपरीत क्रमानुभूतानां तत्राविशेषितार्थ धीजनन प्रसङ्गात् न चैतत्स्मरण ज्ञानं पूर्व्वानुभववर्त्तिनीं परापरतां गोचरयितु मर्हति तस्माद्वर्णेभ्यो सम्भवन्नर्थ प्रत्यय एकपदानुभवमेव स निमित्तं उपकल्पयति न चैकपदेपि प्रसङ्गः तद्धि प्रत्येकमेव प्रयत्नभेदे भिन्नाध्वनयो व्यञ्जयन्तः परस्पर सदृश तत्तत्पदव्यञ्जक ध्वनिभिस्तुल्य स्थानकरण

निर्भासस्तत्पदं वाचकं वाचस्य सङ्केत्यते। तदेकं पाद-
मेकबुद्धिविषयएकप्रयत्नाक्षिप्तमभागक्रममवर्णं बौद्धमन्त्य-
वर्णप्रत्ययव्यापारोपस्थापितं परत्र प्रतिपिपादयिषया वर्णै-
रेवाभिधीयमानैः श्रूयमाणैश्च श्रोतृभिरनादिवाग्व्यव-

निष्पन्नाः सदृशाः सन्तोन्योन्य विसदृशैः पदैः पदमेकं सदृशमापादयन्तः प्रतियोगि
भेदेन तत्तत् सादृश्यानां भेदात्तदुपधानादेकमपि अनवयवमपि सावयवमिवा-
नेकात्मकमिवाव भासयन्ति यथा नियत वर्ण परिमाण संस्थानं मुखमेकमपि मणि
कृपाण दर्पणादिभिर्विभिन्न वर्ण परिमाण संस्थानमनेकं दर्शयन्ति न परमार्थतः
सादृश्योपधान भेदकल्पिता भागाएव निर्भागस्य पदस्य वर्णाः तेन तद्बुद्धि वर्णा-
त्मना पदभेदे स्फोटमभेदमेव निर्भागमेव सभेदमिव सभागमिवावलम्बते अतो
गोपदस्फोट भेदस्यैकस्य गकारोभाग गौरादि पद स्फोट सादृश्येन न निर्द्धारयति
सभागिगोमित्योकारेण विशिष्टो निर्द्धारयत्येव मोकारोपि भागः शोचिरादि
पदसदृशतया न शक्तो निर्द्धारयितुं सभागिनं गोपदस्फोटमिति गकारेण विशिष्टो
निर्द्धारयति असहभाविनामपि च संस्कार द्वारेणास्ति सहभावः इति विशेषण
विशेष्य भावोपपत्तिः न च भिन्नविषयत्वं संस्कारयोर्भागद्वयविषययोरनुभवयो
रुज्जन्मनोश्च संस्कारयोरेक विषयत्वात् केवलभागानुभवेन पदमव्यक्तमनुभूयते अनु-
संहारविषया तु भागानूभवयोनि संस्कारलब्ध जन्मनाव्यक्तमिति विशेषः अव्यक्ता-
नुभवाश्च प्राञ्चः संस्काराधान क्रमेण व्यक्तमनुभवमादधाना दृष्टाः यथा दूरादन-
स्यतावस्थिप्रत्यया अव्यक्ताव्यक्त वनस्पति प्रत्ययहेतवः न चेयं विधारणानामर्थ प्रत्या-
यने सम्भविनिनो खलु वर्णाः प्रत्येकमव्यक्तमर्थं प्रत्ययमादधत्यन्ते व्यक्त मिति शक्यं
वक्तुं प्रत्यक्षज्ञानएव नियमात् व्यक्ताव्यक्तत्वस्य वर्णाधेयस्त्वर्थ प्रत्ययो न प्रत्यक्षः
तदेष वर्णेभ्यो जायमानः स्फुटएव जायेत न वा जायेत नत्वस्फुट स्फोटस्य तु

हारवासनानुविद्धया लोकबुद्ध्या सिद्धवत् संप्रतिपत्त्या प्रतीयते। तस्य सङ्केतबुद्धितः बुद्धिप्रविभागः एतावतामेव जातीयकोनुसंहारः एकस्यार्थस्य वाचकइति सङ्केतस्तु पदपदार्थयोरितरेतराध्यासरूपः स्मृत्यात्मकोयोयं शब्दः

ध्वनिव्यङ्ग्यस्य प्रत्ययस्य सतः स्फुटास्फुटत्वे कल्पिते इत्यसमानं एवं प्रत्येक वर्णानुभव जनित संस्कार सहित श्रोत्रलब्ध जन्मन्यनु संहार बुद्धौ संहतावर्णा एकपद स्फोटभावमापन्नाः प्रयत्न विशेष व्यङ्ग्यतया प्रयत्नविशेषस्य च नियत क्रमापेक्षतया क्रमस्यान्यत्वे तदभिव्यञ्जक प्रयत्न विशेषाभावेन तदभिव्यक्त्यभाव प्रसङ्गात् क्रमानुरोधिनोर्थे सङ्केतेनावच्छिन्ना सङ्केतावच्छेदमेव लौकिकं सभागपदविषयं दर्शयन्ति इयन्तोविचारास्त्रिचतुराः पञ्चषड् वा एते सर्व्वाभिधानशक्ति परिवृता गकारौकार विसर्ज्जनीयाः सास्नादिमन्तमर्थमवद्योतयन्ति तत् किमिदानीं सङ्केतानुसारेण वर्णानामेव वाचकत्वं तथाच न पदं नाम किञ्चिदेकमित्यत आह।

तदेतेषामिति ध्वनि निमित्तः क्रमोध्वनि क्रमः। उपसंहृतोध्वनिक्रमोयेषु ते तथोक्ता बुद्ध्या निर्भास्यते प्रकाश्यत इति बुद्धिनिर्भासः सङ्केतावच्छिन्नाः स्थूलदर्शि लोकाशयानुरोधेन गकारौकार विसर्ज्जनीया इत्युक्तं गकारादीनामपि तदभागतया तादात्म्येन वाचकत्वात् प्रतीत्यनुसारतस्त्वेकमेव पदं वाचकमित्यर्थः। एतदेव स्पष्टयति। तदेकं पदं लोक बुद्ध्या प्रतीयत इति सम्बन्धः। कस्मादेक मित्यत आह एक बुद्धि विषयो गौरित्येकं पदमित्येकाकाराया बुद्धेर्विषयो यतः तस्मादेकं तस्य व्यञ्जकमाह। एकप्रयत्नाक्षिप्तमिति स्स इति पदव्यञ्जकात् प्रयत्नात् विलक्षणः सर इति पदव्यञ्जकः प्रयत्नः सचोपक्रमतः सर इति पदव्यक्तिः लक्षण क्षणावच्छिन्न पूर्व्वापरीभूत एकस्तदाक्षिप्तं भागानां साङ्ख्योपधान भेद कल्पितानां

सोयमर्थोयोर्थः सशब्दइत्येवमितरेतराध्यासरूपः सङ्केतो भवति इत्येवमेते शब्दार्थप्रत्यया इतरेतराध्यासात् सङ्कीर्ण- गौरितिशब्दो गौरित्यर्थो गौरिति ज्ञानं यएषां प्रविभागज्ञः स सर्व्ववित्। सर्व्वपदेषु चास्ति वाक्यशक्तिर्वृक्ष इत्युक्ते

परमार्थसतामभावादभागं अतएव पूर्व्वापरीभूत भागाभावादक्रमं ननु वर्णाः पूर्व्वापरीभूताः तेचास्य भागाइति कथमक्रममभागं चेत्यत आह। अवर्णं नह्यस्य वर्णा भागाः किन्तु सादृश्योपधानभेदात् पदमेव तेन तेनाकारेणापरमार्थ सता प्रथते न हि मणिकृपाण दर्पणादि वर्त्तीनि मुखानि मुखस्य परमार्थसतोऽवयवा इति बौद्धमनुसंहारः बुद्धौविदित मन्त्यवर्ण प्रत्ययस्य व्यापार संस्कारः पूर्व्ववर्णानुभवजनित संस्कारसहितस्तेनोपस्थापितं विषयीकृतं वर्णानुभव तत्तत्संस्काराणाञ्च पद-विषयत्वं उपपादित मधस्तात् स्यादेतदभागमक्रममवर्णञ्चेत् पदतत्वं कस्मादेवं विधं कदाचिन्न प्रथते नहि लाचारसावसेकोपधानापादितारुण भावः स्फटिक मणिस्तदपगमे स्वच्छधवलो नानुभूयते तस्मात् पारमार्थिका एव वर्णा इत्यत आह। परत्रेति प्रतिपिपादयिषया वर्णैरेवाधीयमानैः रुच्चार्य्यमानैः श्रूयमाणैश्चश्रोतृभि-रनादिः योयं वाग्व्यवहारो विभक्तवर्ण पद निबन्धनः तज्जनिता वासना साप्यनादि-रेव तदनुविद्धया तद्वासितया लोकबुद्ध्या विभक्त वर्णैरचित पदावगाहिन्या सिद्ध-वत् सम्प्रतिपत्त्या सम्बादेन वृद्धानां पदं प्रतीयते एतदुक्तं भवति अस्ति कश्चिदुपाधि य उपधेयेन संयुज्यते वियुज्यते च यथा लाचादिस्तत्र तद्वियोगे स्फटिकः स्वाभावि-केन स्वच्छधवलेन रूपेण प्रकाश इति युज्यते पदप्रत्ययस्य तु प्रयत्नभेदोपनीत ध्वनि-भेदादन्यतोनुत्पादात्तस्य च सदासादृश्य दोषभूषिततया वर्णात्मनैव प्रत्यय जनकत्व मिति कुतोनिरुपाधिजः पदस्य प्रथमा यथाहुर्ध्वनयः सादृश्यात्मनो विपर्यासस्य हेतवः

ऽस्तीति गम्यते न सत्तां पदार्थो व्यभिचारयतीति तथा नह्य
साधना क्रियास्तीति तथा च पचतीत्युक्ते सर्व्वकारकाणा
माक्षेपोनियमार्थोनुवादः कर्तृकरणकर्म्मणां चैत्राग्नितण्डु-
लान्यमिति। दृष्टञ्च वाक्यार्थे पदरचनं श्रोत्रियश्छन्दोधीते
जीवति प्राणान धारयति। तत्र वाक्ये पदपदार्थोभिव्यक्ति-

उपलम्भक मेतेषां विपर्यासस्य कारणं उपायत्वाच्च नियतः पददर्शित दर्शिनां ज्ञान-
स्यैवच वाधेयं लौकिभ्युवमुपपन्न इति। यतः पदात्मा विभक्तवर्णरूपितः प्रकाशते
अतः स्थूलदर्शिलौकी वर्णानिक पदमभिमन्यमानस्तानेव प्रकारभेदभाजोर्थे भेदे सङ्केत
यतीत्याह। तस्येति तस्य पदस्याजानतः एकस्यापि सङ्केत बुद्धितः स्थूलदर्शिलौक
स्थितये वर्णात्मना विभागः। विभागमाह एतावता न न्यूनानामधिकानां वा एवं
जातीयकी नैरन्तर्य्य क्रमविशेषः अनुसंहार एक बुद्ध्युपग्रहः। एकस्यार्थस्य गौत्वादे-
र्वाचक इति। ननु यद्येकस्यार्थस्यायं शब्दोवाचक इति सङ्केतः हन्तभोः शब्दार्थ-
योर्नेतरेतराध्यासस्तर्हीत्यत आह। सङ्केतस्त्विति। स्मृतावात्मा स्वरूपं यस्य स तथोक्तः
तद्धिकृतइत्थं वंसङ्केतोर्थमवधारयत्यपितुस्मर्य्यमाणःएतदुक्तं भवतिअभिन्नाकारएवसङ्केते
कथञ्चिदिदं विकल्प्य षष्ठीप्रयुक्तेति। यएषां प्रविभागज्ञःसतत्रसंयमेभवतिसर्व्ववित्
सर्व्वभूतरुतज्ञइति। तदेवं विकल्पितवर्णभागमेकमनयवयवं पदं व्युत्पाद्यकल्पित
पदविभागं वाक्यं एकं अनवयवं व्युत्पादयितुमाह। सर्व्वपदेषुचास्तिवाक्यशक्तिःअयमभि
सन्धिः परप्रत्यायनायशब्दःप्रयुज्यते तदेवचपरं प्रतिप्रतिपादयितव्यं यत्तेःप्रतिपित्सितं
यदुपदानादिगोचरोनचपदार्थमात्रं तद्गोचरःकिन्तुवाक्यार्थइतिवाक्यपराएवसर्व्वेशब्दा
स्तेनसएवतेषामर्थःअतोयत्रापिकेवलस्यपदस्यप्रयोगस्तत्रापिपदान्तरेणसहैकीकृत्यततो-
र्थोगम्यतेनतुकेवलात्कस्मात्तन्मात्रस्यासामर्थ्यात्तथाचवाक्यमेवतत्रतत्रव.चकंनतुपदानि

स्ततः पदं प्रविभज्य व्याकरणीयं क्रियावाचकं कारक-
वाचकं वा अन्यथा भवत्यश्वोऽजापयइत्येवमादिषु नामा-
ख्यातसारूप्यादनिर्ज्ञातं कथं क्रियायां कारके वा व्या-
क्रियेतेति तेषां शब्दार्थप्रत्ययानां प्रविभागः। तद् यथा
श्वेतते प्रसादइति क्रियार्थः श्वेतश्वेतः प्रसादइति कार-
कार्थः शब्दः क्रिया कारकात्मा तदर्थः प्रत्ययश्च कस्मात्

तद्भागतयातुतेषामप्यस्तिवाक्यार्थवाचकशक्तिपदार्थ इव पदभागतयावर्णानांतेन यथा वर्णएकैकः सर्व्वपदार्थाभिधानशक्तिप्रचितएवं पदमप्येकैकं सर्व्ववाक्यार्थाभिधान शक्ति प्रचितं तदिदमुक्तं सर्व्वपदेषुचास्तिवाक्यशक्तिःवृक्षइत्युक्तेअस्तीतिगम्यतेअध्याहृतास्तिपद सहितं वृक्षइतिपदं वाक्यार्थेंवर्त्ततइतितद्भागत्वाद्वृक्षपदं तत्रवर्त्ततेतस्मात्पुनरस्तीति गम्यतेइत्यतआह। नसत्तांपदार्थो व्यभिचरतीतिलोकएवहिपदानामर्थावधारणो-पायःसचकेवलंपदार्थमस्त्यर्थेनाभिसमस्यसर्व्वत्रवाक्यार्थीकरोतिसोयमाभिचारःसत्तया पदार्थस्यअतएवशब्दवृत्तिविदांव्यवहारोयंयत्रान्यक्रियापदंनास्तितत्रास्तिभवन्तिपरःप्रयो क्तव्यइतिक्रियाभेदाव्यभिचारिप्रातिपदिकमुक्ताक्रियाभेदं कारकाव्यभिचारिणंदर्शयति तथाचपचतीत्युक्तेहिकारकमात्रस्यतदन्वययोग्यस्याक्षमात्अन्यव्यावृत्तिपरस्तुइ दानांअनु वादःतदेवंभेदएववाक्यार्थइति। तथानपेक्षमपिपदंवाक्यार्थेवर्त्तमानंदृश्यतइति सुतरामस्तिवाक्यशक्तिःपदानामित्याह। दृष्टञ्चेतिनचैतावतापिश्रोत्रियादिपदस्य स्वतन्त्रस्यैवं विधार्थप्रत्यायनंनयावदस्त्यादिभिरभिसमासीस्यभवति तथाचास्यापिवाक्या वयवत्वात्कल्पितत्वमेवेतिभावःस्यादेतत्पदानामेवचेद्वाक्यशक्तिः क्रुतं तर्हिवाक्येनतेभ्य एवतदसायादित्यतआह।

तत्रवाक्यइति। उक्तमेतत्नकेवलात्पदात्पदार्थप्रतिपित्सितः प्रतीयतेनयाव-

सोयमित्यमभिसम्बन्धादेकाकारएव प्रत्ययः सङ्केत इति यस्तु श्वितोर्थः स शब्दप्रत्यययोरालम्बनीभूत सङ्खिस्वाभिरवस्थाभिर्व्विक्रियमाणो न शब्दसहगतो न बुद्धिसहगतः। एवं शब्द एवं प्रत्ययोनेतरेतरसहगतइति। अन्यथार्थोन्यथा शब्दोन्यथा प्रत्ययइति विभागः। एवं तत् प्रविभागसंयमात् योगिनः सर्व्वभूतरुतज्ञानं सम्पद्यते इति ॥१७॥

देतत्पदान्तरेणाभिसमस्यतइतितथाचवाक्यात्पदान्यपोद्धृत्य कल्पितानिवाक्यार्थाच्चापोद्धृत्यतदेकदेशंकारकं वाक्रियांवातत्पदंप्रकृत्यादिविभागकल्पनयाव्याकरणीयमन्वाख्येयंकिमर्थं पुनरेतावताक्लेशेनान्वाख्यायतइत्यतआह। अन्यथेतिचटोभवतिभवति भिन्धांदेहि भवतितिष्ठतीतिनामाख्यातयोश्च सामान्यतएवमश्वस्त्वंअश्वीयातीति एवमजापयः पिबअजापयःशत्रून्नितिनामाख्यातसारूप्यादनिर्ज्ञातंनामत्वेनाख्यातत्वेन वाअन्वाख्यानाभावेनिष्कृष्यज्ञातंकथंक्रियायांकारकेवाव्याक्रियेततस्माद्वाक्यात्पदान्यपोद्धृत्यव्याख्यातव्यानिनतुअन्वाख्यानादेवपारमार्थिकोविभागःपदानामिति। तदेवंशब्दरूपंव्युत्पाद्यशब्दार्थप्रत्ययानांसङ्केतापादितसङ्कराणामसङ्करमाख्यातुमुपक्रमते। तेषां शब्दार्थप्रत्ययानांविभागः। तद्यथाश्वेततेप्रसादइति। क्रियार्थःशब्दःस्फुटतरोह्यत्र पूर्व्वपरीभूतायाः क्रियायाःसाध्यरूपायाःसिद्धरूपक्रियार्थःश्वेतइति। भिन्नःशब्दः। यत्रापिशब्दार्थयोःसिद्धरूपत्वंतत्राप्यर्थादस्तिशब्दस्यभेदइत्याह। श्वेतःप्रसादइतिकारकार्थःशब्दोभिहितत्वाच्चकारकविभक्तेरभावः। अर्थंविभजतेक्रियाकारकात्मातदर्थस्तयोःशब्दयोरर्थःक्रियात्माकारकात्माच। प्रत्ययंविभजते प्रत्ययश्चेति चशब्देनतदर्थ इत्येतत् पदमवानुकृष्यतेतदत्वान्यपदार्थप्रधानंसम्बध्यतेसएवक्रियाकारकात्मार्थोयस्य प्रतययोक्तः। नन्वभेदेनप्रतीतेः शब्दार्थप्रत्ययानांसङ्करात्कुतःप्रविभागइत्याशयवान्

**संस्कारसाक्षात्करणात् पूर्व्वजातिज्ञानम्॥१८॥**

द्वये खल्वमी संस्काराः स्मृतिः क्लेशहेतवोवासनारूपा विपाकहेतवः धर्म्माधर्म्मरूपास्ते पूर्व्वभवाभिसंस्कृताः परिणामचेष्टा निरोधशक्तिजीवनधर्म्मवदपरिदृष्टा चित्तधर्म्मास्तेषु संयमः संस्कारसाक्षात्क्रियायै समर्थः । न च देशकालनिमित्तानुभवैर्विनातेषामस्ति साक्षात्करणम् । तदित्थं संस्कारसाक्षात्करणात् पूर्व्वजातिज्ञानमुत्पद्यते योगिनः । परत्राप्येवमेव संस्कारसाक्षात्करणात् परजातिसम्वेदनम् । अत्रेदमाख्यानं श्रूयते भगवतोजैगीषव्यस्य संस्कारसाक्षात्करणाद्दशसु महासर्गेषु जन्मपरिणामक्रममनुपश्यतो विवेकजं ज्ञानं प्रादुरभवत् अथ भगवानावटास्तनुधरमुवाच दशसु महासर्गेषु भव्यत्वादनभिभूतबुद्धिसत्त्वेन त्वया

पृच्छविकल्पादिति । उत्तरमाह सोयमित्यभिसम्बन्धादिति । सङ्केतोपाधिरेकाकार प्रत्ययोनतुतात्त्विक इत्यर्थः सङ्केतस्यनिमित्ततादर्शितासङ्केत इतिसतस्यापरमार्थमाह । यत्तु श्वेतोर्थ इति अवस्थानवपुराणत्वादयःसहगतसङ्कीर्ण एवञ्चप्रविभागसंयमात् योगिनः सर्व्वेषांभूतानांपशुमृगसरीसृपवयःप्रभृतीनांयानिरुतानितत्राप्यव्यक्तं पदं तदर्थःप्रत्यय इतितदिह मनुष्यवचनवाच्यप्रत्ययेषुक्तः संयमःसमानजातीयतया तेष्वपिकृतएवेति तेषां रुतंतदर्थं भेदंतत्प्रत्ययञ्चयोगीजानातीतिसिद्धम् ॥ १७ ॥

सं – नं ज्ञानजाद्दिसंस्काराःस्मृतेर्हेतवो अविद्यादिसंस्कारा अविद्यादीनां क्लेशानां हेतवः । विपाको जात्यायुर्भोगरूपस्तस्य हेतवो धर्म्माधर्म्मरूपाः पूर्व्वेषु भवेष्वभि

नरकतिर्य्यग् गर्भसम्भवं दुःखं सम्पश्यता देवमनुष्येषु पुनः पुनरुत्पद्यमानेन सुखदुःखयो किमधिकमुपलब्धमिति भगवन्तमावट्यं जैगीषव्य उवाच दशसु महासर्गेषु भव्यत्वा दनभिभूतबुद्धिसत्वेन मया नरकतिर्य्यगभवं दुःखं सम्पश्यता देवमनुष्येषु पुनः पुनरुत्पद्यमानेन यत्किञ्चिदनुभूतं तत् सर्व्वं दुःखमेव प्रत्यवैमीभगवानावट्य उवाच यदिदमा युष्मतः । प्रधानवशित्वमनुत्तमञ्च सन्तोषसुखं किमिदमपि दुःखपक्षे निःक्षिप्तमिति भगवान् जैगीषव्य उवाच विषयसुखापेक्षयैवेदमनुत्तमं सन्तोषसुखमुक्तं कैवल्यापेक्षया दुःखमेव बुद्धिसत्वस्यायं धर्म्मस्त्रिगुणः त्रिगुणस्य प्रत्ययोहेयपक्षे न्यस्तइति । दुःखस्वरूपस्तृष्णातन्तुस्तृष्णादुःखसन्तापापगमात् प्रसन्नमबाधं सर्व्वानुकूलं सुखमिदमुक्तमिति ॥ १८ ॥

संस्कृताः निष्पादिताः स्वकारणैर्य्यथा संस्कृतं व्यञ्जनं कृतमिति गम्यते परिणामचेष्टा निरोध शक्ति जीवनान्येव धर्म्माश्चित्तस्य तद्रूपपरिदृष्टाश्चित्तधर्म्मास्तेषु श्रुतिष्वनुमितेषु सपरिकरेषु संयम संस्काराणां द्वयेषां साक्षात्क्रियायै समर्थः । अस्तु तत्र संयमात्तत्साक्षात्कारः पूर्व्वजाति साक्षात् कारस्तु कुत इत्यतआह । नच देशेति निमित्तं पूर्व्व शरीर मिन्द्रियादि च सानुवन्ध संस्कारसाक्षात्कार एव नान्तरीयक तया जात्यादि साक्षात्कार माक्षिपतीत्यर्थः स्वसंस्कार संयमं परकीयेष्वति दिशति। परजात्यर्वामिति अत्र श्रद्धोत्पादे हेतु मनुभवत आवट्यस्य जैगीषव्येण संवाद मुपन्यस्यति । अत्रानुश्रूयत इति । महाकल्पः महासर्गः तनुधरइति निर्म्माणकायसम्पदुक्ता भव्यः शोभनो विगलित रजस्तमोमल इत्यर्थः प्रधान वशित्वमैश्वर्यं तेन हि

प्रत्ययस्य परचित्तज्ञानम् ॥१९॥

प्रत्यये संयमात् प्रत्ययस्य साक्षात्करणात्ततः परचित्तज्ञानं न च तत्सालम्बनं तस्याविषयीभूतत्वात् रक्तं प्रत्ययं जानात्यमुष्मिन्नालम्बने रक्तमिति न जानाति परप्रत्ययस्य यदालम्बनं तद् योगिचित्तेन नालम्बनीकृतं परप्रत्ययमात्रन्तु योगिचित्तस्यालम्बनीभूतमिति ॥ १९ ॥

कायरूपसंयमात्तद्ग्राह्यशक्तिस्तम्भे चक्षुःप्रकाशासंप्रयोगेऽन्तर्द्धानम् ॥२०॥

कायरूपे संयमाद्रूपस्य या ग्राह्यशक्तिस्तां प्रतिबध्नाति ग्राह्यशक्तिस्तम्भे सति चक्षुःप्रकाशासंयोगेऽन्तर्द्धानमुत्प-

प्रधानं विक्षोभ्य: यस्मै यादृशीं कायेन्द्रिय सम्पदं दित्सति तस्मै तादृशीं दत्ते परकीयानि च कायेन्द्रिय सहस्राणि निर्म्मायान्तरिक्षे दिवि भुवि च यथेच्छं विहरतीति । सन्तोषो हि तृष्णाक्षयो बुद्धिसत्त्वस्य प्रशान्तता धर्म्मः ॥ १८ ॥

प्र—नं । परप्रत्ययस्य चित्तमात्रस्य साक्षात्करणादिति यथा संस्कार साक्षात्कार तदनुबन्ध पूर्व्वजन्म साक्षात्कार माक्षिपत्येवं परचित्त साक्षात्कारः अपि तदालम्बन साक्षात्कार माक्षिपेदिति प्राप्ते आह नचेति । सानुबन्ध संस्कार विषयो ह्ययं यमः अयन्तु परचित्तमात्र विषय इत्यभिप्रायः ॥ १९ ॥

का – नम् । पञ्चात्मकः कायः स च रूपवत्तया चाक्षुषो भवति रूपेण हि कायस्य तद्रूपस्य चक्षुर्ग्रहण कर्म्मशक्ति मनुभवति तत्र यदा रूपे संयम विशेषो योगिना

यते योगिनः । एतेन शब्दाद्यन्तर्द्धानमुक्तं वेदितव्यम् ॥२०॥

**सोपक्रमं निरुपक्रमञ्च कर्म्म तत्संयमादपरान्तज्ञानमरिष्टेभ्योवा ॥२१॥**

आयुर्व्विपाकं कर्म्म द्विविधं सोपक्रमं निरुपक्रमं । तत्र यथार्द्रवस्त्रं वितानितं लघीयसा कालेन शुष्येत् तथा सोपक्रमं । यथाच तदेव सम्पिण्डितं चिरेण संशुष्येत् एवं निरुपक्रमं । यथावाग्निः शुष्के कक्षे मुक्तोवातेन समं ततो युक्तः क्षेपीयसा कालेन दहेत्तथा सोपक्रमं यथा वा सएवाग्निस्तृणराशौ क्रमशोवयवेषु न्यस्तश्चिरेण दहेत् तथा निरुपक्रमं । तदैकभविकमायुष्करं कर्म्म द्विविधं सोपक्रमं निरुपक्रमञ्च तत्संयमादपरान्तस्य प्रायणस्य ज्ञानमरिष्टेभ्यो वेति त्रिविधमरिष्टमाध्यात्मिकमाधिदैविकञ्चेति तत्राध्या

क्रियते तदा रूपस्य ग्राह्यशक्तौ रूपत्वत्काय प्रत्यक्षता हेतु स्तम्भते तस्मात् ग्राह्यशक्ति स्तम्भे सत्यन्तर्द्धान योगिन स्ततः परकीय चक्षु र्जनितेन प्रकाशेन ज्ञानेनासम्प्रयोग चक्षुर्ज्ञानाविषयत्वयोगिनः कायस्येति यावत् तस्मिन् कर्त्तव्ये ऽन्तर्द्धानं कारणमित्यर्थः। एतेनेति काय शब्दस्पर्श रसगन्ध संयमात्तद्ग्राह्यशक्ति स्तम्भे श्रोतत्वग्रसन घ्राण प्रकाशा सम्प्रयोगेन्तर्द्धानमिति ॥ २० ॥

सूत्र मूहनीयं सो—वा । आयुर्व्विपाकञ्च कर्म्म द्विविधं सोपक्रमं निरुपक्रमञ्च यत्खल्वेकं भविकं कर्म्म जात्यायुर्भोग हेतु स्तदायुर्व्विपाकं चित्कलानपेक्षमेव भोगदानाय प्रस्थितं दत्त बहुभोगमल्पावशिष्टफलं प्रवृत्तव्यापारं

त्मिकं घोषं स्वदेहे पिहितकर्णो न शृणोति ज्योतिर्वा नेत्रे वष्टब्धे पश्यति। तथाधिभौतिकं यमपुरुषान् पश्यति पितॄनतीतानकस्मात् पश्यति। आधिदैविकं स्वर्गमकस्मात् सिद्धान् वा पश्यति विपरीतं वा सर्व्वमिति अनेन वा जानात्यपरान्तं मरणमुपस्थितमिति ॥ २१ ॥

**मैत्र्यादिषु बलानि ॥२२॥**

मैत्रीकरुणामुदितेति तिस्रोभावनास्तत्र भूतेषु सुखि भूतेषु मैत्रीं भावयित्वा मैत्रीबलं लभते दुःखितेषु करुणां



केवलं तत्फलस्य सहसा भोक्तुं एकेन शरीरेणाशक्यत्वाद्विलम्बितं तदिदं सोपक्रमः मुपक्रमोव्यापारस्तत् सहितमित्यर्थः तदेव तु दत्तस्तोकफलं तत्कालमपेक्ष्य फलदानाय व्याप्रियमाणं कादाचित्कं मन्दव्यापारं निरुपक्रमं एतदेव निदर्शनाभ्यां विशदयति तत्र यथेति अत्रैवाति वैशद्याय निदर्शनान्तरं दर्शयति। यथा वा वह्निरिति परान्तं महाप्रलयमपेक्ष्यापरान्तो मरणं तस्मिन् कर्म्मणि धर्म्माधर्म्मयोः संयमाद परान्तज्ञानं ततः एव योगी सोपक्रम मात्मनः कर्म्म विज्ञाय बहून् कायान्निर्माय सहसा फलं भुक्त्वा स्वेच्छया म्रियते। प्रासङ्गिकमाह अरिष्टेभ्यो वा अरिवत् त्रासयन्तीत्यरिष्टानि विविधानि मरणचिह्नानि विपरीतवासस्सर्व्वं माहेन्द्रजालानि व्यतिरेकेन ग्रामनगरादि स्वर्गमभिमन्यते मनुष्यलोकमेव देवलोकमिति ॥ २१ ॥

मै—नि। मैत्र्यादिषु संयमात् मैत्र्यादित्रन्यस्य भवन्ति तत्र मैत्रीभावनातो बलं येन जीवलोकं सुखाकरोति ततः सर्व्वहितोभवति एवं करुणाबलात प्राणिनो दुःखाद् दुःखहेतोर्व्वा समुद्धरति एवं मुदितावलाज्जीवलोकस्य माध्यस्थ माधत्ते

भावयित्वा करुणाबलं लभते पुण्यशीलेषु मुदितां भावयित्वा मुदिताबलं लभते। भावनातः समाधिर्यः स संयमस्ततो बलान्यवन्ध्यवीर्य्याणि जायन्ते पापशीलेषूपेक्षा न तु भावना ततश्च तस्यां नास्ति समाधिरिति अतो न बलमुपेक्षातस्तत्र संयमाभावादिति ॥ २२ ॥

**बलेषु हस्तिबलादीनि ॥२३॥**

हस्तिबले संयमाद्धस्तिबलोभवति वैनतेयबले संयमाद्वैनतेयबलोभवति वायुबले संयमाद्वायुबल इत्येवमादि ॥ २३ ॥



**प्रवृत्त्या लोकन्यासात् सूक्ष्मव्यवहितविप्रकृष्टज्ञानम् ॥२४॥**

ज्योतिष्मती प्रवृत्तिरुक्ता मनसस्तस्यायमालोकस्त

वक्ष्यमाणौपयिकं भावना कारणत्वं समाधेराह भावनातः समाधिर्यः स संयमः यद्यपि धारणाध्यान समाधि त्रयमेव संयमः न समाधिमात्रं तथापि समाध्यनन्तरं कार्य्योत्पादात् समाधेः प्राधान्यात् तत्र संयम उपचरितः। क्वचित् भावना समाधिरितिपाठः तत्र भावना समाधौ समूहस्य संयमस्यावयवौ हेतू भवतः वीर्य्यं प्रयत्नः तेन मैत्र्यादि बलवतः पुंसः सुखितादिषु परेषां कर्त्तव्येषु प्रयत्नोबन्ध्यो भवतीति उपेक्षौदासीन्यं न तत्र भावना नापि सुखादिवद्भाव्यं किञ्चिदस्तीति ॥ २२ ॥

ब—नि। यस्य बले संयमस्तस्य बलं लभते इति ॥ २३ ॥

योगी सूक्ष्मे वा व्यवहिते वा विप्रकृष्टे वार्थे विन्यस्य तमर्थ मधिगच्छति ॥ २४ ॥

## भुवनज्ञानं सूर्य्ये संयमात् ॥२५॥

ततः प्रस्तारः सप्त लोकास्तत्रावीचेः प्रभृति मेरुपृष्ठं यावदित्येवं भूर्लोको मेरुपृष्ठादारभ्याध्रुवात् ग्रहनक्षत्र ताराविचित्रोन्तरिक्षलोकस्तत्परः स्वर्लोकः पञ्चविधो- माहेन्द्रस्तृतीयलोकश्चतुर्थःप्राजापत्योमहर्लोकस्त्रिविधोब्राह्मः तद् यथा—जनलोकस्तपोलोकः सत्यलोकइति ब्राह्म- स्त्रिभूमिकोलोकः प्राजापत्यस्ततोमहान्। माहेन्द्रश्च स्वरित्युक्तोदिवि तारा भुवि प्रजा इति। संग्रहश्लोकः। तत्रावीचेरुपर्य्युपरि निविष्टाः षण्महानरकभूमयोघनसलि-

प्र—र्थं। सूक्ष्मे व्यवहिते विप्रकृष्टे वार्थे संयमेन विन्यस्य त मधिगच्छति ॥२४॥

भु—मात्। आध्रुवादिती मेरुपृष्ठात् तदेवमनेन संग्रह श्लोकान्तेन संक्षेपतः सप्तलोकानुपन्यस्य विस्तरेणाह। तत्रावीचेरिति घनशब्देन पृथिव्युच्यते भूमिः स्थानमित्यर्थः एतेमहानरकपरिवारा बोद्धव्याः एतानेव नामान्तरेणोपसंहरति महेति तस्य सूर्य्यप्रचाराद्रात्रिन्दिवं लग्नमिव विवर्त्तते यमेवाखभाग सूर्य्यस्त्यजति तत्ररात्रि यमेव भागमलङ्करोति तत्र दिनमिति।

सकलजम्बुद्वीपपरिमाणमाह। तदेतद् योजनशतसहस्रं सुमेरोर्दिशिदिशि तदर्द्धेन पञ्चाशद् योजन सहस्रेण व्यूढं संक्षिप्तं यतोस्य मध्यस्थः सुमेरुः समुद्राश्च सर्षपराशि कल्पा इति द्विगुणा द्विगुणा इति सम्बन्धः यथा सर्षपराशिर्नव्रीहिराशि-

लानलानिलाकाशतमःप्रतिष्ठाः महाकालाम्बरीषरौरव महारौरवकालसूत्रान्धतामिस्राः यत्र स्वकर्म्मोपार्ज्जित-दुःखवेदनाः प्राणिनः कष्टमायुर्दीर्घमाक्षिप्य जायन्ते ततोमहातलरसातलातलसुतलवितलतलातलपातालाख्यानि सप्त पातालानि भूमिरियमष्टमी सप्तद्वीपा वसुमती यस्याः सुमेरुर्मध्ये पर्व्वतराजः काञ्चनः तस्य राजत वैदूर्य्य-स्फटिकहेममणिमयाणि शृङ्गानि तत्र वैदुर्य्यप्रभानुरागा-न्वितोत्पलपत्रश्यामनभसोदक्षिणभागः श्वेतः पूर्व्वः स्वच्छः पश्चिमः कुरुण्डकाभउत्तरः। दक्षिणपार्श्वे चास्य जम्बूर्यतोयं जम्बूद्वीपः। तस्य सूर्य्यप्रचाराद्रात्रिन्दिवं लग्नमिव विवर्त्तते॥ तस्य नीलश्वेतं शृङ्गवन्त उदीचानास्त्रयः पर्व्वता द्विसहस्रा यामास्तदन्तरेषु त्रीणि वर्षाणि नव नव योजनसाहस्राणि

रिवौच्छ्रितौनापि भूमिसमस्तथा समुद्राश्चपीत्यर्थः विचित्रैः शलरवत'सरित्व सह वर्त्तन्ते इति स विचित्रशैलावतसा द्वीपास्तदेतत् सर्व्वं सद्वीप विपिन नग नगर-नीरधिमाला वलयं लोकालोक परिवृतं विश्वम्भरा मण्डलं ब्रह्माण्डमध्ये व्यूढं संचित' सुप्रतिष्ठितं संस्थानं सन्निवेशो यस्य तत्तथोक्तं ये यत्र प्रतिवसन्ति तत्र तान् दर्शयति तत पाताल इति। सुमेरोः सन्निवेशमाह। सुमेरुरिति। तदेवं भूर्लोकं सप्तप्रकारमुक्त्वा सप्तप्रकारमेवान्तरिच्चं लोकमाह ग्रहेति विक्षेपो व्यापारः स्वर्लोकमा-दर्शयति माहेन्द्र निवासिन इति। देवनिकाया देवजातयः षण्णामपि देवनिका-यानां रूपोत्कर्षमाह। सर्व्वे सङ्कल्पसिद्धा इति सङ्कल्पमात्रादेवैषां विषया उपन-मन्ति। वृन्दारकाः पूज्याः कामभोगिनो मैथुन प्रियाः औपपादिक देहाः पित्रोः

रमणकं हिरण्मयमुत्तराः कुरव इति निषध हेमकुट हिम-
शैलाद् दक्षिणतो द्विसाहस्रायामास्तदन्तरेषु त्रीणि वर्षाणि
नव नव योजनसाहस्राणि हरिवर्षं किंपुरुषं भारतमिति।
सुमेरोः प्राचीना भद्राश्वमाल्यवत्सीमानः प्रतीचीनाः
केतुमालगन्धमादनसीमानौ मध्ये वर्षमिलावृतम्। तदे-
तद् योजनशतसहस्रं सुमेरोर्दिशि दिशि तदर्द्धेन व्यूढ़ं
स खल्वयं शतसहस्रायामो जम्बुद्वीपस्ततो द्विगुणेन
लवणोदधिना वलयाकृतिना वेष्टितः। ततश्च द्विगुणाःशाक-
कुशक्रौञ्चशाल्मलगोमेधपुष्करद्वीपाः सप्त समुद्राश्च सर्षप-
राशिकल्पाः स विचित्रशैलावतंसा इक्षुरससुरासर्पि
दधिमण्डक्षीरस्वादूदकसप्तसमुद्रवेष्टिता वलयाकृतयो लोकाः
पर्व्वतपरिवाराः पञ्चाशद्योजनकोटी परिसङ्ख्याता
स्तदेतत्सर्व्वं सुप्रतिष्ठितसंस्थानमण्डमध्ये व्यूढ़म् अण्डञ्च
प्रधानस्याणोरवयवो यथाकाशे खद्योत इति तत्र पाताले
जलधौ पर्व्वतेष्वेतेषु देवनिकायासुरगन्धर्व्वकिन्नरकिम्पु-
रुषयक्षराक्षसभूतप्रेतपिशाचापस्मारकाप्सरो ब्रह्म राक्षस-
कुष्माण्डविनायकाः प्रतिवसन्ति। सर्व्वेषु द्वीपेषु पुण्या-

संयोग मन्तरेणाकस्मादेव दिव्यं शरीरमेषां धर्म्मविशेषातिसंस्कृतेभ्योऽणुभ्योभूतेभ्यो
भवतीति महर्लोकमाह। महतीति महाभूत वशिनः यद्यदेतेभ्योरोचते तत्तदेव
महाभूतानि प्रयच्छन्ति तदिच्छातश्च महाभूतानि तेन तेन संस्थानेनावतिष्ठन्ते।
ध्यानाहारा ध्यानमात्रतृप्ताः पुष्टाभवन्ति। जनलोकमाह। प्रथम इत्युक्त क्रमेन

मानो देवमनुष्याः । सुमेरुस्त्रिदशानामुद्यानभूमिस्तत्र मिश्रवनं नन्दनं चैत्ररथं सुमानस मित्युद्यानानि । सुधर्म्मा देवसभा । सुदर्शनं पुरं । वैजयन्तःप्रसादः ग्रहनक्षत्रतारकास्तु ध्रुवे निबद्धा वायुविक्षेपनियमेनोपलक्षितप्रचाराः सुमेरोरुपर्य्युपरि सन्निविष्टा विपरिवर्त्तन्ते माहेन्द्रनिवासिनः षट् देवनिकायास्त्रिदशा अग्निष्वात्तायाम्यास्तुषिता अपरिनिर्म्मितवशवर्त्तिनः परिनिर्म्मितवशवर्त्तिनश्चेति । सर्व्वे संकल्पसिद्धाः । अणिमाद्यैश्वर्य्योपपन्नाः कल्पायुषो वृन्दारकाः कामभोगिनः औपपादिकदेहा उत्तमानुकूलाभिरप्सरोभिः कृतपरिवाराः महति लोके प्राजापत्ये पञ्चविधा देवनिकायाः कुमुदा ऋभव प्रतर्द्दना अञ्जनाभाः प्रतिताभाइत्येते महाभूतवशिनो ध्यानाहाराः कल्पसहस्रायुषः प्रथमे ब्रह्मणो जनलोके चतुर्व्विधो देवनिकायो ब्रह्मपुरोहिताः ब्रह्मकायिकाः ब्रह्ममहाकायिका अमरा इति ते भूतेन्द्रियवशिनो द्विगुणोद्विगुणोत्तरायुषो द्वितीये तपसि लोके त्रिविधो देवनिकायः आभास्वरा महाभास्वरा सत्यमहाभास्वरा इति ते भुतेन्द्रियप्रकृति-



भूतेन्द्रिय वशिन इति भूतानि पृथिव्यादीनि इन्द्रियाणि श्रोत्रादीनि यथा नियुक्तमिच्छन्ति तथैव नियुञ्जन्ते । उक्त क्रमापेक्षाद्वितीय ब्रह्मणस्तपोलोकमाह द्वितीय इति भूतेन्द्रिय प्रकृतिवशिन इति प्रकृतिः पञ्चतन्मात्राणि तद्वशिनः तदिच्छातो तन्मात्राण्येव कायाकारेण परिणमन्त इत्यागमिनः द्विगुणेति आभास्वरेभ्यो द्विगुणायुषो

वशिनः द्विगुणद्विगुणोत्तरायुषः सर्व्वे ध्यानाहाराः ऊर्द्ध्व-रेतस ऊर्द्ध्वमप्रतिहतज्ञाना: । अधरभूमिष्वनावृतज्ञानविषयाः तृतीये ब्रह्मणः सत्यलोके चत्वारो देवनिकाया अच्युताः शुद्धनिवासाः सत्याभाः संज्ञासंज्ञिनश्चेति अकृत-भवनन्यासाः स्वप्रतिष्ठा उपर्य्युपरिस्थिताः प्रधानवशिनो यावत् स्वर्गायुषः तत्राच्युताः सवितर्कध्यानसुखाः शुद्ध-निवासाः सविचारध्यानसुखाः सत्याभा आनन्दमात्र ध्यान-सुखाः संज्ञासंज्ञिनश्चास्मितामात्रध्यानसुखास्तेपि त्रैलोक्य-मध्ये प्रतितिष्ठन्ति । तत्र ते सप्त लोकाः सर्व्वे एव ब्रह्मलोकाः विदेहप्रकृतिलयास्तु मोक्षपदे वर्त्तन्ते न लोकमध्ये न्यस्ता इत्येतद् योगिना साक्षात्कर्त्तव्यं सूर्य्यद्वारे संयमं कृत्वा ततोन्यत्रापि एवं तावदभ्यसेद् यावदिदं सर्वं दृष्टमिति॥२५॥

## चन्द्रे ताराव्यूहज्ञानम् ॥२६॥

चन्द्रे संयमं कृत्वा ताराव्यूहं विजानीयात् ॥ २६ ॥

महाभास्वरा तेभ्योऽपि द्विगुणायुषः सत्यमहाभास्वरा इत्यर्थः । ऊर्द्ध्वमिति ऊर्द्ध्वं सत्यलोके अप्रतिहत ज्ञानाअवीचेस्तु प्रभृत्यातपोलोकं सूक्ष्मव्यवहितादि सर्व्वं विजानन्तीत्यर्थः तृतीयं ब्रह्मणः सत्यलोकमाह । तृतीय इति अकृत भवनस्य न्यासो यैस्तेतथोक्ताः । आधाराभावादेव स्वप्रतिष्ठाः स्वेषु शरीरेषु प्रतिष्ठा येषां ते तथोक्ताः प्रधान वशिनस्तदिच्छातः सत्वरजस्तमांसि प्रवर्त्तन्ते यावत् स्वर्गायुषः तथाच श्रूयते "ब्रह्मणा सह ते सर्व्वे सम्प्राप्ते प्रतिसञ्चरे । परस्यान्ते कृतात्मानः प्रविशन्ति परं

## ध्रुवे तद्गतिज्ञानम् ॥२७॥

ततो ध्रुवे संयमं कृत्वा ताराणां गतिं जानीयात्। ऊर्द्ध्वविमानेषु कृतसंयमस्तानि विजानीयात् ॥ २७ ॥

## नाभिचक्रे कायव्यूहज्ञानम् ॥२८॥

नाभिचक्रे संयमं कृत्वा कायव्यूहं विजानीयात् वातपित्तश्लेष्माणस्त्रयो दोषाः सन्ति धातवः सप्त। त्वक्लोहितमांसस्नाय्वस्थिमज्जाशुक्राणि पूर्वं पूर्वमेषां वाह्यमित्येष विन्यासः ॥ २८ ॥



पदमिति" तदेवं चतुर्णां देवनिकायानां साधारणधर्म्मानुक्त्वा नामविशेषग्रहणेन धर्म्मविशेषानाह। तत्रेति अच्युता नाम देवाः स्थूलविषय ध्यानसुखाः तेन ते तृप्यन्ति। शुद्धनिवासा नाम देवाः सूक्ष्मविषयध्यानसुखाः तेन ते तृप्यन्ति।, सत्याभा नाम देवा इन्द्रिय विषय ध्यान सुखास्तेन ते तृप्यन्ति। संज्ञासंज्ञिनो नाम देवा अस्मितामात्र ध्यान सुखास्तेन ते तृप्यन्ति तत्र ते सम्प्रज्ञात समाधिमुपासते अथासम्प्रज्ञात समाधि निष्ठा विदेह प्रकृतिलयाः कस्मान्न लोकमध्ये न्यस्यन्ते इत्यत आह विदेह प्रकृति लया स्थिति बुद्धिवृत्तिमन्तो हि दर्शित विषया लोकयानां वहन्तो लोकेषु वर्त्तन्ते नचैवं विदेहप्रकृतिलयाः सत्यपि साधिकारत्व इत्यर्थः। तदेतदासत्यलोकमाचारिणा योगिना साक्षात्करणीयं सूर्य्यद्वारेषु सुषुम्णायां नाड्यां नचैतावतापि तत् साक्षात्कारीभवतीत्यत आह एवं तावदन्यत्रापि सुषुम्णाया अन्यत्रापि योगोपाध्यायोपदिष्टेषु यावदिदं सर्व्वं जगद्दृष्टमिति। बुद्धि सत्वं हि स्वभावत एव विश्व-

**कण्ठकूपे क्षुत्पिपासानिवृत्तिः ॥२९॥**

जिह्वाया अधस्तात् तन्तुस्तन्तोरधस्तात्कण्ठस्ततोधस्तात् कूपस्तत्र संयमात् क्षुत्पिपासे न बाधेते ॥ २९ ॥

**कूर्म्मनाड्यां स्थैर्य्यम् ॥३०॥**

कूपादधउरसि कूर्म्माकारा नाड़ी तस्यां कृतसंयमः स्थिरपदं लभते यथा सर्पोगोधावेति ॥ ३० ॥

**मूर्द्ध ज्योतिषि सिद्धदर्शनम् ॥३१॥**



शिरः कपाले अन्तः छिद्रं प्रभास्वरं ज्योतिस्तत्र संयमात्सिद्धानां द्यावापृथिव्योरन्तरालचारिणां दर्शनं तम् ॥३१॥

**प्रातिभाद्वा सर्व्वम् ॥३२॥**

प्रातिभं नाम तारकं तद्विवेकजस्यज्ञानस्य पूर्व्वरूपं

प्रकाशन समर्थं तमोमलावृतं यत्रैव रजसोद्घाट्यते तदेव प्रकाशयति सूर्य्यद्वार संयमोद्घाटितं भुवनं प्रकाशयति न चैवमन्यत्रापि प्रसङ्गस्तत् संयमस्य तावन्मात्रोद्घाटन सामर्थ्यादिति सर्व्वमवदातं तत्र तत्र जिज्ञासायां योगिनस्तत्रतत्र संयमः। एवं क्षुत्पिपासा निवृत्तिः हेतुः संयमःस्थैर्य्यहेतुश्च सूत्रपदैरुपदिष्टो भाष्येण च निगद व्याख्यातेन व्याख्यात इति न व्याख्यातः॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥

मू—लं। मूर्द्धशब्देन सुषुम्नानाड़ी लक्ष्यते तत्र संयम इति ॥ ३१ ॥

प्रा—र्वं। प्रतिभा ऊहस्तदुद्भवं प्रसङ्ख्यान हेतु संयमवती हि तत् प्रकर्षे

यथोदये प्रभा भास्करस्य तेन वा सर्व्वमेव जानाति योगी प्रातिभस्य ज्ञानस्योत्पत्ताविति ॥ ३२ ॥

हृदये चित्तसंवित् ॥३३॥

यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म तत्र विज्ञानं तस्मिन् संयमात् चित्तसम्बित् ॥ ३३ ॥

सत्वपुरुषयोरत्यन्तासङ्कीर्णयोः प्रत्ययाविशेषोभोगः परार्थत्वात् स्वार्थसंयमात् पुरुषज्ञानम् ॥३४॥



बुद्धिसत्वं प्रख्याशीलं समानसत्वोपनिबन्धने रजस्तमसौ वशीकृत्य सत्वपुरुषान्यता प्रत्ययेन परिणतं तस्माच्च

प्रसङ्ख्यानोदय पूर्व्वं लिङ्गं यदूहजं ज्ञानं तेन सर्व्वं विजानाति योगीतच्च प्रसंख्यान सन्निधापनेन संसारात्तारयति इति तारकं ॥ ३२ ॥

हृ—वित्। हृदयपदं व्याचष्टे। यदिदमस्मिन् ब्रह्मपुरे बृहत्वादात्मा ब्रह्म तस्यपुरं निलयः तद्धि तत्र विजानाति स्वमिति। दहरं गर्त्तं तदेव पुण्डरीकं अधोमुखं वेश्म मनसः चित्त संवेदनत्वे हेतुमाह। तत्र विज्ञानं तत्र संयमाच्चित्तं विजानाति स्ववृत्तिविशिष्टं ॥ ३३ ॥

स—म्। सत्वप्रकाशरूपस्याति स्वच्छस्य नितान्ताभिभूत रजस्तमस्तया विवेकख्या·

सत्वात् परिणामिनोत्यन्तविधर्म्मात् शुद्धोन्यश्चितिमात्ररूपः पुरुषस्तयोरत्यन्तासङ्कीर्णयोः प्रत्ययाविशेषो भोगः पुरुषस्य दर्शितविषयत्वात् स भोगप्रत्ययः सत्वस्य परार्थत्वाद्दृश्यः। यस्तु तस्माद्विशिष्टश्चितिमात्ररूपोन्यः पौरुषेयप्रत्ययस्तत्र संयमात् पुरुषविषया प्रज्ञा जायते। न च पुरुषप्रत्ययेन बुद्धिसत्वात्मना पुरुषोदृश्यते पुरुषएव प्रत्ययं स्वात्मावलम्बनं पश्यति। तथाह्युक्तं विज्ञातारमरेकेन विजानीयादिति ॥ ३४ ॥

तिरूपेण परिणतस्यबुद्धिसत्वस्यात्यन्तिकश्चैतन्यादसङ्करस्तत्रकेवकथा रजस्तमसी जड़स्वभावयो रित्याशयवान् सूत्रकारः सत्वपुरुषयो रित्युवाच इममेवाभिप्रायं गृहीत्वा भाष्यकारोप्याह बुद्धि.सत्वं प्रख्याशीलमिति न प्रख्याशीलमात्र मपि तु विवेकख्यातिरूपेण परिणतमतोनितान्त शुद्ध प्रकाशतयात्यन्त सारूप्यं चैतन्येनेति सङ्कर इत्यतआह। समानेतिसत्वेनोपनिबन्धनमविनाभावःसम्बन्धःरुमानं सत्वोप निबन्धनं ययो रजस्तमसो स्ते तयोक्तं वशोकारोभिभवः। असङ्करमाह तस्माच्चेति चकारोऽप्यत्र न केवलं रजस्तमोभ्यामित्यर्थःपरिणामिन् इति वैधर्म्य परिणामिनःपुरुषादुक्तं प्रत्ययाविशेषः शान्तघोर मूढ़रूपाया बुद्धे श्चैतन्य विम्बोद्ग्राहेण चैतन्यस्य शान्ताद्याकाराध्यारोप चन्द्रमसइव स्वच्छ सलिल प्रतिविम्बितस्य तत्कल्पनात् कल्पनारोपः भोगहेतुमाह दर्शित विषयत्वादिति असकृद्व्याख्यातं। ननु बुद्धि सत्वमस्तु पुरुषभिन्नं भोगस्तु पुंसः कुतोभिद्यते इत्यतआह। सभोग प्रत्ययो भोगरूपप्रत्ययः सत्वस्यातः परार्थत्वाद् दृश्योभोग्यः सत्वं हि परार्थं संहतत्वाद्धर्मश्चभोगः इति सोपि परार्थः। यस्मै च परस्मा असौ तस्य भोक्तुर्भोग्यः अथवानुकूल प्रतिकूलवेदनीयस्तु सुखदुःखानुभवो भोगः नचाय मात्मान मेवानुकूलयति प्रतिकूलयति

ततः प्रातिभश्रावणवेदनादर्शास्वादवार्त्ता जायन्ते ॥३५॥

प्रातिभात् सूक्ष्मव्यवहितविप्रकृष्टातीतानागतज्ञानंश्राव णाद्दिव्यशब्दश्रवणम् वेदनाद्दिव्यस्पर्शाधिगमः आदर्शाद्दिव्यरूपसम्बित् आस्वादाद्दिव्यरससम्बित् वार्त्ततो दिव्यगन्धविज्ञानमित्येतानि नित्यं जायन्ते ॥ ३५ ॥

वा स्वात्मनिवृत्ति विरोधादतोऽनुकूलनीयः प्रतिकूलनीयार्थोभोगः। सभोक्ता आत्मा-तस्य दृश्योभोग्य इति। यस्तु तस्मात् परार्थाद्विशिष्ट इति परार्थादिति। पञ्चस्यन्त-पदाध्याहारेण व्याख्याता स्यादेतत्पुरुष विषयाचेत्प्रज्ञा हन्त भो' पुरुषः प्रज्ञायाः प्रज्ञेय इति प्रज्ञान्तरमेव तत्र तत्रेति अनवस्थापातइत्यत आह। न च पुरुषप्रत्ययेनेति। अयमभिसन्धिः चित्याजड़ःप्रकाश्यते न जडेन चितिः पुरुषप्रत्ययस्त्वचिदात्मा कथं चिदात्मानं प्रकाशयेत् चिदात्मात्वपराधीनप्रकाशोजड़ः प्रकाशयतीति युक्तम्। बुद्धि सत्वात्मनेति अचिद्रूप तादात्म्येन जड़त्वमाह। बुद्धि सत्वगत पुरुष प्रतिविम्बालम्बनात् पुरुषालम्बनं दर्पणवन्मुखालम्बनं न तु पुरुष प्रकाशनात् पुरुषालम्बनं बुद्धि सत्वमेव तु तेन प्रत्ययेन संक्रान्त पुरुष प्रतिविम्बं पुरुष च्छायापन्नं चैतन्यमालम्बत इति पुरुषार्थः। अत्रैव श्रुति मुदाहरति तथा ह्युक्तमीश्वरेण विज्ञातारमिति। न केनचिदित्यर्थः॥ ३४॥

स च स्वार्थं संयमी न यावत् प्रधानं स्वकार्य्यं पुरुषज्ञानमभिनिवर्त्तयति तावत्तस्य पुरस्ताद् या विभूतीराधत्ते ताः सर्व्वा दर्शयति। त—न्ते। तदनेन

**ते समाधावुपसर्गा व्युत्थाने सिद्धयः ॥३६॥**

ते प्रातिभादयः समाहितचित्तस्योत्पद्यमाना उपसर्गास्तद्दर्शनप्रत्यनीकत्वात् व्युत्थितचित्तस्योत्पद्यमानाः सिद्धयः ॥ ३६ ॥

**बन्धकारणशैथिल्यात् प्रचारसंवेदनाच्च चित्तस्य परशरीरावेशः ॥ ३७॥**

लोलीभूतस्य मनसोऽप्रतिष्ठस्य शरीरे कर्माशयवशाद्बन्धः प्रतिष्ठेत्यर्थः तस्य कर्मणोबन्धकारणस्य शैथिल्यं-



थीमज धर्मानुगृहीतानां मनः श्रोत्र त्वक चक्षु जिह्वा घ्राणानां यथा संख्यं प्रातिभ ज्ञानदिव्य शब्दाद्यपरोक्ष हेतु भाव उक्तः श्रोत्रादीनां पञ्चानां दिव्य शब्दाद्युपलम्भकानां तान्त्रिक्य संज्ञाः श्रावणाद्याः सुगमं भाष्यम् ॥ ३५ ॥

कदाचिदात्मविषय संयमे प्रवृत्त स्तत्प्रभावादमूरर्थान्तर सिद्धीरधिगम्य कृतार्थं मन्यः संयमाद्विरमेदतश्चाह। ते – यः। व्युत्थितचित्तोहिताः सिद्धीरभिमन्यते। जन्मदुर्गत इवद्रविण कणिकामपि द्रविण सम्भारं योगिनातु समाहित चित्तेनोपनताश्चोपिताश्चो विरन्तव्यं अभिसंहित. ताप त्रयात्यन्तिकोपशमरूप परम पुरुषार्थः स खल्वयं कथं तत्प्रत्यनीका सुसिद्धिषु रज्येतेति सूत्र भाष्ययोरर्थः ॥ ३६ ॥

तदेवं ज्ञानरूपमैश्वर्यं पुरुष दर्शनान्तं संयमफलमुक्त्वा क्रियारूपमैश्वर्यं संयम फलमाह। बं—शः। समाधि बलादिति। बन्धकारण संयमबलात् प्राधान्यात

समाधिबलाद्भवति प्रचारसंवेदनञ्च चित्तस्य समाधिजमेव कर्म्मबन्धक्षयात् स्वचित्तस्य प्रचारसंवेदनाच्च योगी चित्तं स्वशरीरान्निष्कृष्य शरीरान्तरेषु निक्षिपति निक्षिप्तं चित्तञ्चेन्द्रियाण्यनुपतन्ति यथा मधुकरराजानं मक्षिका उत्पतन्तमनुत्पतन्ति निविशमानमनुनिविशन्ते तथेन्द्रियाणि परशरीरावेशे चित्तमनुविधीयन्त इति ॥ ३७ ॥

**उदानजयाज्जलपङ्ककण्टकादिष्वसङ्ग उत्क्रान्तिश्च ॥ ३८ ॥**



समस्तेन्द्रियवृत्तिः प्राणादिलक्षणा जीवनं तस्य क्रिया पञ्चतयी । प्राणो मुखनासिकागतिराहृदयवृत्तिः । समं नय-

समाधिग्रहणं प्रचरत्यनेनास्मिन्निति प्रचारः चित्तस्य गमागमाध्वानो नाड्यः तस्मिन् प्रचारे संयमात्तद्वेदनं तस्माच्च बन्धकारणशैथिल्यात् न तेन प्रतिबध्यते अप्रतिबद्धमपूर्व्वमार्गेण गच्छन् स्वशरीरादप्रत्यूहं निष्क्रामति न च परशरीरमाविशति तस्मात्तत्प्रचारोऽपि ज्ञातव्यः इन्द्रियाणि च चित्तानुसारीणि परशरीरे यथाधिष्ठानं निविशन्ते इति ॥ ३७ ॥

उ—ख । समस्तेन्द्रियवृत्तिर्जीवनं प्राणादिलक्षणा प्राणादयो लक्षणं यस्याः सा तथोक्ता द्वयीन्द्रियाणां वृत्तिर्बाह्याभ्यन्तरी च बाह्या रूपाद्यालोचनलक्षणा आभ्यन्तरी तु जीवनं स हि प्रयत्नभेदः शरीरोपगृहीत मारुतक्रियाभेदहेतुः सर्व्वकरण-

नात् समानस्थानाभिवृत्तिः। अपनयनादपानआपादतलवृत्तिः। उन्नयनादुदानआशिरोवृत्तिः। व्यापी व्यानइति एषां प्रधानः प्राणः। उदानजयाज्जलपङ्ककण्ठकाशादिष्वसङ्गः उत्क्रान्तिश्च प्रायणकाले भवति तां वशित्वेन प्रतिपद्यते ॥ ३८ ॥

**समानजयाज्ज्वलनम् ॥३९॥**

जितसमानस्तेजसउपध्मानं कृत्वा ज्वलति। ३९।

साधारणःयथाहुः सामान्यकरणवृत्तिः प्राणाद्यावायवः पञ्चेति तेरस लक्षणीयत्वात् तस्य प्रयत्नस्य क्रियाकार्यं पञ्चतयी प्राण आनासिकाग्रादाचहृदयादवस्थितः। अशितपीताहारपरिणतिभेदं रसं तत्तत्स्थाने सममनुरूपं नयन्समानः आहृदयादाच नाभेरस्यस्थानं। मूत्रपुरीषगर्भादीनामपनयनहेतुरपानः आनाभेराचपादतलादस्यवृत्तिः। उन्नयना दूर्द्ध्वनयना द्रसादीनामुदानः आनासिकाग्रात् आ च शिरसी वृत्तिरस्य। व्यापी व्यानः एषामुक्तानां प्रधानं प्राणस्तदुत्क्रमे सर्वोत्क्रमश्रुतेः प्राणमुत्क्रामन्तमनुसर्व्वे प्राणा उत्क्रामन्तीति तदेवं प्राणादीनां क्रियास्थानभेदेन भेदं प्रतिपाद्य सूत्रार्थमवतारयति उदानजयादिति। उदाने कृतसंयमस्तज्जयाज्जलादिभिर्नप्रतिहन्यते उत्क्रान्तिश्चार्च्चिरादिमार्गेण भवति प्रायणकाले तस्मात्तामुत्क्रान्तिं वशित्वेन प्रतिपाद्यते प्राणादिसंयमात्तद्विजये भूतजयएताः क्रियास्थानविजयादिभेदात् प्रतिपत्तव्याः ॥ ३८ ॥

स—नं। तेजसः शारीरस्योपध्मानं उत्तेजनं स्वार्थसंयमादन्याचयशिष्टं श्रवणाद् युक्तं संप्रति श्रवणाद्यर्थादेव संयमाच्छ्रवणादि भवतीत्याह ॥ ३९ ॥

## श्रोत्राकाशयोः सम्बन्धसंयमाद्दिव्यंश्रोत्रम् ४०॥

सर्व्वश्रोत्राणामाकाशं प्रतिष्ठासर्व्वशब्दानाञ्च। यथोक्तम् तुल्यदेशश्रवणानामेकदेशश्रुतित्वं सर्व्वेषां भवतीति। तच्चैतदाकाशस्य लिङ्गं अनावरणञ्चोक्तम्। तथाह मूर्त्तस्यानावरणदर्शनाद्विभूत्वमपि प्रख्यातमाकाशस्य शब्दग्रहणनिमित्तं श्रोत्रं बधिराबधिरयोरेकः शब्दं गृह्णात्यपरो न गृह्णातीति तस्मात् श्रोत्रमेव शब्दविषयं श्रोत्राकाशयोः सम्बन्धे कृतसंयमस्य योगिनोदिव्यं श्रोत्रं प्रवर्त्तते॥ ४०॥



श्री—त्रं। संयमविषयं श्रोत्राकाशयोः सम्बन्धमाधाराधेयभावमाह। सर्व्व श्रोत्राणामाहंकारिकाणामप्याकाशं कर्णशष्कुली विवर प्रतिष्ठा तदायतनं श्रोत्रं तदुपकारापकाराभ्यां श्रोत्रस्योपकारापकार दर्शनात् शब्दानाञ्च श्रोत्रसहकारिणा पार्थिवादि शब्दग्रहणे कर्त्तव्ये कर्णशष्कुलीसुषिरवर्त्ति श्रोत्रं स्वाश्रयण भोग्यता साधारण शब्दमपेक्षते। गन्धादि गुण सहकारिभि र्घ्राणादिभिर्वाह्यं पृथिव्यादिवर्त्ति गन्धाद्या लोचनं कार्य्यं दृष्टं। आहङ्कारिकमपि घ्राण रसन त्वक् चक्षुः श्रोत्रं भूताधिष्ठानमेव भूतोपकारापकाराभ्यां घ्राणादीनामुपकारापकार दर्शनादित्युक्तं तच्चेदं श्रोत्रमाहङ्कारिकमयःप्रतिममयस्कान्तमणि कल्पेन वक्तृ वक्तृ समुत्पन्नेन वक्तृस्थेन शब्देनाकृष्टं स्ववृत्ति परम्परया वक्तृवक्त्रमागत शब्दमालोचयति तथाच दिग्देशवर्त्ति शब्दप्रतीतिः प्राणभृन्मात्रस्य नासति बाधकेऽप्रमाणीकृता भविष्यतीति। तथाच पञ्चशिखस्य वाक्यं। तुल्यदेश श्रवणानामेकदेश श्रुतित्वं सर्व्वेषां भवतीति। तुल्य देशानि श्रवणानि श्रोत्राणि

**कायाकाशयोः सम्बन्धसंयमाल्लघुतूलसमापत्तेश्चाकाशगमनम् ॥४१॥**

यत्र कायस्तत्राकाशं तस्यावकाशदानात् कायस्य तेन

येषां चैत्रादीनां ते तथोक्ताः सर्व्वेषां श्रवणान्याकाश वर्त्तिनीत्यर्थः। तच्च श्रोत्राधिष्ठानमाकाशं शब्दगुणतन्मात्रादुत्पन्नं शब्दगुणकं येन शब्देन सहकारिणा पार्थिवादीन् शब्दान् गृह्णाति तस्मात्सर्व्वेषामेकजातीया श्रुतिः शब्दे इत्यर्थः तदनेन श्रोत्राधिष्ठानत्वमाकाशस्य शब्दगुणत्वञ्च दर्शितमिति तच्चैकदेश श्रुतित्वमाकाशस्य लिङ्गं साह्येकजातीया शब्दव्यञ्जिकाश्रुतिर्यदाश्रया तदेवाकाश शब्दवाच्यं नहीदृशीं श्रुतिमन्तरेण शब्दव्यक्तिः न चेदृशी श्रुतिः पृथिव्यादिगुणस्तस्य स्वात्मनि व्यङ्ग्यव्यञ्जकत्वानुपपत्तेरिति अनावरणञ्चाकाशलिङ्गं। यद्याकाशन्ना भविष्यत् अन्योन्य सम्पीड़ितानि मूर्त्तानि न सूचिभिरप्यभेत्स्यन्त ततश्च सर्व्वैरेव सर्व्वमावृतं स्यात् न च मूर्त्तद्रव्याभावमात्रादेवानावरणमस्याभावस्य भावाश्रितत्वेन तदभावेऽभावात् न च चितिशक्तिस्तदाश्रया भवितु मर्हति अपरिणामितया अवच्छेदकत्वाभावात् न च दिक्कालादयः पृथिव्यादि द्रव्य व्यतिरिक्ताः सन्ति तस्मात्तादृशः परिणति भेदो नभस एवेति सर्व्वमवदातं अनावरणे चाकाश लिङ्गे सिद्धे यत्र यत्रानावरणं तत्र तत्र सर्व्वत्राकाशमिति सर्व्वगतत्वमप्यस्य सिद्धमित्याह। तथाऽमूर्त्तस्येति श्रोत्रसद्भावे प्रमाणमाह। शब्दग्रहणेति क्रियाहि करणसाध्या दृष्टा। यथा छिदादि वास्यादि साध्या तदिह शब्दग्रहण क्रिययापि करणसाध्यया भवितव्यं यच्च करणं तच्च श्रोत्रमिति। अथास्याश्चक्षुरादयः एव कस्मात् कारणं न भवन्तीत्यत आह। वधिरावधिरयोरिति अन्वयव्यतिरेकाभ्य मवधारणं। उपलक्षणञ्चैतत् त्वग्वा तयोश्चक्षुस्तेजसोः रसनोदकयोर्नासिकापृथिव्योः सम्बन्ध संयमाद्दिव्यत्वगाद्यप्यूहनीयं ॥ ४० ॥

सम्बन्धप्राप्तिस्तत्र कृतसंयमोजित्वा तत् सम्बन्धं लघुषु तूलादिष्वापरमाणुभ्यः समापत्तिं लब्ध्वा जितसम्बन्धो लघु भवति लघुत्वाच्च जले पादाभ्यां विहरति ततस्तूर्णनाभि तन्तुमात्रे विहृत्य रश्मिषु विहरति ततो यथेष्टमाकाशगतिरस्य भवतीति ॥ ४१ ॥

**वहिरकल्पिता वृत्तिर्महाविदेहा ततः प्रकाशावरणक्षयः ॥ ४२ ॥**

शरीराद्वहिर्मनसोवृत्तिलाभोविदेहा नाम धारणा सा यदि शरीरप्रतिष्ठस्य मनसोवहिर्वृत्तिमात्रेण भवति सा कल्पितेत्युच्यते या तु शरीरनिरपेचा वहिर्भूतस्यैव मनसो



का—नं । कायाकाश सम्बन्ध संयमाद्वा लघुनि वातूलादौ कृत संयमात्समापत्तिं चेतसस्तत्स्थतदञ्जनतां लब्धेति । सिद्धक्रममाह । जल इति ॥ ४१ ॥
अपरमपि परशरीरावेश हेतु संयमं क्लेशकर्मविपाक चयहेतुमाह । व – यः। विदेहामाह शरीरादिति । अकल्पिताया महाविदेहाया य उपायस्तत्प्रदर्शनाय कल्पितां विदेहामाह सा यदीति । वृत्तिमात्रं कल्पनाज्ञानमात्रं तेन । महाविदेहामाह यात्विति । उपाय उपेयते कल्पिताकल्पितयोराह । तत्रेति किं परशरीरावेशमात्रमितो नेत्याह । ततश्चेति । ततो धारणातो महाविदेहाय मनः प्रवृत्तिसिद्धेः क्लेशश्च कर्म्म च ताभ्यां विपाकत्रयं जात्यायुर्भोगाः तदेतद्रजस्तमोमूलं विगलित रजस्तमसः सत्वमात्रात् विवेक ख्यातिमात्रसमुत्पादात्तदेतद्विपाकत्रयं रजस्तमोमूलतया तदात्मकं सद् बुद्धि सत्वमावृणोति तत्चयाच्च निरावरणं योगिचित्तं यथेच्छं विहरति जानाति ॥ ४२ ॥

बहिर्वृत्तिः सा खल्वकल्पिता। तत्र कल्पितया साधयत्यकल्पितां महाविदेहामिति यया परशरीराण्याविशन्ति योगिनः ततश्च धारणातः प्रकाशात्मनोबुद्धिसत्वस्य यदावरणं क्लेशकर्म्मविपाकत्रयं रजस्तमोमूलं तस्य च क्षयोभवति ॥ ४२ ॥

**स्थूलस्वरूपसूक्ष्मान्वयार्थवत्वसंयमाद्भूतजयः ॥४३॥**

तत्र पार्थिवाद्याः शब्दादयोविशेषाः सहकारादिभिर्धर्म्मैः स्थूलशब्देन परिभाषिता एतद् भूतानां प्रथमं रूपं द्वितीयं रूपं स्वसामान्यं मूर्त्तिर्भूमिः स्नेहोजलं वह्नि-

सू—यः। स्थूलञ्च स्वरूपञ्च सूक्ष्मञ्चान्वयश्चार्थवत्वञ्चेति स्थूलस्वरूपसूक्ष्मान्वयार्थवत्वानि तेषु संयमात्तज्जयः। स्थूलमाह तत्रेति पार्थिवाः पाथसीयास्तैजसा वायवीया आकाशीयाः शब्दस्पर्शरूप रसगन्धा यथासम्भवं विशेषाः षड़जगान्धारादयः शीतोष्णादयो नीलपीतादयः कषाय मधुरादयः एतेहि नामरूप प्रयोजनैः परस्परतोभिद्यन्तइति विशेषाः एतेषां पञ्च पृथिव्यां गन्धवर्ज्जं चत्वारोप्सु गन्धरसवर्जं त्रयस्तेजसि गन्धरसरूपवर्जं द्वौ नभस्वति शब्दएवाकाशे तत्र त ईदृशा विशेषाः सहकारादिभि र्धर्म्मैः स्थूलशब्देन परिभाषिताः शास्त्रे तत्रापि पार्थिवास्तावद्धर्म्माः। "आकारो गौरवं रौक्ष्यं वरणं स्थैर्य्यमेवच। वृत्तिभेदः क्षमा कार्ष्ण्यं काठिन्यं सर्व्वभोग्यता॥" अपां धर्म्माः – "स्नेहः। सौक्ष्म्यं प्रभाशौक्ल्यं मार्द्दवं गौरवञ्च यत्। शैत्यं रक्षा पवित्रत्वं सन्धानं चौदका गुणाः"। तैजसाधर्म्माः – "ऊर्द्ध्वभाक् पाचकं दग्धृपावकं लघुभास्वरं। प्रध्वंस्योजस्वि वै तेजः पूर्व्वाभ्यां भिन्न लक्षणं"। वायवीयाधर्म्माः—तिर्य्यग्यानं पवित्रत्वमाक्षेपो नोदनं बलं। चलमच्छायता रौक्ष्यं वायो धर्म्माः पृथग्विधाः"॥ आकाशीया धर्म्माः – ":सर्व्वतो गति

ष्णता वायुः प्रणामी सर्व्वतोगतिराकाशइत्येतत् स्वरूप-शब्देनोच्यते अस्य सामान्यस्य शब्दादयोविशेषाः तथाचोक्तं एकजातिसमन्वितानामेषां धर्म्ममात्रव्यावृत्तिरिति सामान्य विशेषसमुदयोत्र द्रष्टव्यम्। द्विष्ठोहि समूहः प्रत्यस्तमितभे-दावयवानुगतःशरीरं वृक्षोयूथं वनमिति शब्देनोपात्तभेदा-वयवानुगतः समूह उभये देवमनुष्याः समूहस्य देवा एको-भागो मनुष्या द्वितीयोभागस्ताभ्यामेवाभिधीयते समूहः। स च भेदाभेदविवक्षित आम्राणां वनं ब्राह्मणानां सङ्घइति।

स्व्यूही विष्टम्भश्चेति च वयः। आकाशधर्मा व्याख्याता पूर्व्वधर्म्म विलक्षणा" इति॥ तत्र त आकार प्रभृतयो धर्म्मास्तैः सहेति आकारस्य सामान्य विशेषौ गोत्वादि द्वितीयरूप माह। द्वितीयं रूपं स्वसामान्यं मूर्त्ति सांसिद्धिकं काठिन्यं स्नेहजलं स्नज्जापुष्टिबला-धानहेतुः वह्नि रुष्णता औदर्य्ये सौर्य्ये भौमे च सर्व्वत्रैव तेजसि समवेतोष्णतेति सर्व्वत्रै तद्धर्म्मधर्म्मिणोरभेद विवक्षयाभिधानं। वायुः प्रणामी वहनशीलः तदाह "चलनेन तृणादीनां शरीरस्याटनेन च। सर्व्वगं वायुसामान्यं नामित्व मनुमीयते" सर्व्वतोगतिराकाशः सर्व्वत्र शब्दोपलब्धि दर्शनात् श्रोत्राश्रयाकाश गुणेन हि शब्देन पार्थिवादि शब्दोपलब्धिरित्युपपादित मधस्तात् एतत् स्वरूपशब्देनोक्तं। अस्यैव मूर्त्त्यादि सामान्यस्य शब्दादयः षड्जादयः उष्णत्वादयः शुक्लत्वादयः कषायत्वा-दयः सुरभित्वादयो मूर्त्त्यादीनां सामान्यानां भेदाः सामान्यान्यपि मूर्त्त्यादीनि जम्बीर पनसामलकफलादीनि रसादि भेदात् परस्परं व्यावर्त्तन्ते तेनैतेषां एते रसादयो विशेषाः तथा चोक्तं एकजाति समन्वितानां प्रत्येकं पृथिव्यादीना मेकैकया जात्या मूर्त्ति स्नेहादीना समन्वितानां मेषां षड्जादि धर्म्ममात्र व्यावृत्ति रिति। तदेवं

स पुनर्द्विविधोयुतसिद्धावयवोऽयुतसिद्धावयवश्च युतसिद्धावयवः समूहोवनं सङ्घइति। अयुतसिद्धावयवः सङ्घातः शरीरं वृक्षः परमाणुरिति। अयुतसिद्धावयवभेदानुगतः समूहो द्रव्यमिति पतञ्जलिः एतत्स्वरूपमित्युक्तं। अथ किमेषां सूक्ष्मरूपं तन्मात्रं भूतकारणं तस्यैकोवयवः परमाणु सामान्यविशेषात्मा अयुतसिद्धावयवभेदानुगतः समुदाय

सामान्यं मूर्त्त्यादुक्तं विशेषणाश्च शब्दादय उक्ताः येचाहु "सामान्यविशेषाश्रयो द्रव्यमिति तान् प्रत्याह सामान्यविशेष समुदायोत्रदर्शने द्रव्यं येपि तदाश्रयो द्रव्यमास्थिषत तैरपि तत्समुदायो न भूयमाणो नापह्नोतव्यः नचतदपह्नवे तयोराधारो द्रव्यमिति भवति तस्मात्तदेवास्तु द्रव्यं न तु ताभ्यां तत्समुदायाच्च तदाधारमपरद्रव्यमुपलभामहे यावभ्यो ग्रावसमुदायादि वच्च तदाधारमपरं पृथग्विधं शिखरं समूहो द्रव्यमित्युक्तं। तत्र समूह मात्रं द्रव्यमिति समापनुत्तये समूहे विशेषोद्रव्यमिति निर्द्धारयितुं समूहप्रकारानाह। द्विष्ठोहीति यस्मादेवं तस्मान्न समूहमात्रं द्रव्यमित्यर्थः। द्वाभ्यां प्रकाराभ्यां तिष्ठतीति द्विष्ठः। एकं प्रकारमाह। प्रत्यस्तमितेति प्रत्यस्तमिती भेदो येषामवयवानां ते तथोक्ता प्रतिस्तमित भेदा अवयवा यस्य स तथोक्तः एतदुक्तं भवति – शरीर वृक्षयूथ वनशब्देभ्यः समूह प्रतीयमानो प्रतीतावयव भेद स्तदवाचक शब्दाप्रयोगात् समूह एकोवगम्यते इतियुतायुत सिद्धावयवत्वे न चेतनाचेतनत्वे नचोदाहरणचतुष्टयं। युतायुतसिद्धावयवत्वन्त्वाग्रे वच्यते। द्वितीयं प्रकारमाह। शब्देनोपात्त भेदावयवानुगतः समूहः उभये देव मनुष्याइति देव मनुष्याइति हि शब्देनोभय शब्दवाच्यस्य समूहस्य भागौभिन्ना वुपात्तौ। ननूभय शब्दात्तावदवयवभेदो न प्रतीयते तत्कथमुपात्त भेदावयवानुगत इत्यतआह। ताभ्यां

इत्येवं सर्व्वतन्मात्राणि एतत् तृतीयं। अथ भूतानां चतुर्थं रूपं ख्यातिक्रियास्थितिशीलागुणाः कार्य्यस्वभावानुपातिनोऽन्वयशब्देनोक्ताः। अथैषां पञ्चमरूपमर्थवत्त्वं भोगोपवर्गार्थता गुणेष्वन्वयिनो गुणास्तन्मात्रभूतभौतिकेष्विति सर्व्वमर्थवत् तेष्विदानीं भूतेषु पञ्चसु पञ्चरूपेषु संयमात्तस्य तस्य रूपस्य स्वरूपदर्शनं जयश्च प्रादुर्भवति तत्र

भागाभ्यामेव समूहोऽभिधीयते उभयशब्देन भागद्वयवाचि शब्दसहितेन समूहोवाच्यः वाक्यस्य वाक्यार्थः वाचकत्वादिति भावः। पुनर्द्वैविध्यमाह सचेति। भेदेन चाभेदेन च विवक्षितः। भेद विवक्षित माह। आम्राणां वनं ब्राह्मणानां समूहः इति। भेदएव षष्ठीश्रुतेः। यथा गर्गाणां गौरिति। अभेद विवक्षितमाह। आम्रवनं ब्राह्मणसङ्घः। आम्राश्चते वनञ्चेति समूह समूहिणोरभेदं विवक्षित्वा सामान्याधिकरण्यमित्यर्थ विधान्तरमाह। स पुन द्विविधः युतसिद्धावयवः समूह युतसिद्धाः पृथक्सिद्धाः सान्तराला अवयवा यस्य स तथोक्तः यूथं वनमिति सान्तरालाहितदवयवा द्वयाय ग्रावश्चायुतसिद्धावयवश्च समूहो द्वयोर्गीः परमाणुरिति निरन्तराहितदवयवाः सामान्य विशेषौ वा साक्षादयोवेति। तदेतेषु समूहेषु द्रव्यभूतं समूहं निर्धारयति अयुतसिद्धेति तदेवं प्रासङ्गिकं द्रव्यं व्युत्पाद्य प्रकृतमुपसंहरति। एतत्स्वरूप मित्युक्तमिति तृतीयं रूपं विवक्षुः पृच्छति—अथेति। उत्तरमाह।

तन्मात्रमिति। तस्यैकोवयवः परिणामभेदः परमाणु सामान्यं मूर्त्तिः शब्दादयो विशेषाः तदात्मा अयुत सिद्धा निरान्तरायेवयवाः सामान्यविशेषाः शब्दभेदेष्वनुगतः समुदायः यथा च परमाणुः सूक्ष्मं रूपं एवं सर्व्वतन्मात्राणि सूक्ष्मरूपमिति उपसंहृ

पञ्चभूतस्वरूपाणि जित्वा भूतजयी भवति तज्जयाद्वत्सानुसारिण्य इव गावोऽस्य सङ्कल्पानुविधायिन्यो भूतप्रकृतयो भवन्ति ॥ ४३ ॥

**ततोऽणिमादिप्रादुर्भावः कायसम्पत्तद्धर्म्मानभिघातश्च ॥ ४४ ॥**

तत्राऽणिमा भवत्यणुः। लघिमा लघुर्भवति। महिमा महान् भवति। प्राप्तिरङ्गुल्यग्रेणापि स्पृशति चन्द्रमसं। प्राकाम्यमिच्छानभिघातः भूमावुन्मज्जति मज्जति यथोदके।

रति एतदिति। अथभूतानां चतुर्थं रूपं ख्यातिक्रिया स्थितिशीलागुणाः कार्य्यस्वभाव मनुपतितुमनुगन्तुं शीलं येषां ते तथोक्ताः अतएवान्वय शब्देनोक्ताः अथैषां पञ्चमं रूपमर्थवत्वं विवृणोति। भोगेति। नन्वेवमपि सन्तुगुणा अर्थवन्तस्तत् कार्य्याणां तु कुतोर्थवत्वमित्यत आह। गुणा इति। भौतिका गोघटादयः तदेवं संयमं विषयमुक्त्वा संयमं तत् फलञ्चाह। तेष्विति। भूतप्रकृतयोभूतस्वभावाः। ४३।

सङ्कल्पानुविधाने भूतानां किं योगिनः सिद्ध्यतीत्यत आह—

त—श्च। स्थूलसंयम जयाच्चतस्त्रः सिद्धयो भवन्तीत्याह। तत्राणिमा महानपि भवत्यणुः। लघिमा महानपि लघुर्भूत्वेषीकातूल इवाकाशे विहरति महिमाल्पोपि नाग नग गगन परिमाणो भवति। प्राप्तिः सर्व्वेभावाः सन्निहितो भवन्ति योगिन स्तद्यथा भूमिष्ठ एवाङ्गुल्यग्रेण स्पृशति चन्द्रमसं स्वरूप संयम विजयात् सिद्धिमाह। प्राकाम्यमिच्छानभिघातो नास्यरूपभूत स्वरूपे मूर्त्त्यादिभिरभिहन्यते

वशित्वं भूतभौतिकेषु वशीभवत्यवश्यश्चान्येषां ईशितृत्वं तेषां प्रभवाप्ययव्यूहानामीष्टे यत् कामावसायित्वं सत्य सङ्कल्पता यथासङ्कल्पस्तथाभूतप्रकृतीनामवस्थानम्। न च शक्तोपि पदार्थविपर्य्यासं करोति, कस्मात अन्यस्य यत् काम वसायिनः पूर्वसिद्धस्य तथाभूतेषु सङ्कल्पादिति एतान्यष्टा-वैश्वर्य्याणि कायसम्पद्वक्ष्यमाणा तद्धर्म्मानभिघातश्च पृथ्वीमू-र्त्त्यानानरुणद्धि योगिनः शरीरादिक्रियाशिलामप्यनुविश तीति नापः स्निग्धाः क्लेदयन्ति नाग्निरुष्णोदहति न

भूमावुन्मज्जति मज्जति च यथोदके। सूक्ष्मविषय संयमजयात् सिद्धिमाह वशित्वं भूतानि पृथिव्यादीनिभौतिकानि गोघटादीनि तेषुवशी स्वतन्त्रीभवति। तेषां त्व-वश्यः तत्कारणतन्मात्र पृथिव्यादि परमाणु वशीकारात्तत् कार्य्यवशीकारस्तेन यानि यथावस्थापयति तानि तथावतिष्ठन्ते इत्यर्थः। अन्वयविषय संयमजयात् सिद्धिमाह ईशितृत्वं तेषां भूतभौतिकानां विजित मूलप्रकृतिः सन्‌यः प्रभव उत्पादो यश्चापायो विनाशो यश्चव्यूहो यथावदवस्थापनं तेषामिष्टे अर्थवत्त्वसंयमात् सिद्धिमाह। यत्र कामावसायित्वं सत्यसङ्कल्पता विजितगुणार्थवत्त्वो हि योगी यद्यदर्थतया सङ्कल्प-यति तत्तस्मै प्रयोजनायकल्पते। विषमप्यमृतकार्य्ये सङ्कल्प्य भोजयन् जीवयतीति। स्यादेतद् यथा शक्तिविपर्य्यासङ्करोत्येवं पदार्थविपर्य्यासमपि कस्मान्नकरोति तथा चन्द्रमसमादित्य कुर्य्यात् कुहुश्चसिनीवालीमित्यत आह न च शक्तोपीति। न खल्वेते यत्रकामावसायिनस्तत्र भवतः परमेश्वरस्याज्ञानमतिक्रमितु मुत्सहन्ते। यस्तु पदार्थानां जातिदेशकालावस्था भेदेना नियत स्वभावा इति युज्यतेतासु तदिच्छानुविधानमिति। एतान्यष्टावैश्वर्य्याणि तद्धर्म्मानभिघात इति। अणिमादि

वायुः प्रणामी वहत्यनावरणात्मकेऽप्याकाशे भवत्यावृतकायः सिद्धानामप्यदृश्योभवति ॥ ४४ ॥

**रूपलावण्य बलवज्रसंहननत्वानि कायसम्पत् ॥ ४५ ॥**

दर्शनीयः कान्तिमान् अतिशयबलः । वज्रसंहननश्चेति ॥ ४५ ॥

**ग्रहणस्वरूपाऽस्मितान्वयार्थवत्वसंयमादिन्द्रियजयः ॥ ४६ ॥**

सामान्यविशेषात्मा शब्दादिर्ग्राह्यः तेष्विन्द्रियाणां वृत्ति ग्रहणम् । न च तत् सामान्यमात्रग्रहणाकारं कथमनालोचितः सविषयविशेष इन्द्रियेन मनसानुव्यवसीयतेति ।

प्रादुर्भाव इत्यनेनैव तद्धर्मानभिघात सिद्धौ पुनरुपादानं काय सिद्धिवत् एतत् सूचीपवद्ध सकल विषय संयम फलवत्वज्ञापनाय । सुगममन्यत् ॥ ४४ ॥

काय सम्पद माह । रूप—सम्पत् । वज्रस्येव संहन मवयवव्यूहो दृढो निविडो यस्य स तथा ॥ ४५ ॥

जितभूतस्य योगिन इन्द्रियजयोपायमाह । ग्र—यः ग्रहणञ्च स्वरूपं चास्मितान्वयश्चार्थवत्वञ्च तेषु संयमस्तस्मादित्यर्थः । गृह्णीति ग्रहणं तच्च ग्राह्याधीन

स्वरूपं पुनः प्रकाशात्मनो बुद्धिसत्त्वस्य सामान्यविशेषयो रयुतसिद्धावयवभेदानुगतः समूहोद्रव्यमिन्द्रियं तेषां तृतीयं रूपं अस्मितालक्षणोहङ्कारः। तस्य सामान्यस्येन्द्रियाणि विशेषाः चतुर्थं रूपं व्यवसायात्मकाः प्रकाशक्रियास्थिति शीलागुणाः येषामिन्द्रियाणि साहङ्काराणि परिणामः पञ्चमं रूपं गुणेषु यदनुगतं पुरुषार्थवत्त्वमिति। पञ्चस्वे- तेष्विन्द्रियरूपेषु यथाक्रमं संयमः तत्र तत्र जयं कृत्वा पञ्च- रूपजयादिन्द्रियः जयप्रादुर्भवति योगिनः ॥ ४६ ॥




निरूपणमिति ग्राह्यं दर्शयति—सामान्यविशेषात्मेति। ग्राह्यमुक्त्वा ग्रहणमाह। तेष्विति। वृत्तिरालोचनं विषयाकारपरिणतिरिति यावत्। येत्वाहुः—सामान्यमात्र गोचरा इन्द्रियवृत्तिरिति तान् प्रत्याह। न चेति। गृह्यते इति ग्रहणं सामान्य- मात्र गोचरं ग्रहणं वाह्येन्द्रियतन्त्रं हि मनो वाह्यप्रवर्त्तके अन्यथा अन्ध- बधिराद्यभावप्रसङ्गात्। तदिह यदि न विशेष विषयमिन्द्रियं तेनालोचित विशेष इति कथं मनसानुव्यवसीयेत तस्मात् सामान्यविशेषविषयमिन्द्रिया- लोचनमिति तदेतद्ग्रहणमिन्द्रियाणां प्रथमं रूपं। द्वितीयं रूपमाह। स्वरूपं पुनरिति। अहङ्कारो हि सत्वभागेनात्मीयेन इन्द्रियाण्यजीजनत् अतो यत्तत् करणत्वं सामान्यं यच्चनियतरूपादिविषयत्वं विशेषस्तदुभयमपि प्रकाशात्मकमित्यर्थः। तेषां तृतीयं रूपमिति अहङ्कारो हि इन्द्रियाणां कारणमिति। यत्रेन्द्रियाणि तत्र तेन भवितव्यमिति। सर्व्वेन्द्रिय साधारण्यात् सामान्यमिन्द्रियाणामित्यर्थः। चतुर्थं रूपमिति गुणानां हि हे रूपं व्यवसायात्मकं व्यवसाय व्यवसेयात्मकत्वञ्च तत्र व्यव-

ततोमनोजवित्वं विकरणभावः प्रधानजयश्च ॥ ४७ ॥

कायस्यानुत्तमोगतिलाभोमनोजवित्वम् विदेहानामिन्द्रियाणामभिप्रेतकालदेशविषयापेक्षो वृत्तिलाभो विकरणभावः सर्वप्रकृतिविकारवशित्वं प्रधानजय इत्येतास्तिस्रः सिद्धयोमधुप्रतीका उच्यन्ते। एताश्च करणपञ्चकरूपजयादधिगम्यन्ते ॥ ४७ ॥





सेयात्मकतां ग्राह्यतामास्थाय पञ्चतन्मात्राणि भूतभौतिकानि निर्मीयते व्यवसायात्मकत्वं तु ग्रहणरूपमास्थाय साहङ्काराणीन्द्रियाणीत्यर्थः शेषं सुगमं ॥ ४६ ॥

पञ्चरूपेन्द्रियजयात् सिद्धिराह । त—श्च । विदेहानामिन्द्रियाणां करणभावो विकरणभावः । देशः काश्मीरादिः। कालोऽतीतादीर्विषयः सूक्ष्मादिः सान्वयेन्द्रियजयात् सर्व्वप्रकृतिविकार वशित्वं प्रधानजयः ताएता सिद्धयो मधुप्रतीका इत्युच्यन्ते योगशास्त्रनिष्णातैः। स्यादेतदिन्द्रिय जयादिन्द्रियाणि सविषयाणि वश्यानि भवन्तु प्रधानादीनां तत्कारणानां किमायातमित्यत आह ॥

एताश्चेति। करणानामिन्द्रियाणां पञ्चरूपाणि ग्रहणादीनि तेषां जयात् एतदुक्तं भवति नेन्द्रियमात्रजयस्यैताः सिद्धयोऽपि तु पञ्चरूपस्य तदन्तर्गतञ्च प्रधानादीनि ॥ ४७ ॥

सत्वपुरुषान्यताख्यातिमात्रस्य सर्व्वभावाधिष्ठातृत्वं सर्व्वज्ञातृत्वञ्च ॥ ४८ ॥

निर्द्धूतरजस्तमोमलस्य बुद्धिसत्वस्य परे वैशारद्येपरस्यां वशीकारसंज्ञायां वर्त्तमानस्य सत्वपुरुषान्यताख्यातिमात्ररूपप्रतिष्ठस्य सर्व्वभावाधिष्ठातृत्वं सर्व्वात्मानो गुणाव्यवसाय व्यवसेयात्मकाः स्वामिनं क्षेत्रज्ञप्रत्यशेषा दृश्यात्मत्वेनोपस्थित इत्यर्थः । सर्व्वज्ञातृत्वं सर्व्वात्मनां गुणानां शान्तोदिता व्यपदेश्यधर्म्मत्वेन व्यवस्थितानामक्रमोपारूढ़विवेकजं ज्ञानमित्यर्थः इत्येषा विशोका नाम सिद्धिः यांप्राप्य योगी सर्व्वज्ञः क्षीणक्लेशबन्धनोवशी विहरति ॥४८॥



यत्र ते ज्ञानक्रियारूप ऐश्वर्य्यहेतवः संयमाः साक्षात्पारपर्य्येण स सिद्धरूपसंहार संपादित श्रद्धाद्वारेण यदर्थास्तस्याः सत्वपुरुषान्यताख्यातेरवान्तरविभूतीं दर्शयति -- स—अनिर्द्धूतरजस्तमोमलतया वैशारद्यं ततः परावशीकारसंज्ञा रजस्तमोभ्यामुपप्लुतं हि चित्तसत्वमवश्यमासीत्तदुपशमेतु तदवश्यं योगिनोवशिनः तस्मिन् वश्ये योगिनः सत्वपुरुषान्यताख्यातिमात्ररूप प्रतिष्ठस्य सर्व्वाधिष्ठातृत्वं । एतदेव विवृणोति । सर्व्वात्मान इति व्यवसाय व्यवसेयात्मानोजड़प्रकाशरूपा इत्यर्थः तदनेन क्रियैश्वर्य्यमुक्तं । ज्ञानैश्वर्यमाह । सर्व्वज्ञातृत्वमिति । अस्या अपिद्विविधायाः सिद्धेर्वैराग्याय योगिजनप्रसिद्धां संज्ञामाह । एषा विशोकेति । क्लेशाश्च बन्धनानि च कर्म्माणि तानि क्षीणानि यस्य स तथा ॥ ४८ ॥

तद्वैराग्यादपि दोषबीजक्षये कैवल्यम् ॥ ४९ ॥

यदाऽस्यैवं भवति क्लेशकर्मक्षये सत्त्वस्यायं विवेकप्रत्ययो धर्म्मः सत्त्वञ्च हेयपक्षे न्यस्तं पुरुषश्चापरिणामी शुद्धोऽन्यः सत्त्वादित्येवमस्य ततोविरज्यमानस्य यानि क्लेशबीजानि दग्धशालिबीजकल्पान्यप्रसवसमर्थानि सह मनसा प्रत्यस्तं गच्छन्ति तेषु प्रलीनेषु पुरुषः पुनरिदन्तापत्रयं न भुंक्ते। तदेतेषां गुणानां मनसि कर्म्मक्लेशविपाकस्वरूपेणाभिव्यक्तानां चरितार्थानां प्रतिप्रसवे पुरुषस्यात्यन्तिको गुणवियोगः कैवल्यं तदा स्वरूपप्रतिष्ठा चितिशक्तिरेव पुरुष इति ॥ ४९ ॥

स्थान्युपनिमन्त्रणे सङ्गस्मयाकरणं पुनरनिष्ट-प्रसङ्गात् ॥ ५० ॥

चत्वारः खल्वमी योगिनः प्रथमकल्पिकोमधुभूमिकः प्रज्ञा ज्योतिरतिक्रान्तभावनीयश्चेति। तत्राभ्यासी प्रवृत्त-

संयमान्तराणां पुरुषार्थाभासफलत्वात् विवेकख्यातिसंयमस्य पुरुषार्थतां दर्शयितुं विवेकख्यातेः परवैराग्योपजननद्वारेण कैवल्यं फलमाह। त—स्यं यदास्य योगिनः क्लेशकर्मक्षये एवं ज्ञानं भवति विभूतिमित्याह—सत्त्वस्यायं विवेक प्रत्ययो धर्म्मः। शेषं तत्र तत्र व्याख्यातत्वात् सुगमं ॥ ४९ ॥

सम्प्रति कैवल्यसाधने प्रवृत्तस्य योगिनः प्रत्यूहसम्भवे तन्निराकरणमुप-

मात्रज्योतिः प्रथमः। ऋतम्भरप्रज्ञो द्वितीयः। भूतेन्द्रिय जयी तृतीयः। सर्व्वेषु भावितेषु भावनीयेषु कृतरक्षा- बन्धः कृतकर्त्तव्यः साधनादिमान् चतुर्थस्त्वतिक्रान्तभाव- नीयः तस्य चित्तप्रतिसर्ग एकोर्थः सप्तविधा अस्य प्रान्तभूमि प्रज्ञाः तत्र मधुमतीं भूमिं साक्षात् कुर्व्वतो ब्राह्मणस्य स्थानिनो देवासत्वशुद्धिमनुपश्यन्तः स्थानैरुपनिमन्त्रयन्ते— भो इहास्यतां, इह रम्यतां, कमनीयोयं भोगः, कमनीयेयं कन्यारसायनमिदं जरामृत्युं बाधते, वैहायसमिदं यान- ममीकल्पद्रुमाः पुण्या मन्दाकिनी सिद्धा महर्षय उत्तमा अनु- कूला अप्सरसो दिव्ये श्रोत्रचक्षुषी वज्रोपमः कायः स्वगुणैः सर्व्वमिदमुपार्जितमायुष्मताप्रतिपद्यता मिदमक्षय्यमजर- ममरस्थानं देवानां प्रियमित्येवमभिधीयमानः सङ्गदोषान्

दिशति। स्था—ङ्गात्। तानि स्थानानि येषा सन्ति ते स्थानिनो महेन्द्रादयः तैरुपनिमन्त्रणे तस्मिन् सङ्गश्च स्मयश्च न कर्त्तव्यः पुनरनिष्टप्रसङ्गात्। तत्र यद्देवास्थानैरुपमन्त्रयन्ते तं योगिनमेकं निर्द्धारयितुं यावन्तो योगिनः सम्भवन्ति तावत् एवाह। चत्वार इति। तत्र प्रथम कल्पितस्य स्वरूपमाह। तत्राभ्या- सीति। प्रवृत्तमात्रं न पुनर्वशीकृतं ज्योतिर्ज्ञानं परचित्तादिविषयं यस्य स तथा। द्वितीयमाह। ऋतम्भरा प्रज्ञ इति। यत्तेदमुक्तं—ऋतम्भरा तत्र प्रज्ञेति स हि भूते- न्द्रियाणि जिगीषुः। तृतीयमाह। भूतेन्द्रियजयीति। तेन हि स्थूलादिसंयमेन ग्रह- णादि संयमेन च भूतेन्द्रियाणि। जितानि तमेवाह। सर्व्वेषु भावितेषु निष्पादितेषु भूतेन्द्रियजयात् परचित्तादि ज्ञानादिषु कृतरक्षाबन्धः यतस्तेभ्यो न च्यवते भाव-

भावयेत् घोरेषु संसाराङ्गेषु पच्यमानेन मया जननमरणा-न्धकारे विपरिवर्त्तमानेन कथञ्चिदासादितः क्लेशतिमिरवि-नाशी योगप्रदीपस्तस्य चैते तृष्णायोनयोविषयवायवः प्रति पक्षाः स खल्वहं लब्धालोकः कथमनया विषयमृगतृष्णाया वञ्चितःतस्यैव पुनः प्रदीप्तस्य संसाराग्नेरात्मानमिन्धनीकुर्य्या मिति स्वस्ति वः स्वप्नोपमेभ्यः कृपणजनप्रार्थनीयेभ्योविषयेभ्य-इत्येवं निश्चितमिति समाधिं भावयेत् सङ्गमकृत्वास्मय-मपि न कुर्य्यात् एवमहं देवानामपि प्रार्थनीय इति स्मया द्यं सुस्थितंमन्यतया मृत्युना केशेषु गृहीतमिवात्मानं न भावयिष्यति। तथाचास्य छिद्रान्तरप्रेक्षी नित्यं यत्नोपचर्य्यः प्रमादोलब्धविवरः क्लेशानुत्तं भविष्यति। ततः पुनरनिष्ट



नीयेषु निष्पादनीयेषु विशोकादिषु परवैराग्य पर्य्यन्तेषु कर्त्तव्य साधनवान् पुरुष प्रयत्नस्य साधनविषयस्यैव साध्यनिष्पादकत्वात्। चतुर्थमाह। चतुर्थ इति। तस्य हि भगवती जीवन्मुक्तस्य चरमदेहस्य चित्तप्रतिसर्गैकार्थः तदेतेषु योगिषु उपनिम-न्त्रणविषयं योगिनमवधारयति। तत्र मधुमतीमिति। प्रथमकल्पिके यावत् महेन्द्रादीनां तत्प्राप्तिशङ्कैव नास्ति तृतीयोपि तेनोपनिमन्त्रणीयः भूतेन्द्रियवशि-त्वेनैव तत्प्राप्तेः। चतुर्थेपि परवैराग्यसंपत्तेरासङ्गशङ्का दूरोत्सारितेवेति पारि-शेष्यात् द्वितीयएव ऋतम्भरप्रज्ञस्तदुपनिमन्त्रणविषय इति वैहायसं आकाशगामी अक्षयमविनाशीअजरं सदाभिनवम् भयकरणे दोषमाह। स्मयादयमिति। स्मयात् सुस्थितं मन्योलालित्यता भावयिष्यति न तस्यां प्राप्तोपास्तीत्यर्थः। सुगम-

प्रसङ्गः । एवमस्य सङ्क्षयावकुर्वतोभावितोर्थोदृढो भवि-ष्यति भावनीयस्यार्थोभिमुखो भविष्यतीति ॥ ५० ॥

## क्षणतत्क्रमयोः संयमाद्विवेकजं ज्ञानम् ॥५१॥

यथापकर्षपर्य्यन्तद्रव्यं परमाणुरेवं परमापकर्षपर्य्यन्तः कालः क्षणः । यावता वा समयेन चलितः परमाणुः पूर्व्वदेशं जह्यादुत्तरदेशमुपसम्पद्येत स कालः क्षणः तत् प्रवाहाविच्छेदस्तु क्रमः क्षण तत् क्रमयोर्नास्ति वस्तुसमाहार इति समाहारोमुहूर्त्ताहोरात्रादयः स । खल्वयं कालोवस्तु



मन्वत् उक्ता क्वचित् क्वचित् संयमात् सर्व्वज्ञता सा च न निःशेषता अपि तु प्रकारमात्रविवक्षया यथा सर्व्वं व्यञ्जनैर्भुक्तमिति अत्र हि यावन्तो व्यञ्जन प्रकारास्तैर्भुक्तमिति गम्यते न तु निःशेषैरिति अस्ति च निःशेषवचनः सर्व्वशब्दः यथोपनीतमन्नं सर्व्वमशितं प्राशकेनेति । ५० ।

तच हि निःशेषमिति गम्यते तदिह निःशेषज्ञता लक्षणस्य विवेकजज्ञानस्य साधनं संयमनाह । क्ष – नं । क्षणपदार्थं निदर्शनपूर्व्वकमाह । यथेति । लोष्टस्य हि प्रविभाज्यमानस्य यस्मिन्नवयवेऽल्पतारतम्यं व्यवतिष्ठते सोपकर्षपर्य्यन्तः परमाणुर्यथा तथापकर्ष पर्य्यन्तः कालः क्षणः पूर्व्वापरभागविकलकालकलेति यावत् । तमेव क्षणं प्रकारान्तरेण दर्शयति – यावतावेति । परमाणुमात्रं देशमतिक्रमेदित्यर्थः । क्रमपदार्थः क्रमपदार्थमाह । तस्य वाहेति । तत्पदेन क्षणाः परामृस्यते न चेदृशः क्रमोवास्तवः किन्तु कालनिकसस्य समाहाररूपस्यायुगपद्भ-

शून्यो बुद्धिनिर्म्माणः शब्दज्ञानानुपाती लौकिकानां व्युत्थितदर्शनानां वस्तुस्वरूपइवावभासते। क्षणस्तु वस्तुपतितः क्रमावलम्बी क्रमश्च क्षणानन्तर्य्यात्मा तं कालविद् काल इत्याचक्षते योगिनः नच द्वौक्षणौ सहभवतः क्रमश्च न द्वयोः सहभुवोरसंभवात् पूर्व्वस्मादुत्तरस्य भाविनोयदानन्तर्य्यं क्षणस्य स क्रमस्तस्माद्वर्त्तमान एकैकः क्षणोन पूर्व्वोत्तरक्षणाः सन्तीति तस्मान्नास्ति तत्समाहारः येतु भूतभाविनः क्षणास्ते परिणामान्विता व्याख्येयास्तेनैकेन क्षणेन कृत्स्नोलोकः परिणाममनुभवति तत्क्षणोपारूढ़ाः खल्वमी धर्म्मास्तयोः क्षणतत्क्रमयोः संयमात्तयोः साक्षात्करणं ततश्च विवेकजं ज्ञानं प्रादुर्भवति। तस्य विषयविशेष उपक्षिप्यते ॥ ५१ ॥

स्थितेषु वास्तवत्वेन विचारासहत्वादित्याह। क्षणतत्क्रमयोरिति। अयुगपद्भावि-क्षणधर्म्मत्वात् क्रमस्य क्षणसमाहारस्यावास्तवत्वात् क्षणतत्क्रमयोरप्यवास्तवत्वं समाहारस्य नैसर्गिक वैतण्डिक बुद्ध्यातिशयरहिता लौकिकाः प्रतिक्षणएव व्युत्थितदर्शना भ्रान्तायेकालमीदृशं वास्तवमभिमन्यन्त इति। तत् किं क्षणोप्य-वास्तवो नेत्याह। क्षणस्तु वस्तुपतितो वास्तव इत्यर्थः। क्रमस्यावलम्बनं अवलम्बः सोऽस्यास्तीति क्रमेणावलम्ब्यते वैकल्पिकेनेत्यर्थः क्रमस्य क्षणावलम्बनत्वे हेतुमाह। क्रमश्चेति। क्रमस्या वास्तवत्वे हेतुमाह। न चेति। चोहेत्वर्थे यस्तु वैजात्यात् सहभावमुपेयात्तं प्रत्याह। क्रमश्च न द्वयोरिति। कस्मादसम्भव इत्यत इत्यत आह। पूर्व्वस्मादिति। उपसंहरति तस्मादिति। तत् किमिदानीं शश-

**जातिलक्षणदेशैरन्यतानवच्छेदात्तुल्ययोस्ततः प्रतिपत्तिः॥ ५२॥**

तुल्ययोर्देशलक्षणसारूप्ये जातिभेदोऽन्यतायां हेतुः गौरियं वडवेयमिति। तुल्यदेशजातीयत्वे लक्षणमन्यत्वकरं कालाक्षी गौः। स्वस्तिमती गौरिति। द्वयोरामलकयो-र्जातिलक्षणसारूप्याद्देशभेदोऽन्यत्वकर इदं पूर्व्वमिदमुत्तर-मिति। यदा तु पूर्व्वमामलकमन्यव्यग्रस्य ज्ञातुरुत्तरदेशे उपा-

विपरिणायमाणा एव पूर्व्वोत्तरक्षणाः नेत्याह। येष्विति अन्विताः सामान्य नसम-न्वागता इत्यर्थः। उपसंहरति तेनेति वर्त्तमानस्यैवार्थक्रियासु खोचितासु सामर्थ्या-

दिति॥ ५१॥

यद्यप्येतद्विवेकजं ज्ञानं निःशेष भावविषयमित्यग्रे वच्यते तथाप्यति सूक्ष्मत्वात् प्रथमं तस्य विषयविशेष उपचिप्यति जा—त्ति। लौकिकानां जातिभेदो-ऽन्यतायाः ज्ञापकहेतुः तुल्या जातिः गोत्वं तुल्यश्च देशः पूर्व्वत्वादिः कालाक्षी स्वस्ति-मत्त्वोर्लक्षणभेदः परमितिद्वयो रामलकयोस्तुल्या आमलकत्व जातिर्वर्त्तनादि लक्षणं तुल्यं देशभेदः परमिति यदा तु योगि ज्ञानं जिज्ञासुना केनचित्पूर्व्वाम-लकमन्य व्यग्रस्य योगिन ज्ञातुरुत्तरदेशे उपावर्त्यते। उत्तरदेशमामलकं ततो-पसार्थ्यपिधाय वा तद्वा तुल्यदेशत्वे पूर्व्वमेतदुत्तरमेतदिति प्रविभागानुपपत्ति प्राज्ञस्य लौकिकस्य चिप्रमाणी निपुणस्य असन्दिग्धे न च तत्वज्ञानेन भवितव्यं विवे-कज ज्ञानवतो योगिनः सन्दिग्धत्वानुपपत्तेः। अत उक्तं सूत्रकृता ततः प्रतिपत्तिः तत इति व्याचष्ट विवेकज ज्ञानादिति। क्षण तत्क्रम संयमजमात्रं ज्ञानं कथमाम-

वर्त्तते तदा तुल्यदेशत्वे पूर्व्वमेतदुत्तरमेतदिति प्रविभागानुपपत्तिः असंदिग्धेन च तत्वज्ञानेन भवितव्यमित्यत इदमुक्तं ततः प्रतिपत्तिः विवेकजज्ञानादिति। कथं पूर्व्वामलकसहक्षणदेश उत्तरामलकसहक्षणाद्देशाद्भिन्नस्ते चामलके स्वदेशक्षणानुभवभिन्ने अन्यदेशक्षणानुभवस्तु तयोरन्यत्वे हेतुरिति॥

एतेन दृष्टान्तेन परमाणोस्तुल्यजातिलक्षणदेशस्य पूर्व्वपरमाणुदेशसहक्षणसाक्षात् करणात् उत्तरस्य पर-



लर्कं तुल्यजाति लक्षण देशादामलकान्तराद्विवेचयतीति पृच्छति। कथमिति उत्तरमाह। पूर्व्वामलक सह क्षणोदेशः पूर्व्वामलककेनैक क्षणोदेशः तेन सह निरन्तरः परिणाम इति यावत् उत्तरामलक सह क्षणाद्देशादुत्तरामलक निरन्तर परिणामाभिन्नः भवतु देशयोर्भेदः किमायात मामलकभेदस्येत्यत आह तें चामके स्वदेश क्षणानुभव भिन्ने स्वदेशसहितो यः क्षणस्तस्यामलकस्य कालकला स्वदेशेन सहोत्तरा धर्म्यरूप परिणाम लक्षिता सा स्वदेश क्षणस्तस्यानुभवः प्राप्तिः ज्ञानं वा तेन भिन्ने आमलके ययो रामलकयोः पूर्व्वोत्तराभ्यां देशाभ्यामौत्तराधर्य्य परिणामलक्षण आसीत्तयोर्द्देशान्तरोत्तराधर्य्य परिणामलक्षण विशिष्टत्वमनुभवः संयमीते भिन्नएव प्रत्येति सम्प्रति तद्देश परिणामेपि पूर्व्वं भिन्नदेशपरिणामाद्विशिष्टस्य चैतद्देश परिणाम क्षणस्य संयमतः साक्षात् करणातदिदमुक्तमन्य देश क्षणानुभवस्तु तयोरन्यत्वे हेतुरिति। अनेनेव निदर्शनेन लौकिक परीक्षक सम्वादादीनां परमाणोरपीदृशस्य भेदो योगीश्वर बुद्धिगम्यः शङ्केय इत्याह। एतेनेति

माणोस्तद्देशानुपपत्तौ उत्तरस्य तद्देशानुभवोभिन्नः सह-लक्षणभेदात्त योरीश्वरस्य योगिनः अन्यत्वप्रत्ययो भवति इति । अपरेतु वर्णयन्ति—येऽन्त्याविशेषास्तेऽन्यताप्रत्ययं कुर्व्वन्तीति तत्रापि देशलक्षणभेदो मूर्त्तिव्यवधिजातिभेद-श्चान्यत्वहेतुः क्षणभेदस्तु योगिबुद्धिगम्य एवेति अतउक्तं-मूर्त्तिव्यवधिजातिभेदाभावान्नास्ति मूलपृथक्त्वमिति वार्ष-गण्यः ॥ ५२ ॥

अपरेतु वर्णयन्ति वर्णनमुदाहरति य इति वैशेषिका हि नित्यद्रव्यवृत्तयोन्त्या विशेषा इत्याहुः तथा हि योगिनोमुक्ता न तुल्यजाति देशकालान् व्यवधिरहितान् परस्परतो भेदेन प्रत्येकं तत्वेन च प्रतिपद्यन्ते तस्मादस्ति कश्चिदन्त्यो विशेष इति तथाच सएव नित्यानां परमाण्वादीनां द्रव्याणां भेदक इति तदेतद्दूषयति तत्रा-पीति जातिदेश लक्षणान्युदाहृतानि मूर्त्तिः संस्थानं यथैकं विशुद्धावयव संस्थानोपपन्नमपसार्य्य तस्मिन्नेव देशेऽन्यस्मिन्व्यग्रस्य द्रष्टुः कुत्सितावयव सन्निवेश उपा-वर्त्त्यते तदा तस्य संस्थानभेदेन भेदप्रत्ययः शरीरं वा मूर्त्तिं तत्सम्बन्धेनात्मनां संसारिणां मुक्तात्मनां वा भूतचरेण यादृश ताद्दृशेन भेद इति सर्व्वत्र भेद प्रत्ययस्या-न्यथा सिद्धिर्नान्त्य विशेष कल्पना व्यवधिर्भेदकारणं यथा कुशपुष्करद्वीपयोर्देश स्वरूपयोरिति यतो जातिदेशादिभेदा लोकबुद्धिगम्या अत उक्तं क्षणभेदस्तु योगि बुद्धिगम्य एवेति एवकारक्षणभेदमवधारयति । न योगि बुद्धिगम्यत्वं तेन भूतचरेण देहसम्बन्धेन मुक्तात्मनामपि भेदो योगिबुद्धिगम्य उन्नेय इति यस्य तुक्ताभेद हेतवो न सन्ति तस्य प्रधानस्य भेदो नास्तीत्याचार्य्येर्मेने यस्मात्पूर्व्वे कृतार्थं प्रतिनष्टमप्य-नष्टं तदन्य साधारणत्वादिति तदाह । मूर्त्तिव्यवधीति उक्त भेदहेतूपलक्षणमेतत् जगन्मूलस्य प्रधानस्य पृथक्त्वं भेदो नास्तीत्यर्थः ॥ ५२ ॥

तारकं सर्व्वविषयं सर्व्वथाविषयमक्रमं चेति विवेकजं ज्ञानं ॥ ५३ ॥

तारकमिति। स्वप्रतिभोत्थमनौपदेशिकमित्यर्थः। सर्व्वविषयं नास्य किञ्चिदविषयीभूतमित्यर्थः। सर्व्वथा विषयमतीतानागतप्रत्युत्पन्नं सर्व्वं पर्य्यायैः सर्व्वथा जनातीत्यर्थः। अक्रममित्येकक्षणोपारूढ़ं सर्व्वं सर्व्वथा गृह्णातीत्यर्थः। एतद्विवेकजं ज्ञानं परिपूर्णमस्यैवांशो योगप्रदीपो मधुमतीं भूमिमुपादाय यावदस्य परिसमाप्तिरिति प्राप्तविवेकजज्ञानस्याप्राप्तविवेकजज्ञानस्य वा ॥ ५३ ॥



तदेकं विषयैकदेशं विवेकज ज्ञानस्य दर्शयित्वा विवेकजं ज्ञानं लक्षयति। तात्वं विवेकजं ज्ञानमिति लक्ष्य निर्द्देशः शेषं लक्षणं संसारसागरात्तारयतीति तारकं पूर्व्वस्मात् प्रातिभाद्विशेषयति सर्व्वथा विषयमिति पर्य्याया: अतएव विवेकजं ज्ञानं परिपूर्णं नास्य क्वचित् किञ्चित् कथञ्चित् कदाचित् अगोचर इत्यर्थः। आस्तां तावत् ज्ञानान्तरं सम्प्रज्ञातोपि तावदस्यां सः तस्मादतः परं किं परिपूर्णमित्याह अस्यैवांशो योगप्रदीपः संप्रज्ञाता: किमुपक्रमः किमवसानश्चासावित्याह। मधुमतीमिति। ऋतम्भरा प्रज्ञैव मधुमोदकारणत्वात् यथोक्तं प्रज्ञाप्रसादमारुह्येति तद्वती मधुमती तामुपादाय यावदस्य परिसमाप्ति सप्तधा प्रान्तभूमिः प्रज्ञा अतएव विवेकजं ज्ञानं तारकं भवति तदंशस्य योगप्रदीपस्य तारकत्वादिति ॥ ५३ ॥

**सत्वपुरुषयोः शुद्धिसाम्ये कैवल्यमिति ॥५५॥**

यदा निर्धूतरजस्तमोमलं बुद्धिसत्वं पुरुषस्यान्यता प्रत्ययमात्राधिकारं दग्धक्लेशवीजं भवति तदा पुरुषस्य शुद्धिसारूप्यमिवापन्नं भवति तदा पुरुषस्योपचरितभोगाभावः शुद्धिः एतस्यामवस्थायां कैवल्यं भवति । ईश्वरस्यानीश्वरस्य वा विवेकजज्ञानभागिन इतरस्य वा नहि दग्धक्लेशवीजस्य ज्ञाने पुनरपेक्षा काचिदस्ति । सत्वशुद्धिद्वारेण एतत्समाधिजमैश्वर्य्यञ्च ज्ञानं चोपक्रान्तपरमार्थतस्तु ज्ञानाददर्शनं निवर्त्तते तस्मिन्निवृत्ते न सन्त्युत्तरे क्लेशाः क्लेशाभावात् कर्म्मविपाकाभावश्चरिताधिकाराश्चैतस्यामवस्थायां

तदेवं परम्परया कैवल्यस्य हेतुन् सविभूतीन् संयमानुक्ता सत्व पुरुषान्य ता ज्ञानं साक्षात् कैवल्यसाधनमित्यत्र सूत्रमवतारयति प्राप्ते ति विवेकजं ज्ञानं भवतुमा वाभूत् सत्व पुरुषान्यता ख्यातिस्तु कैवल्यप्रयोजिकेत्यर्थः । स—ल्यमिति । इतिः सूत्र समाप्तौ ईश्वरस्य पूर्व्वोक्तैः संयमैः ज्ञानक्रिया शक्तिमतोऽनीश्वरस्य वा समनन्तरोक्तेन संयमेन विवेकज ज्ञानभागिन इतरस्य वानुत्पन्न ज्ञानस्य न विभुतिषु काचिदपेक्षास्तीत्याह । न हीति ननु यद्यनपेक्षिता विभूतयः कैवल्ये व्यर्थः तर्हि तासामुपदेश इत्यत आह सत्व शुद्धिद्वारेणेति इत्यम्भूत लक्षणे तृतीयानात्यन्तमहेतवः कैवल्ये विभूतयः किन्तु न साक्षादित्यर्थः ज्ञानं विवेकजमुपक्रान्तं

गुणानपुरुषस्य पुनर्दृश्यत्वेन उपतिष्ठन्ति तत् पुरुषस्य कैवल्यं तदा पुरुषः स्वरूपमात्रज्योतिरमलः केवली भवति ॥ ५४ ॥

इति पातञ्जलभाष्य प्रवचने विभूतिपादस्तृतीयः समाप्तः।

---

यत्र पारम्पर्य्येण कारणं तदौपचारिकं न मुख्यं परमार्थतस्तु ख्यातिरेव मुख्यमित्यर्थः ज्ञानादिति प्रसङ्ख्यानादित्यर्थः ॥ ५४ ॥

अत्रान्तरङ्गान्यङ्गानि परिणामाः प्रपञ्चिताः।

संयमाद्भूतिसंयोगस्तासु ज्ञानं विवेकजं ॥ ३ ॥

इति श्रीवाचस्पति मिश्र विरचितायां पातञ्जलभाष्य व्याख्यायां तत्त्ववैशारद्यां विभूतिपादस्तृतीयः समाप्तः॥



---

# कैवल्यपादः ।

**जन्मौषधिमन्त्रतपःसमाधिजाः सिद्धयः ॥१॥**

देहान्तरिता जन्मना सिद्धिः औषधिभिरसुरभवनेषु रसायनेनेत्येवमादि । मन्त्रैराकाशगमनाणिमादिलाभः तपसा संकल्पसिद्धिः कामरूपी यत्र तत्र कामग इत्येवमादिसमाधिजाः सिद्धयो व्याख्याताः ॥ १ ॥




तदेवं प्रथम द्वितीय तृती पादैः समाधितत्साधन तद्विभूतयः प्राधान्येन व्युत्पादिताः इतरत्तु प्रासङ्गिक मौपोद्घातिकञ्चोक्तं इदानीं तद्धेतुकं कैवल्यं व्युत्पादनीयं न चैतत् कैवल्यभागीयं चित्तं परलोकञ्च परलोकिनं विज्ञानातिरिक्तं चित्तकरणक सुखाद्यात्मक शब्दाद्युपभोक्तारमात्मानञ्च प्रसङ्ख्यान परमकाष्ठाञ्च विना व्युत्पाद्य शक्यं वक्तुमिति तदेतत् सर्व्वमत्र पादे व्युत्पादनीयं इतरच्च प्रसङ्गादुपोद्घाताद्वा । तत्र प्रथमं सिद्धचित्तेषु कैवल्यभागीयं चित्तं निर्द्धारयितुकामः पञ्चतयीं सिद्धिमाह । जन्म । औषधि । मन्त्र । तपः । समाधिजाः सिद्धयः । व्याचष्टे देहान्तरितेति । स्वर्गोपभोगभागीयावत् कर्म्मणो मनुष्यजातीयाचरितात् कुतश्चिन्निमित्तात् लब्धपरिपाकात् क्वचिद्देवनिकाये जातमात्रस्यैव दिव्यदेहान्तरिता सिद्धिरणिमाद्या भवतीति । औषधि सिद्धिमाह असुरभवनेष्विति । मनुष्यो हि कुतश्चिन्निमित्तादसुरभवनमुपसम्प्राप्तः कमनीयाभिरसुरकन्याभी रुपनीतं रसायनमुपयुज्या जरामरणत्वमन्यञ्च सिद्धीरासादयति । इहैव वा रसायनोपयोगेन

तत्र कायेन्द्रियाणामन्यजातीयपरिणतानाम् ॥

जात्यन्तरपरिणामः प्रकृत्यापूरात् ॥ २ ॥

पूर्व्वपरिणामापाये उत्तरपरिणामोपजनस्तेषां पूर्व्वाः

यथामाण्डव्ये मुनीरसोपयोगादि वन्ध्यावासीति । मन्त्रसिद्धिमाह । मन्त्रैरिति । तपः सिद्धिमाह तपसेति । सङ्कल्पसिद्धिमाह । कामरूपीति । यदैव कामयतेऽणिमादि तदेकपदेस्य भवतीति यत्र कामयते श्रोतुं वा मन्तुं वा तत्र तदेव शृणोति मनुते चेति आदिशब्दाद्दर्शनादयः संगृहीता इति । समाधिजाः सिद्धयो व्याख्याता अधस्तनेपादे अथ चतसृषु सिद्धिष्वौषधादि साधनासु तेषामेव कायेन्द्रियाणां जात्यन्तरे परिणतिरिष्यते सा पुनर्न तावदुपादानमात्रात् न हि तावन्मात्रमुपादानं न्यूनाधिक दिव्यादिव्यभावेस्य भवति नो खल्वविलक्षणं कारणं कार्य्यवैलक्षण्यायालं मास्याकस्मिकत्वं भूदित्याशङ्का पूरयित्वा सूत्रं पठति ॥ १ ॥

तत्र कायेन्द्रियाणामन्यजातीय परिणतानां जात्यन्तरपरिणामः प्रकृत्यापूरात् । मनुष्यजाति परिणतानां कायेन्द्रियाणां यो देव तिर्य्यग्जातिपरिणामः स खलु प्रकृत्यापूरात् कायस्य हि प्रकृतिः पृथिव्यादीनि भूतानि इन्द्रियाणाञ्च प्रकृतिरस्मिता तदवय वानुप्रवेश आपूरः तस्माद्भवति । तदिदमाह पूर्व्वपरिणामेति । ननु यद्यापूरेणानुग्रहः कस्मात् पुनरसौ न सदातन इत्यत आह । धर्म्मादीति तदनेन तस्यैव शरीरस्य बाल्य कौमारयौवन वार्द्धकादीनि च न्यग्रोधतरु भावश्च वह्निकणिकाया तृणराशि निवेशिताया वाप्रौढवज्वालासहस्र समालिङ्गित गगनमण्डलत्वञ्च व्याख्यातं प्रकृत्यापूरादित्युक्तं तत्रेदं सन्दिह्यते किमापूरः प्रकृ-

वयवानुप्रवेशाद्द् भवति कायेन्द्रियप्रकृतयश्च स्वं विकार मनुगृह्णन्ति आपूरेण धर्म्मादि निमित्तमपेक्षमाणा इति ॥२॥

**निमित्तमप्रयोजकं प्रकृतीनां वरणभेदस्तु ततः क्षेत्रिकवत् ॥ ३ ॥**

नहि धर्म्मादिनिमित्तं प्रयोजकं प्रकृतीनां भवति न कार्य्येन कारणं प्रवर्त्त्यत इति । तर्हिवरणभेदस्तु ततः क्षेत्रिकवत् यथा क्षेत्रिकः केदारादपां पूर्णात् केदारान्तं पिप्लावयिषुः समं निम्नं निम्नतलं वालापः पाणिनापकर्षत्या वरणं त्वासां भिनत्ति तस्मिन् भिन्ने स्वयमेव आपः केदारा-न्तरमाप्लावयन्ति तथा धर्म्मः प्रकृतीनामावरणमधर्म्मं भिनत्ति तस्मिन् भिन्ने स्वयमेव प्रकृतयः स्वं स्वं विकार-माप्लावयन्ति । यथा वा स एव क्षेत्रिकस्तस्मिन्नेव केदारेण

तीनां स्वाभाविकी धर्म्मादिनिमित्ती वेति किम्प्राप्तं सतीष्वपि प्रकृतिषु कदाचिदा-पूराद्धर्म्मादि निमित्त श्रवणाच्च तन्निमित्त एवेतिप्राप्तं । एवं प्राप्ते आह निमित्त क्षेत्रिकवत् । सत्यं धर्म्मादयो निमित्तं न तु प्रयोजकाः तेषामपि प्रकृति कार्य्य-त्वात् न च कार्य्यं कारणं प्रयोजयति तस्य तदधीनोत्पत्तितया कारण तन्त्रत्वात् स्वतन्त्रस्य च प्रयोजकत्वात् न खलु कुलालानन्तरेण मृद्दण्डचक्र सलिलादयः उत्पि-त्सितेनोत्पन्नेन वा घटेन प्रयुज्यन्ते किन्तु स्वतन्त्रेण कुलालेन न च पुरुषार्थोऽपि प्रवर्त्तकः किन्तु तदुद्देशेनेश्वर उद्देश्यतामात्रेण पुरुषार्थः प्रवर्त्तक इत्युच्यते

प्रभवत्यौदकान् भौमान् वा रसान् धान्यमूलान्यनु प्रवेशयितुं किन्तर्हि मुद्गवेधुकश्यामाकादींस्ततोपकर्षत्यपकृष्टेषु तेषु स्वयमेव रसा धान्यमूलान्यनुप्रविशन्ति । तथा धर्म्मोनिवृत्तिमात्रे कारणमधर्म्मस्य शुद्ध्यशुद्ध्योरत्यन्तविरोधात् न तु प्रकृतिप्रवृत्तौ धर्म्मोहेतुर्भवतीति-अत्र नन्दीश्वरादय उदाहार्य्याः विपर्य्ययेनाप्यधर्म्मोधर्म्मं बाधते ततश्चाशुद्धिपरिणाम इति तत्रापि नहुषाजगरादयं उदाहार्य्याः । यदातु योगी बहून् कायान्निर्म्मिमीते तदा किमेकमनस्कास्ते भवन्त्यथानेकमनस्का—इति ॥ ३ ॥

## निर्म्माणचित्तान्यस्मितामात्रात् ॥ ४ ॥



अस्मितामात्रं चित्तकारणमुपादाय निर्म्माणचित्तानि करोति ततः सचित्तानि भवन्ति ॥ ४ ॥

उत्पित्सोरस्य पुरुषार्थस्याव्यक्तस्य स्थितिकारणत्वं युक्तं न चेतावता धर्म्मादीनाम निमित्तता प्रतिबन्धापनयनमात्रे ण चैत्रिकवदुपपत्ते रीश्वरस्यापि धर्म्माधिष्ठानार्थं प्रतिबन्धापनय एव व्यापारो वेदितव्य' तदेतन्निगद व्याख्यानेन भाष्य णोक्तं प्रकृत्यापूरेण सिद्धेः समर्थ सिद्धि विनिर्म्मित नानाकायवर्त्ति चित्तैकत्व नानात्वे विचारयति यदात्विति ॥ ३ ॥

तत्र नानामनस्के कायानां प्रतिचित्तमभिप्राय भेदादेकाभिप्रायानुरोधश्च परस्पर प्रतिसन्धानञ्च न स्यातां पु चान्तरवत् तस्मादेकमेव चित्तं प्रदीप-

प्रवृत्तिभेदे प्रयोजकं चित्तमेकमनेकेषां ॥५॥

बहूनां चित्तानां कथमेकचित्ताभिप्रायपुरःसरा प्रवृत्तिरिति सर्व्वचित्तानां प्रयोजकं चित्तमेकं निर्म्मिमीते ततः प्रवृत्तिभेदः ॥ ५ ॥

तत्र ध्यानजमनाशयः ॥ ६ ॥

बहिसारितया बहूनपि निर्म्माणकायान् व्याप्नोतीति प्राप्तमाह। निर्म्माणचित्ताऽस्मितामात्रात्। यद् यावज्जीवच्छरीरं तत्सर्व्वमेकैकासाधारण चित्तान्वितं दृष्टं तद्यथा चैत्रमैत्रादिशरीरं तथाच निर्म्माणकाया इति। सिद्धं तेषामपि प्रातिस्विकं मन इत्यभिप्रायेणाह अस्मितामात्रमिति ॥ ४ ॥

यदुक्तं अनेकचित्तत्वे एकाभिप्रायानुरोधश्च प्रतिसन्धानञ्च न स्यातामिति तत्रोत्तरं सूत्रं प्रवृत्तिभेदे प्रयोजकं चित्तमेकमनेकेषां। अभविष्य देव दोषः यदि चित्तमेकं नानाकायवर्त्ति मनो नायकं ननिरमास्यत्तन्निर्म्माणत्व दोषः न चैकं गृहीत्वाकृतं प्रातिस्विकैर्मनोभिः कृतं वा नायक निर्म्माणेन निजस्यैव मनसो नायकत्वादिति वाच्यं प्रमाणसिद्धस्य नियोग पर्य्यनुयोगानुपपत्तेरिति अत्र पुराणं भवति। एकस्तु प्रभुशक्त्यावै बहुधा भवतीश्वरः। भूत्वा यस्मात्तु बहुधा भवत्येकः पुनस्तु सः। तस्माच्च मनसोभेदाज्जायन्ते चेतएवहि। एकधा सद्विधाचैव त्रिधा च बहुधा पुनः। योगीश्वरः शरीराणि करोति विकरोति च। प्राप्नुयाद्विषयान् कैश्चित्कैश्चिदुग्रतपश्चरेत्। संहरेच्च पुनस्तानि सूर्य्यो रश्मिगणानि वेति तदेतेनाभिप्रायेणाह। बहूनां चित्तानामिति तदेवमुदितेषु पञ्चसु सिद्धचित्तेषु ॥५॥

पञ्चविधं निर्म्माणचित्तं जन्मौषधिमन्त्रतपःसमाधिजाः सिद्धय इति तत्र यदेव ध्यानजं चित्तं तदेवानाशयं तस्यैव नास्त्याशयो रागादिप्रवृत्तिर्नातः पुण्यपापाभिसम्बन्धः क्षीणक्लेशत्वात् योगिन इति ॥ ६ ॥

इतरेषान्तु विद्यते कर्म्माशयो यतः—

**कर्म्माशुक्लाकृष्णं योगिनस्त्रिविधमितरेषाम् ॥ ७ ॥**

चतुष्पात् खल्वियं कर्म्मजातिः। कृष्णा। शुक्लकृष्णा। शुक्ला। अशुक्लाऽकृष्णाचेति। तत्र कृष्णा दुरात्मनां। शुक्ला-

अपवर्गभागीयं चित्तं निर्द्धारयति। तत्र ध्यानजमनाशयं। आशेरत इत्याशयाः कर्म्मवासनाः क्लेशवासनाश्च तत्र ते न विद्यन्ते यस्मिन् तदनाशयं चित्तं अपवर्गभागीयं भवतीत्यर्थः। यतो रागादि निबन्धना प्रवृत्तिर्नास्ति अतो नास्ति पुण्यपापाभिसम्बन्धः। कस्मात्पुनरागादिजनिता प्रवृत्तिर्नास्तीत्याह। क्षीणक्लेशत्वादिति ध्यानजस्यानाशयस्य मनोन्तरेभ्यो विशेषं दर्शयितुमितरेषामाशयवत्तामाह इतरेषां त्विति ॥ ६ ॥

तच्चैवच हेतुपरं सूत्रमवतारयति यत इति। कर्म्माशुक्लाकृष्णमितरेषामाशयवत्तामाह इतरेषां पदं स्थानं चतुर्षु समवेता चतुष्पदीयं यावद् बहिःसाधन साध्यं तत्र सर्व्वंचास्ति कस्यचित्पीड़ा। न हि व्रीह्यादिसाधनेपि कर्म्मणि परपीड़ा नास्ति अवघातादिसमयेपिपी लिकादिवधसम्भवात् अन्ततोबीजादिवधेन स्तम्बादि-

कृष्णा बहिःसाधनसाध्या, तत्र परपीड़ानुग्रहद्वारेणकर्म्मा-शयप्रचयः। शुक्ला तपःस्वाध्यायध्यानवतां सा हि केवले मनसि आयत्तत्वाद्बहिःसाधनाधीनानपरान् पीड़यित्वा भवति। अशुक्ला अकृष्णा संन्यासिनां क्षीणक्लेशानां चरमदेहानामिति। तत्राशुक्लं योगिन एव फलसंन्यासादकृष्णं चानुपादानात् इतरेषान्तु भूतानां पूर्व्वमेव त्रिविधमिति ॥ ७ ॥

## ततस्तद्विपाकानुगुणानामेवाभिव्यक्तिर्वासनानाम्॥८

ततइति त्रिविधात् कर्म्मणः। तद्विपाकानुगुणाना-मेवेति यज्जातीयस्य कर्म्मणो यो विपाकस्तस्यानुगुणा या वासनाः कर्म्मविपाकमनुशेरते तासामेवाभिव्यक्तिर्न हि

भेदोत्पत्तिप्रतिबन्धात् अनुग्रहश्च दक्षिणादिना ब्रह्मादेरिति शुक्लातपः। स्वाध्याय ध्यानवतामसन्न्यासिनां शुक्लत्वमुपपादयति साहीति अशुक्ला कृष्णा सन्न्यासिनां सन्न्या-सिनोदर्शयति। क्षीणेति कर्म्मसम्भवात् कर्म्मसन्न्यासिनोहि न क्वचिद्बहिः साधनसा-ध्ये कर्म्मणि प्रवृत्ता इति नचैषामस्ति कृष्णकर्म्माशययोगानुष्ठानसाध्यस्य कर्म्माशय-फलस्येश्वरे समर्पणान्नशुक्लकर्म्माशयः निरत्ययफलोहि शुक्लउच्यते यस्य फलमेव नास्ति कुतस्तस्य निरत्ययफलमित्यर्थः ॥ ७ ॥

तदेवं चतुष्टयीं कर्म्मजातिमुक्त्वा कतमा कस्येवेत्यवधारयति तत्राशुक्लमिति कर्म्माशयं विविच्य क्लेशाशयगतिमाह। ततस्तद्विपाकानुगुणानामेवाभिव्यक्तिर्वास-नानां। यज्जातीयस्य पुण्यजातीयस्यापुण्यजातीयस्य वा कर्म्मणो यो विपाकोदिव्यो वा नारको वा जात्यायुर्भोगस्तस्यविपाकस्यानुगुणाः ताएवाह। या वासना

दैवं कर्म्म विपच्यमानं नारकतिर्य्यङ्मनुष्यवासनाभिव्यक्ति निमित्तं भवति किन्तु दैवानुगुणा एवास्य वासना व्यज्यन्ते नारकतिर्य्यङ्मनुष्येषु चैवं समानश्चर्च्चः ॥ ८ ॥

जातिदेशकालव्यवहितानामप्यानन्तर्य्यं स्मृतिसंस्कारयोरेकरूपत्वात् ॥ ९ ॥

वृषदंशविपाकोदयः स्वव्यञ्जकाञ्जनाभिव्यक्तः स यदि जातिशतेन वा दूरदेशतया वा कल्पशतेन वा व्यवहितः पुनश्च स्वव्यञ्जकाञ्जन एवोदियात् द्रागित्येवं पूर्व्वानुभूत वृषदंशविपाकाभिसंस्कृता वासना उपादाय व्यज्येत कस्मात् यतो व्यवहितानामप्यासां सदृशं कर्म्माभिव्यञ्जकं निमित्तीभूतमित्यानन्तर्य्यमेव कुतश्च स्मृतिसंस्कारयोरेक-

कर्म्मविपाकमनुशेरते अनुकुर्व्वन्ति दिव्यभोगजनिता हि दिव्यकर्म्मविपाकानुगुणा वासनाः नहि मनुष्यभोगवासनाभिव्यक्तौ दिव्यकर्म्मफलोपभोगसम्भवः तस्मात् स्वविपाकानुगुणाएव वासनाः कर्म्माभिव्यञ्जनीया इति भाष्यार्थः ॥ ८ ॥

स्यादेतत् मनुष्यस्य प्रायणानन्तरमधिगतमार्जारभावस्यानन्तरतया मनुष्यवासनाया एवाभिव्यक्त्या भवितव्यं न खल्वस्ति सम्भवो यदनन्तरदिवसानुभूतं न स्मर्य्यते व्यवहितदिवसानुभूतञ्च स्मर्य्यत इत्यतआह। जातिदेशकालत्वात्। भवतु वृषदंशवासनाया जात्यादि व्यवधि स्तथापि तस्याः फलतश्चानन्तर्य्यं वृषदंशविपाकेन कर्म्मणा तस्या एव स्वविपाकानुगुणाया अभिव्यक्तौ तत् स्मरणसमुपादा दित्याह। वृषदंशविपाकोदय इति उदेत्यस्मादित्युदयः कर्म्माशयः पुनश्च स्वव्यञ्जका

रूपत्वात् यथानुभवास्तथा संस्काराः। ते च कर्म्मवासनारूपाः यथा च वासनास्तथा स्मृतिरिति जातिदेशकालव्यवहितेभ्यः संस्कारेभ्यः स्मृतिः स्मृतेश्च पुनः संस्कारा इत्येते स्मृति संस्काराः कर्म्माशयवृत्तिलाभवशाद्व्यज्यन्ते। अतश्च व्यवहितानामपि निमित्तनैमित्तिकभावानुच्छेदादानन्तर्य्यमेव सिद्धमिति ॥ ९ ॥

**तासामनादित्वञ्चाशिषोनित्यत्वात्॥ १० ॥**

तासां वासनानामाशिषो नित्यत्वादनादित्वं। येयमात्माशीर्माभूवं भूयासमिति सर्व्वस्य दृश्यते सा न स्वाभाविकी कस्मात् जातमात्रस्याननुभूतमरणधर्म्मकस्य



ज्ञन एव उदियात् अभिव्यज्येत विपाकारम्भाभिमुखः क्रियेतेत्यर्थः अभिसंस्कारक्रिया उपादाय गृहीत्वा व्यज्येत यदि व्यज्येत स्वविपाकानुगुणा एव वासना गृहीत्वा व्यज्येतेत्यर्थः आनन्तर्य्यमेव फलतः कारणद्वारकमुपपाद्य कार्य्यद्वारकमुपपादयति कुतश्च स्मृतीति एकरूपतया सादृश्यं तदेवाह यथेति ननु अनुभवस्वरूपाश्चेत् संस्काराः तथासत्यनुभवा विनश्वरास्त इत्येतेपि विनश्वराः कथं चिरभाविने अनुभवाय कल्पेरन्नित्यत आह। ते च कर्म्मवासना रूपाः यथाऽपूर्व्वं स्थायि क्षणिककर्म्मनिमित्तमपि एवं क्षणिकानुभवनिमित्तोपि संस्कारः स्थायी किञ्चिद्भेदाधिष्ठानञ्च सारूप्यं अन्यथा अभेदे तत्त्वेन सादृश्यानुपपत्तेरित्यर्थः। सुगममन्यत् ॥९॥

स्यादेतत् व्यज्येरन् पूर्व्वपूर्व्वतरजन्माभिसंस्कृता वासना। यदि पूर्व्वपूर्व्वतरजन्मसद्भावे प्रमाणं स्यात्तदेवतु नास्ति न च जातमात्रस्य जन्तोर्हर्षशोकदर्शनमात्रं प्रमाणं

द्वेषदुःखानुस्मृतिनिमित्तोमरणत्रासः कथं भवेत्। न च स्वाभाविकं वस्तुनिमित्तमुपादत्ते तस्मादनादिवासनानुविद्धमिदं चित्तं निमित्तवशात् काश्चिदेव वासनाः प्रतिलभ्य पुरुषस्य भोगायोपावर्त्तते इति घटप्रासादप्रदीपकल्पं। सङ्कोचविकाशि चित्तं शरीरपरिमाणाकारमात्रमित्यपरे

भवितु मर्हति पद्मादिसङ्कोचविकाशवत् स्वाभाविकत्वेन तदुपपत्तेरिति अत आह। तासामनादित्वञ्चाशिषो नित्यत्वात्॥ तासां वासनानामनादित्वञ्च न केवलमानन्त्य-मिति चार्थः आशिषो नित्यत्वात् आत्माशिषो वासनानामनादित्वे नित्यत्वाव्यभिचारा-दिति ननु स्वाभाविकत्वेनाप्युपपत्तेरसिद्धमाशिषो नित्यत्वमित्यत आह येयमिति नास्तिकः पृच्छति कस्मात्। उत्तरं जातमात्रस्य जन्तोरिति अतएवैतस्मिन् जन्म-न्यननुभूतमरणधर्मकस्य मरणमेव धर्मः सोऽननुभूतो येन स तथोक्तस्तस्य मातु-रङ्कात् प्रस्खलतः कम्पमानस्य माङ्गल्यचक्रादिलाञ्छितं तदुरःसूत्रमतिगाढं पाणि-ग्राहमवलम्बमानस्य बालकस्य कम्पभेदानुमितात् द्वेषानुषक्ते दुःखे या स्मृतिस्त-न्निमित्तोमरणत्रासः कथं भवेदिति ननूक्तं स्वभावादित्यत आह। न च स्वाभा-विकं वस्तुनिमित्तमुपादत्ते गृह्णाति स्वोत्पत्तौ एतदुक्तं भवति बालकस्येदृशोदृश्यमानः कम्पोभयनिबन्धनः ईदृशकम्पत्वात् अस्मदादिकम्पवत् बालकभयं द्वेषदुःखस्मृतिनि-मित्तं भयत्वात् अस्मदादिभयवत् आगामिप्रत्यवायोत्प्रेक्षालक्षणञ्च भयं न दुःख-स्मृतिमात्रात् भवति अपि तु यतोयतो विभेति तस्य तस्य प्रत्यवायहेतु भावमनु-माय सम्प्रत्यपि प्रत्यवायभयमपि विदध्यादिति शङ्कते तस्मात् यज्जातीयादनुभूत-चरात् द्वेषानुषक्तं दुःखमुपपादितं तस्य स्मरणात् तज्जातीयस्यानुभूयमानस्य तद्दुःखहेतुत्वमनुमाय ततो विभेति न च बालकेनास्मिन् जन्मनि स्खलनस्यान्यत्र-दुःखहेतुत्वमवगतं न च तादृशं दुःखमुपलब्धं तस्मात् प्राग्भवीयोनुभवः परिशिष्यते

प्रतिपन्नास्तथा चान्तराभावः संसारश्च युक्त इति । वृत्तिरे-
वास्यविभुनः सङ्कोचविकाशिनीत्याचार्य्यः तच्च “धर्म्मादि
निमित्तापेक्षं निर्मित्तञ्च द्विविधं बाह्यमाध्यात्मिकञ्च शरी-
रादिसाधनापेक्षं वाह्यं स्तुतिदानाभिवादनादिचित्तमात्रा-

तच्चैवदेवं प्रयोगमारोहति जातमात्रस्य वालस्य स्मृतिः पूर्व्वानुभव निवन्धना स्मृति-
त्वात् अस्मदादिस्मृतिवदिति न च सङ्कोच विकाशावपि स्वाभाविकी न हि स्वाभा-
विकं कारणान्तरमपेक्षतेवह्नेरौष्ण्यं प्रत्यपि कारणान्तरापेक्षाप्रसङ्गात् तस्मादागन्तुक
मयूखकरं सम्पर्कमात्रमेव कमलिनी विकाशकारणं सङ्कोचकारणञ्च संस्कारस्थिति-
स्थापक इति एवं स्मृताद्यनुमित हर्षादयोपि प्राक्तिभवे हेतवो वेदितव्याः तदास्तां
तावत् प्रकृतमुपसंहरति तस्मादिति निमित्तं लब्ध विपाककालं कर्म्म प्रतिलम्भोभि-
व्यक्ति प्रसक्तत स्थितपरिमाण विप्रतिपत्तिं निराचिकीर्षु विंप्रतिपत्ति माह । घट-
प्रासादेति देह प्रदेश वर्त्तिकार्य्य प्रदर्शनात् देहात्वहिः सद्भावे चित्तस्य न प्रमाण-
मस्ति न चैतदनुपरिमाणं दीर्घशष्कुली भक्षणादावपर्य्यायेण ज्ञानपञ्चकानुत्पाद
प्रसङ्गात् न चाननुभयमान क्रमकल्पनायां प्रमाणमस्ति न चंक्रमणमनो नानादेश
रिन्द्रियैरपर्य्यायेन संवद्धुमर्हति तत्परिशेष्यात् कायपरिमाणं चित्तं घटप्रासाद-
वर्त्ति प्रदीपवत् ॥ संकोचविकाशी पुत्तिका हस्ति देहयोरस्योत्पत्स्यते शरीर
परिमाणमेवाकारः परिमाणं यस्येति अपरे प्रतिपन्नाः नन्वेवं कथं अस्य चेत्रवीज
संयोगः न खल्वेतदनाश्रयं मृतशरीरात् मातृ पितृ देहवर्त्तिनी लोहित रेतसी
प्राप्नोति परतन्त्रत्वात् नहि स्थावरादिष्वगच्छत् सुच्छाया गच्छति नचागच्छति पटे
तदाश्रयं चित्तं गच्छति तथाच न संसारः स्यादित्यत आह । तथा चान्तराभावः ।
अतएव संसारश्च युक्तइति तथाच शरीरपरिमाणत्वे देहान्तर प्राप्तये पुर्व्वदेह

धीनं शुक्लाद्याध्यात्मिकं तथाचोक्तं ये चैते मैत्र्यादयो ध्यायिनां विहारास्ते वाह्यसाधननिरनुग्रहात्मानः प्रकृष्टं धर्म्ममभिनिर्वर्त्तयन्ति तयोर्मानसं बलीयः कथं ज्ञानवैराग्ये केनातिशय्येते दण्डकारण्यं चित्तबलव्यतिरेकेन कः शरीरेण कर्म्मणा शून्यं कर्त्तुमुत्सहेत समुद्रमगस्त्यवद्वा पिवेत् ॥१०॥

त्यागश्च देहान्तर प्राप्तिश्चान्तरस्यातिवाहिक शरीर संयोगाद्भवतः तेनखल्वयं देहान्तरे सञ्चरेत्। तथाच पुराणं। अङ्गुष्ठमात्रं पुरुषं निश्चकर्ष यमोबलादिति सोयमन्तराभावः अतएव संसारश्च युक्तइतितदेतदस्वष्यमाणः स्वमतमाह। वृत्तिरेवास्य विभूतिश्चित्तस्य संकोच विकाशिनीत्याचार्य्यः स्वयम्भूः प्रतिपेदेइदमत्राकूतं यद्यनाश्रयं चित्तं न देहान्तर सञ्चारि कथमेतदातिवाहिक माश्रयते तत्रापि देहान्तर कल्पनाया मनवस्था न चास्य देहान्निष्कर्षन् आतिवाहिकस्य सम्भवति निष्कृष्टस्य चेतसस्तत् सम्बन्धात् अस्तुतर्हि सुक्ष्मशरीरमेवासर्गादाच महाप्रलयान्नियतं चित्तानामधिष्ठानं षाटकौशिकशरीरमध्यवर्त्ति तेन हि चित्तमासत्यलोकादावीचेस्तत्र तत्र शरीरे सञ्चरति निष्कर्षश्चास्योपपन्नःषाट्कौशिकात् कायात्तत्रहि तदन्तराभावस्तस्य नियतत्वात् न चास्यापि सद्भावे प्रमाणमस्ति नखल्वेतदध्यक्षगोचरः न च संसारोऽस्यानुमानं आचार्य्यमते वाप्युपपत्तेः आगमस्तु पुरुषस्य निकर्षमाह न च चित्तं वा सूक्ष्मशरीरं वा पुरुषः किन्तु चितिशक्तिरप्रतिसंक्रमा न चास्याः निष्कर्षः सम्भवति इत्यौपचारिकी व्याख्येयः तथाच चितेः चित्तस्य तत्रतत्र वृत्त्यभावएव निष्कर्षार्थः यत्त्वस्मृतीतिहासपुराणेषु मरणानन्तरं प्रेतशरीरप्राप्तिः तद्विमोकश्च सपिण्डीकरणादिभिरित्युक्तं तदनुजानीमः आतिवाहिकत्वं तस्य न सृष्यामहे न चात्रास्ति कश्चिदागमः तत्रशरीरएव यमपुरुषैरपि पाशवद्धोनीयते नत्वातिवाहिक.

**हेतुफलाश्रयालम्बनैः संगृहीतत्वादेषामभावे तदभावः ॥ ११ ॥**

हेतुर्धर्म्मात् सुखं अधर्म्मात् दुःखं सुखाद्रागो दुःखाद्द्वेषस्ततःप्रयत्नस्तेन मनसा वाचा कायेन वा परिस्पन्दमानः। परमनुगृह्णाति उपहन्ति वा ततः पुनर्धर्म्माधर्म्मौ सुखदुःखे रागद्वेषाविति। प्रवृत्तमिदं षडरं संसारचक्रस्य च प्रतिक्षणमावर्त्तमानस्याऽविद्या नेत्री मूलं सर्व्वक्लेशानामित्येषा हेतुः फलन्तु यमाश्रित्य यस्य प्रत्युत्पन्नता धर्म्मादेः न ह्यपूर्व्वोपजनः मनस्तु साधिकारमाश्रयो वासनानां न ह्यवसिताधिकारे मनसि निराश्रया वासनाः स्थातुमुत्सहन्ते यदभिमुखीभूतं वस्तु यां वासनां व्यनक्ति तस्यास्तदालम्बनमेवं हेतुफलाश्रयालम्बनैरेतैः संगृहीताः सर्व्वा वासनाः एषामभावे तत्संश्रयाणामपि वासनानामभावः

शरीरः तस्मादहंकारिकत्वाच्च तमः अहंकारस्य च गगनमण्डलवत्त्रैलोक्यव्याप्तित्वाद्विभूत्वं मनसः ॥ १० ॥

एवञ्चेदस्य वृत्तिरपि विभ्वीति सर्व्वज्ञतापत्तिरित्यत उक्तं। वृत्तिरेवास्येति स्यादेतत् चित्तमात्राधीनाया वृत्तेः सङ्कोचविकाशौ कुतः कादाचित्कावित्यत आह। तच्च चित्तं धर्म्माद्यपेक्षं वृत्तौ निमित्तं विभजते। निमित्तञ्चेति आदिग्रहणेनेन्द्रियधनादयो गृह्यन्ते बाह्यादीत्यत्रापि वीर्य्यस्मृत्यादयो गृह्यन्ते आन्तरत्वे सम्मतिमाचार्य्याणामाह। तथाचोक्तं विहारो व्यापारः प्रकृष्टं शुक्लं तयोर्बाह्याभ्यन्तरयोर्मध्ये ज्ञानवैराग्ये तज्जनितो धर्म्मः केन बाह्यसाध्येन धर्म्मेणातिशय्येते अभिभूयेते ज्ञानवैराग्य

नास्त्यसतः सम्भवो न चास्ति सतो विनाश इति द्रव्यत्वेन सम्भवन्त्यः कथं निवर्त्तिष्यन्ते वासनाइति ॥ ११ ॥

## अतीतानागतं स्वरूपतोऽस्त्यध्वभेदात् धर्म्माणाम् ॥ १२ ॥

भविष्यत् व्यक्तिकमनागतम् अनुभूतव्यक्तिकमतीतं स्वव्यापारोपारूढ़ं वर्त्तमानं त्रयञ्च तद्वस्तु ज्ञानस्य ज्ञेयं यदि चैतत्स्वरूपतो नाभविष्यन्नेदं निर्व्विषयं ज्ञानमुत्पत्स्येत तस्मादतीतानागतं स्वरूपतोस्तीति किञ्च भोग भागीयस्य वाऽपवर्गभागीयस्य वा कर्म्मणः फलमुत्पित्सुः यदि निरुपाख्यमिति तदुद्देशेन तेन निमित्तेन कुशलानुष्ठानं न युज्येत सतश्च फलस्य निमित्तं वर्त्तमानीकरणे समर्थं नापूर्व्वोपजनने सिद्धं निमित्तं नैमित्तिकस्य विशेषानुग्रहणं कुरुते नापूर्व्वमुत्पादयति। धर्म्मीचानेकधर्म्म स्वभावस्तस्य चाध्वभेदेन धर्म्माः प्रत्यवस्थिताः न च यथा

जावेव धर्म्मौ तमभिभवतः वीजभावादपनयत इत्यर्थः अत्रैव सुप्रसिद्धमुदाहरणमाह। दण्डकारख्येति ॥ ११ ॥

अथैताश्चित्तवृत्तयीवासनाश्च अनादयश्चेत् कथमासामुच्छेदो न खलु चितिशक्तिरनादिरुच्छिद्यते इत्यत आह। हेतुफलाभावः। अनादेरपि समुच्छेदोदृष्टः तद्यथा अनागतस्येयि सव्यभिचारत्वादसाधनं चितिशक्तिस्तु विनाकारणाभावात् न विनश्यति नत्वनादित्वात् उक्तञ्च वासनानामनादीनामपि

परिणामैकत्वात् वस्तुतत्वम् ॥ १४ ॥

प्रख्याक्रियास्थितिशीलानां गुणानां ग्रहणात्मकानां करणभावेनैकः परिणामः श्रोत्रमिन्द्रियं ग्राह्यात्मकानां शब्दभावेनैकः परिणामः शब्दोविषय इति ।

शब्दादीनां मूर्त्तिसमानजातीयानामेकः परिणामः पृथिवी परमाणुस्तन्मात्रावयवस्तेषाञ्चैकः परिणामः पृथिवी

तुच्छकं विनाशि यथाहि मायाकार्य्यैवान्यथा भवति एवं विकारा अप्याविर्भाव तिरोभाव धर्म्माणःप्रतिक्षणमन्यथा प्रकृति नित्यतया मायाविधर्म्मेण परार्थेति ॥ १३॥

भवतु वै गुणस्यैत्यं परिणामवैचित्र्यं एकस्तु परिणामः पृथिवीयमिति वातीयमिति वा कुतः त्र्यात्मन एकत्व विरोधादित्याशङ्का सूत्रमवतारयति । यदातु सर्व्वे-गुणा इति परिणामत्वं बहूनामप्येकः परिणामोदृष्टः तद्यथा गवाश्वमहिष मातङ्गानां रुमानिक्षिप्तानामेको लवणत्वजातीयलक्षणः परिणामः वर्त्ति तैलान-लानाञ्च प्रदीप इति। एवं बहुत्वेपि गुणानां परिणामैकत्वं ततस्तन्मात्रभूत भौतिकानां प्रत्येकं तत्वमेकत्वं ग्रहणात्मकानां सत्वप्रधानतया प्रकाशात्मनामहङ्कारा-वान्तर कार्य्याणां करणभावेनैकः परिणामः श्रोत्रमिन्द्रियं तेषामेव गुणानां तमः प्रधानतया जड़त्वेन ग्राह्यात्मकानां शब्दतन्मात्र भावेनैकः परिणामः शब्दोविषयः शब्द इति शब्दतन्मात्रं विषय इति जड़त्वमाह न तु तन्मात्रस्य श्रोत्र विषयत्व सम्भव इति शेषं सुगमं अथ विज्ञानवादिन वैनाशिकमुत्थापयति नास्त्यर्थो विज्ञान-विसहचर इति यदिहि भूतभौतिकानि विज्ञानमात्राद्भिन्नानि भवेयुस्ततस्तदुत्पत्ति कारणमीदृशं प्रधानं कल्पेत न तु तानि विज्ञानातिरिक्तानि सन्ति परमार्थतः

यस्तु दृष्टिपथं प्राप्तन्तन्मायेव सुतुच्छक''मिति। यदातु सर्व्वे गुणाः कथमेकः शब्दएकमिन्द्रियमिति ॥ १३ ॥

स्यात् उत्पद्यते च तस्मादतीतानागते सामान्यरूपेण समनुगतेस्त इति एवमनुभवती ज्ञानं विषय सत्वे हेतुरुक्तं उद्देश्यत्वादप्यऽनागतस्य विषयत्वेन सत्वमेवेत्याह किञ्च भोगभागीयस्येति कुशली निपुणः अनुष्ठेयेपि च यद् यन्निमित्तं तत् सर्व्वं नैमित्तिके सत्येव विशेषमाधत्ते यथा काष्ठलाव वेदाध्याय दायः नखल्वेते काष्ठलावादयो ऽसन्तमुत्पादयन्ति सतएव तु तत्प्राप्तिविकारौ कुर्व्वन्ति एवं कुलालादयोपि सतएव घटस्य वर्त्तमान भाव हेतवइत्याह सतश्चेति यदि तु वर्त्तमानता भावादतीतानागतयो रसत्वं हन्त भोः वर्त्तमानस्याप्यभावः अतीतानागतत्वाभावात् स्वार्थविशिष्टतया तु सत्वं त्रयाणामध्वविशिष्ट मित्यभिप्रायेणाह धर्म्मौ चेति प्रत्येक मवस्थानं प्रत्यवस्थितिरिति। द्रव्यतइति द्रव्ये धर्म्मिणि सार्व्वविभक्तिकस्तसिः यद्यतीतानागतावतीतानागते न स्तः तर्हि वर्त्तमान समये तत्ता भावान्नस्याताभित्यत आह। एकस्य चेति प्रकृतमुपसंहरति नाभूत्वाभावइति स्यादेतत् नानाप्रकारो धर्म्मधर्म्मि अवस्था परिणामरूपो विश्वभेद प्रपञ्चोन प्रधानादेः कस्मात् भवितुमर्हति नह्यविलक्षणात् कारणात् कार्य्यभेद स्वभाव इत्यत आह। तेन ते अध्वानो धर्म्मा व्यक्ताश्च सूक्ष्माश्च गुणात्मानो न त्रैगुण्यातिरिक्तमेषामस्ति कारणं "हैचिनन्तु तदा हिताऽनादिता लेशवासनानुगता हैचिवात्। यथोक्तं वायुपुराणे वैश्वरूप्यात् प्रधानस्य परिणामोयमद्भुत इति व्यक्तानां पृथिव्यादीनामेकादशेन्द्रियाणाञ्च वर्त्तमानानामतीतानागतत्वं षड़विशेषा यथायोगं भवन्ति। सम्प्रति विश्वस्य नित्यानित्यरूपे विभजन् नित्यरूपमाह सर्व्वमिदमिति दृश्यमानं सन्निवेशसंस्थानभेदवान् परिणाम इत्यर्थः अत्रैव षष्टीतन्त्रस्य शास्त्रस्यानुशिष्टिः। मायेव तु न मायाप्

वर्त्तमानं व्यक्तिविशेषापन्नं द्रव्यतोऽस्त्येवमतीत मनागतञ्च कथं तर्हि स्वेनैव व्यङ्ग्येन स्वरूपेणागतमस्ति स्वेन चानुभूतव्यक्तिकेन स्वरूपेणातीतमिति वर्त्तमानस्यैवाध्वनः स्वरूप व्यक्तिरिति न सा भवत्यतीतानागतयोरध्वनोरेकस्य चाध्वनः समयेद्वावध्वानो धर्म्मिसमन्वागतौ भवत एवेति नाभूत्वाभावास्त्रयाणामध्वनामिति ॥ १२ ॥

ते व्यक्तसूक्ष्मागुणात्मानः ॥ १३ ॥

ते खल्वमीत्र्यध्वानो धर्म्मा वर्त्तमाना व्यक्तात्मानोऽतीतानागताः सूक्ष्मात्मानः षड़विशेषरूपाः सर्व्वमिदं गुणानां सन्निवेशविशेषमात्रमिति परमार्थतो गुणात्मनः तथाच "शास्त्रानुशासनं गुणानां परमं रूपं न दृष्टिपथमृच्छति ।

समुच्छेदे कारणं सूचयति अनुग्रहोपघातावपि धर्म्माधर्म्मादिनिमित्तमुपलक्षयतः तेन सुरापानादयोपि संगृहीता भवति नेत्री नायिका अत्रैव हेतुमाह मूलमिति प्रत्युत्पन्नता वर्त्तमानता नतु धर्म्मस्वरूपोत्पादः अत्रैव हेतुर्नहीति यदभिमुखीभूतं वस्तु कामिनीसम्पर्कादिव्यापकाभावे व्याप्यस्याभाव इति सूत्रार्थः ॥ १२ ॥

उत्तरसूत्रमवतारयितुं शङ्कते नास्तीति असत इति तु सम्पातायातं निदर्शनाय वा अतीताधर्म्माणां नासतामुत्पादो न सतां विनाशः किन्तु सतामेव धर्म्माणामध्वभेदएवोदयव्ययाविति सूत्रार्थः अनुभूता प्राप्ता येन व्यक्तिः तथा सम्प्रतिव्यक्तिर्नास्तीति यावत् ततश्च त्रैकाल्येपि धर्म्मः सन्नित्याह । यदिचेति नह्यसन् ज्ञानविषयः सम्भवतीति निरुपाख्यत्वात् विषयावभासं हि विज्ञानं नासति विषये भवति त्रैकाल्य विषयञ्च विज्ञानं योगिनां तस्मादादीनाञ्च विज्ञानमसति विषये नोत्पन्नं

गौर्वृक्षः पर्व्वतइत्येवमादिः भूतान्तरेष्वपि स्नेहौष्ण्य प्रणामि-
त्वावकाशदानान्युपादाय सामान्यमेकविकारारम्भः समा-
धेयः नास्त्यर्थोविज्ञानविसहचरेणाऽस्ति तु ज्ञानमर्थविसहचरं
स्वप्नादौ कल्पितमित्यनया दिशा ये वस्तुस्वरूपमपह्नवस्ते-

तत्त्वथं प्रधानकल्पनं कथञ्च ग्रहणानामिन्द्रियाणामहङ्कारः विकाराणां कल्पनेति
तथाहि जडस्यार्थस्य स्वयमप्रकाशत्वान्नास्त्यर्थो विज्ञानविसहचरसाहचर्य्यं सम्बन्धः
तदभावी विसहचरः भावार्थः विज्ञानासम्बन्धी नास्तीति व्यवहारयोग्य इत्यर्थः
अस्तितु ज्ञानमर्थविसहचरं तस्य स्वयं प्रकाशत्वेन स्वगोचरास्तिता व्यवहारे कर्त्तव्ये
जडमर्थं प्रत्यपेक्षाभावात् तदनेन वेद्यत्व सहोपलम्भनियमौ सूचितौ विज्ञान-
वादिना तौ चैवं प्रयोगमारोहतः यद्वद्यते येन वेदनेन तत्ततो न भिद्यते यथा
ज्ञानस्यात्मा वेद्यन्ते च भूतभौतिकानीति विरुद्धव्याप्तोपलब्धिः निषिद्ध भेदविरु-
द्धेनाभेदेन व्याप्तं वेद्यत्वं दृश्यमानं स्वव्यापकभेदमुपस्थापयितुं विरुद्धं भेदं प्रति-
क्षिपतीति । तथा यद् येन नियसहोपलम्भं तत्तेन भिद्यते यथैकस्माच्चन्द्राद्द्वितीय
श्चन्द्रः नियत सहोपलम्भश्चार्थो ज्ञानेनेति व्यापकविरुद्धोपलब्धिः निषेध्यभेदव्यापका
नियमविरुद्धा नियमोऽनियमं निवर्त्तयं स्तद्व्याप्तं भेदं प्रतिक्षिपतीति स्यादेतदर्थश्चे
न्नभिन्नो ज्ञानात् कथं भिन्नवत् प्रतिभासत इत्यत आह । कल्पितमिति यथाहुः
वैनाशिकाः 'सहोपलम्भनियमादभेदो नीलतद्धियोः । भेदश्च भान्ति विज्ञानैर्दृश्ये
इन्दाविवाद्वये इति कल्पितत्वं विशदयति ज्ञानपरिकल्पनेति निराकरोति ते इति
ते कथं श्रद्धेये वचनाः स्युरिति सम्बन्धः प्रतिज्ञानमुपस्थितं प्रत्युपस्थितं कथं
तथेति यथा यथावभासते इदं कारास्पदत्वेन तथा तथा स्वयमुपस्थितं न तु कल्प-
नोपकल्पितं विज्ञानविषयतापन्नं स्वमाहात्म्येनेति कारणत्वं विज्ञानं प्रत्यर्थस्य दर्श-
यति यस्मादर्थेन स्वकीयया ग्राह्यशक्त्या विज्ञानमजनितं तस्मादर्थस्य ग्राहकं तदेवं

ज्ञानपरिकल्पनामात्रं वस्तु स्वप्नविषयोपमं न परमार्थतः अस्तीति ये आहुः ते तथेति प्रत्युपस्थितमिदं स्वमाहात्म्येन वस्तु कथं अप्रमाणात्मकेन विकल्पज्ञानबलेन वस्तुस्वरूपमुत्सृज्य तदेवापलपन्तः श्रद्धेयवचनाः स्युः ॥ १४ ॥

भूतं वस्तु कथ मप्रमाणात्मकेन विकल्पविज्ञानबलेन विकल्पस्याप्रामाणिकत्वात् तद्बलस्यापि तदात्मनो प्रमाणात्मकत्वं तेन वस्तुस्वरूपमुत्सृज्योपप्लुतं कृत्वा उपगच्छेति क्वचित् पाठः तत्रापि स एवार्थः तदेवापलपन्तः अज्ञातव्यवचनाः स्युः इदमत्राकूतं सहोपलम्भनियमस्य वेद्यत्वस्य हेतू सन्दिग्धव्यतिरेकतया नैकान्तिकौ। तथाहि ज्ञानाकारस्य भूतभौतिकादेर्यदेतत् वाह्यत्वं स्थूलत्वञ्च भासेते न ते ज्ञाने सम्भवतः यथाहि नानादेशव्यापिता स्थौल्यं विच्छिन्नदेशता च वाह्यत्वं नचैकविज्ञानस्य नानादेशव्यापिता विच्छिन्नदेशताचोपपद्यते तद्देशत्वातद्देशत्वच-विरुद्धधर्मसंसर्गस्यैकत्वासम्भवात् सम्भवे वा त्रैलोक्यस्यैकत्वप्रसङ्गात्। अतएवास्तु विज्ञानभेद इति चेत् हन्त भो परमसूक्ष्मगोचराणां प्रत्ययानां परस्परवार्त्तानभिज्ञानां स्वगोचरमात्र जागरूकानां कुतस्त्योयं स्थूलावभासः न च विकल्पगोचरोभिलापः संसर्गाभावात् विशदप्रतिभासत्वाच्च न च स्थूलमालोचितं यतः तदुपाधिकस्य विशदता भवेत् तत्पृष्ठ सविकल्पस्य भाविनः न चाविकल्पवत् विकल्पोऽपि स्वाकारमात्रगोचरः तस्य चास्थूलत्वात् न स्थूलगोचरो भवितु मर्हति तस्माद्वाह्ये च प्रत्यये स्थूलस्य वाह्यस्य चासम्भवादलीकमेतदास्थातव्यं नचालीकं विज्ञानादभिन्नं विज्ञानस्य तद्वत् तुच्छत्वप्रसङ्गात् तथाच वेद्यत्वस्याभेदव्याप्यत्वाभावात् कुतो भेदप्रतिपक्षत्वं सहोपलम्भनियमस्य सदसतोरिव विज्ञानस्थौल्ययोः सतोरपि स्वभावाद्वा कुतश्चित् प्रतिबन्धाद्वोपपत्स्यते तस्मादनैकान्तिकत्वाद्धेतोः हेत्वाभासौ विकल्पमात्रमेव वाह्याभावे प्रसुवाते न च प्रत्यक्षमाहात्म्यं विकल्पमात्रेणापोद्यते तस्मात् सा-

कुतश्चैतदन्याय्यम् ?—

**वस्तुसाम्ये चित्तभेदात्तयोर्विभक्तः पन्थाः ॥१५॥**

बहुचित्तावलम्बनीभूतमेकं वस्तु साधारणं तत् खलु नैकचित्तपरिकल्पितं नाप्यनेकचित्तपरिकल्पितं किन्तु स्वप्रतिष्ठितं कथं वस्तुसाम्ये चित्तभेदात् धर्म्मापेक्षं चित्तस्य वस्तुसाम्येपि सुखज्ञानं भवत्यधर्म्मापेक्षं तत एव दुःखज्ञानं अविद्यापेक्षं तत एव मूढ़ज्ञानं सम्यग्दर्शनापेक्षं तत एव माध्यस्थज्ञानमिति कस्य तच्चित्तेन परिकल्पितं नचान्यचित्तपरिकल्पितेनार्थेनान्यस्य चित्तोपरागोयुक्तः तस्माद्वस्तुज्ञानयोर्ग्राह्यग्रहणभेदभिन्नयोर्विभक्तः पन्था नानयोः सङ्करगन्धोप्यस्तीति साङ्ख्यपक्षे पुनर्वस्तु त्रिगुणं चलञ्च गुणवृत्तमिति



धूक्तं कथमप्रमाणात्मकेन विकल्पज्ञानबलेनेति एतेन प्रत्ययमपि स्वप्नादिप्रत्ययदृष्टान्तेन निरालम्बनत्वसाधनमपास्तं प्रमेयविकल्पस्त्ववयविव्यवस्थापनेन प्रत्युक्तः विस्तरस्तु न्यायकणिकाया मनुसरणीय इति तदिह कृतं विस्तरेणेति ॥ १४ ॥

तदेवमुत्सूत्र भाष्यकृद्विज्ञानातिरिक्तस्थापने युक्तिमुत्कासौत्रिं युक्तिमवतारयति कुतश्चैतदिति। वस्तु — पन्थाः। यन्नानात्वे यस्यैकत्वं तत्ततोऽन्यन्तं भिद्यते यथा चैत्रस्य ज्ञानमेकं भिन्नेभ्यो देवदत्तविष्णुमित्रमैत्रप्रत्ययेभ्यो भिद्यते ज्ञान नानात्वेऽपि चार्थो न भिद्यते इति भवति विज्ञानेभ्योऽन्यः अभेदश्चार्थस्य ज्ञानभेदेऽपि प्रमातॄणां परस्परप्रतिसन्धानादवसीयते अस्ति हि रक्तद्विष्टविमूढ़मध्यस्थानामेकस्यां योषिति प्रतीयमानायां प्रतिसन्धानं या त्वया दृश्यते सैवमयापीति। तस्माद्वस्तुसाम्ये चित्तभेदात् ज्ञानभेदात्तयोरर्थज्ञानयोर्विभक्तः पन्थाः स्वरूपभेदोपायः सुखज्ञानं कान्तायां कान्तस्य सपत्नीनां दुःखज्ञानं विषादः। स्यादेतत् यत्र कस्य चित्तेन परिकल्पितः

धर्म्मादिनिमित्तापेचं चित्तैरभिसम्बध्यते निमित्तानुरूपस्य च प्रत्ययस्योत्पद्यमानस्य तेन तेनात्मना हेतुर्भवति केचिदाहुर्ज्ञानसहभूरेवार्थोभोग्यत्वात् सुखादिवदिति तत्र तया द्वारा साधारणत्वं बाधमानाः पूर्व्वोत्तरेषु चणेषु वस्तुरूपमेवापह्नवते ॥ १५ ॥

**नचैकचित्ततन्त्रं वस्तुदप्रमाणकं तदा किं स्यात ॥ १६ ॥**

एकचित्ततन्त्रं चेद्वस्तु स्यात्तदाचित्तेव्यग्रे निरुद्धे वा स्वरूपमेव तेनापरामृष्ट मन्यस्या विषयीभूतमप्रमाणकमगृहीत स्वभावकं केनचित्तदानीं किं तत्स्यात् ।

सम्बध्यमानं वा पुनश्चित्तेन कुत उत्पद्येत येचास्यानुपस्थिताभागास्ते चास्य नस्युरेवं नास्ति पृष्ठमित्युदरमपि न

कामिनी लचणोर्थः तेनैवान्येषामपि चित्तमुपरज्यते इति साधारणमुपपद्यते इत्यत आह । नचान्येति तथा सत्येकस्मिन्नीलज्ञानवति सर्व्वएव नीलज्ञानवन्तः स्युरिति नन्वर्थवादिनामप्येकोर्थः कथं सुखादिभेदाभिन्नविज्ञानहेतुर्नह्यविलचणात् कारणात् कार्य्यभेदोयुक्त इत्यत आह । सांख्यपच इति एकस्यैव वाह्यस्य वस्तुनस्त्रैगुण्यपरिणामस्य त्रैरूप्यमुपपन्नम् ॥ १५ ॥

एवमपि सर्व्वेषामविशेषेण सुखदुःखमोहात्मकं विज्ञानं स्यादित्यत आह । धर्म्मादिनिमित्तापेचं रजःसहितं सत्त्वं धर्म्मापेचं सुखज्ञानं जनयति। सत्त्वमेव तु विगतरजस्कं विद्यापेचं माध्यस्थ्यज्ञानमिति तेच धर्म्मादयो न सर्व्वे सर्व्वत्र पुरुषे सन्ति कन्तु कश्चित् क्वचिदिति अभ्युपपन्ना व्यवस्थेति अत्र केचिदाहुः प्रवादुकाः ज्ञानसहभूरेवार्थो भोग्यत्वात् सुखादिवदिति एतदुक्तं भवति भवत्वर्थोज्ञानात् व्यतिरिक्तः

ग्टह्येत तस्मात् स्वतन्त्रोर्थः सर्व्वपुरुषसाधारणः स्वतन्त्राणि च चित्तानि प्रतिपुरुषं प्रवर्त्तन्ते तयोः सम्बन्धादुपलब्धिः पुरुषस्य भोग इति ॥ १६ ॥

## तदुपरागापेक्षित्वाच्चित्तस्यवस्तु ज्ञाताज्ञातम् ॥१७॥

अयस्कान्तमणिकल्पाविषयाः । अयः सधर्म्मकं चित्तमभि-

तथाप्यसौ जड़त्वात् न ज्ञानमन्तरेण शक्यःप्रतिपत्तुं ज्ञानेन तु भासनीयःतथाच ज्ञान समयएवास्ति नान्यदा प्रमाणाभावादिति तदेतदुःसूत्रं तावत् दूषयति भाष्यकारः तत्र वयाह्वारेति वस्तुखलुसर्व्वचित्त साधारणमनेकचणपरं परीक्ष्यमाणं परिणामात्मक मनुभूयते लौकिकपरीक्षकैः तच्चे द्विज्ञानेन सह भवेत् नूनमेवं विषमेवं चेदिमं शस्त्रीपरिकीयमनुरोधं येन सोपि नापङ्कूयेतेत्यर्थः मा वा भूदिदमं शस्यापङ्कवोज्ञान सहभूरेवास्त्वर्थः तत्राप्याह । नचैकं किं स्यात यद्वि घटग्राहि चित्तं तद् यदा पट द्रव्यव्यग्रतया न घटेवर्त्तते यद्वा विवेकविषयमासीत् तदेव च निरोधं समापद्यते तदाघटज्ञानस्य वा विवेक ज्ञानभेद मात्र जीवन स्तन्नाशान्नष्ट एव स्यादित्याह एक चित्तेति किं तत्स्यात् नस्यादित्यर्थः। संबध्यमानञ्च चित्तेन तद् वस्तुविवेकीवा घटो वा कुत उत्पद्यते नियत कारणान्वय व्यतिरेकानु विधायि भावानि हि कार्य्याणि न स्वकारण मतिवर्त्य कारणान्तराद्भवितुमीशते माभूदकारणत्वे तेषां कादाचित्कत्वव्याघातः न च तत् ज्ञानकारणत्वमेव तत्कारणत्वमिति युक्तम् । आगामीदकस्य उपार्ज्जितमोदकस्य वोपयुज्यमानस्य रसवीर्य्य विपाकादि साम्य प्रसङ्गात् तस्मात् साधूक्तं सम्बध्यमानं वा पुनश्चित्तेनेति अपिच योयोऽर्वाग्भागः स सर्व्वोमध्यपरभाग व्याप्तः ज्ञानाधीने सद्भावेत्त्वस्यानुभूयमानत्वान्मध्यपरभागौ न स इति व्यापकाभावादर्व्वाग्भागोपि न स्यात् इत्यर्थाभावात् कुतो ज्ञानसहभूरर्थ इत्याह। येचास्येति अनुपस्थिता अज्ञाताः उपसंहरति तस्मादिति सुगमं शेषं ॥ १६ ॥

सम्बध्योपरं जयन्ति येन च विषयेणोपरक्तं चित्तं स विषयोज्ञातस्ततोन्यः पुनरज्ञातोवस्तुनोज्ञाताज्ञातस्वरूपत्वात् परिणामि चित्तं यस्य तु तदेव चित्तं विषयस्तस्य ॥१७॥

**सदा ज्ञाताश्चित्तवृत्तयस्तत्प्रभोः पुरुषस्यापरिणामित्वात् ॥ १८ ॥**

यदि चित्तवत् प्रभुरपि पुरुषः परिणमेत ततस्तद्विषया चित्तवृत्तयः शब्दादिविषयवत् ज्ञाताज्ञाताः स्युः सदा

स्यादेतत् अर्थश्चेत् स्वतन्त्रः सच जड़स्वभाव इति न कदाचित् प्रकाशते प्रकाशने वा जड़त्वमप्यस्यापगत मितिभावोप्यपगच्छेत् न जातु स्वभावमप्रहाय भावोवर्त्तितु मर्हति न चेन्द्रियाद्याधेयो जड़स्वभावस्यार्थस्य धर्म्मःप्रकाश इति साम्प्रतं अर्थधर्म्मत्वे नीलत्वादिवत् सर्व्व पुरुषसाधारण इत्येकःशास्त्रार्थज्ञ इति सर्व्वे एव विद्वांसः प्रसज्येरन् न जाम्यःकश्चिदस्ति न चातीतानागतयोः धर्म्म प्रत्युत्पन्नयुक्तः तस्मात् स्वतन्त्रोर्थे उपलभ्य विषय इति मनोरथमात्रमेतदित्यत आह ।

तदु—ज्ञातं । जड़स्वभावोप्यर्थ इन्द्रिय प्रनाड़िकया चित्तमुपरञ्जयति तदेवं भूतं चित्तदर्पणमुपसंक्रान्तप्रतिविम्बाचिति शक्तिश्चित्तमर्थोपरक्तं चेतयमानार्थं मनुभवति नत्वर्थे किञ्चित् प्राकादिकमाधत्ते नाप्यसंबद्धा चित्ते न तत्प्रतिविम्बसंक्रान्ते रक्तत्वादिति यद्यपि च सर्व्वगतत्वाच्चित्तस्य चेन्द्रियस्य चाहङ्कारिकस्य विषये नास्तिसम्बन्धः तथापि यत्र शरीरे वृत्तिमच्चित्तं तेन सह सम्बन्धी विषयाणामित्ययस्कान्तमणिकल्पा इत्युक्तम् अयः सधर्मकं चित्तमिति । इन्द्रियप्रणालिकयाभिसंबध्यो परं जयन्ति अतएव चित्तं परिणामीत्याह वस्तु न इति ॥ १७ ॥

तदेवं चित्तव्यतिरेकेणमर्थमवस्थाप्य तेभ्यः परिणतिधर्मकेभ्यो व्यतिरिक्त-

ज्ञातत्वन्तु मनसस्तत्प्रभोः पुरुषस्यापरिणामित्वमनुमापयति ॥ १८ ॥

स्यादाशङ्काचित्तमेव स्वाभासं विषयाभासञ्च वैशेषिकानां चित्तात्मवादिनाञ्च भविष्यत्यग्निवत्

न तत्स्वाभासं दृश्यत्वात् ॥ १९ ॥

यथेतराणीन्द्रियाणि शब्दादयश्च दृश्यत्वान्न स्वाभासानि तथा मनोऽपि प्रत्येतव्यं। न चाग्निरत्र दृष्टान्तं नह्यग्निरात्मस्वरूपमप्रकाशं प्रकाशयति। प्रकाशश्चायं प्रकाश्य-

मात्मानमादर्शयितुं तद्वैधर्म्यमपरिणामित्वमस्य वक्तुं पूरयित्वा सूत्रं पठति यस्य तु तदेव चित्तं विषयस्तस्य सदाऽपरिणामीत्वात्। क्षिप्तमूढविक्षिप्तैकाग्रतावस्थितं चित्तमानिरोधात् सर्वदा पुरुषेणानुभूयते वृत्तिमत् तत् कस्य हेतोः यतः पुरुषोऽपरिणामी परिणामित्वे चित्तवत् पुरुषोऽपि ज्ञाताज्ञातविषयी भवेत्। ज्ञातविषय एव त्वयं तस्मादपरिणामी ततश्च परिणामिभ्योऽतिरिच्यते इति तदेतदाह।

यदि चित्तवदिति। सदाज्ञातत्वं तु मनसः संवृत्तिकस्य तस्य यः प्रभुः स्वामी-भोक्तेति यावत् तस्य प्रभोः पुरुषस्यापरिणामित्वमनुमापयति तथाचापरिणामिनस्तस्य परिणामिनश्चित्तात् पुरुषस्य भेद इति भावः। अत्र वैनाशिकमुत्थापयति-स्यादाशङ्केति अयमर्थः स्यादेतदेवं यदि चित्तमात्मनो विषयः स्यात् अपि तु स्वप्रकाशने तत् विषयाभासं पूर्वचित्तं प्रतीत्य समुत्पन्नं तत्कुतः पुरुषस्य सदाज्ञातविषयत्वं कुतस्तरां वाऽपरिणामितया परिणामिनश्चित्ताद्भेद इति ॥ १८ ॥

न—तत्वात् भवेदेतदेवं यदि स्वसंवेदनं चित्तं स्यान्नत्वेतदस्तितद्धिपरिणामितया नीलादिवदनुभवव्याप्यं यच्चानुभवव्याप्यं न तत्स्वाभासं भवितुमर्हति स्वात्मनिवृत्तिविरोधात् नहि तदेव क्रियाच कर्मच कारकञ्च न हि पाकः पच्यते छिदा वा छिद्यते

प्रकाशक संयोगो दृष्टः न च स्वरूपमात्रेऽस्ति संयोगः किञ्च स्वाभासं चित्तमित्यग्राह्यमेव कस्यचिदिति। शब्दार्थः तद्यथा स्वात्मप्रतिष्ठमाकाशं इत्यप्रतिष्ठमित्यर्थः स्वबुद्धि प्रचारप्रतिसंवेदनात् सत्त्वानां प्रवृत्तिर्दृश्यते। क्रुद्धोह-भीतोहममुत्र मे रागोमुत्र मे क्रोध इत्येतत् स्वबुद्धेरग्रहणेन युक्तमिति ॥ १९ ॥

**एकसमये च भयानवधारणम् ॥ २० ॥**

न चैकस्मिन् क्षणे स्वपररूपावधारणं युक्तं क्षणिक-पुरुषस्त्वपरिणामिनानुभवकर्मेति नास्मिन् स्वयं प्रकाशता न युज्यते अपराधीन-प्रकाशता ह्यस्य स्वयं प्रकाशता नानुभवकर्मता तस्मात् दृश्यत्वात् दर्शनकर्मचित्तं न स्वाभासं आत्मप्रकाशप्रतिबिम्बितस्यैव चित्तस्य तावद्वृत्तिविषयाः प्रकाशन्त इति भावः। ननु दृश्योऽग्नि स्वयं प्रकाशश्च न हि यथा घटादयोऽग्निना व्यज्यन्ते एवमग्निरग्न्य-न्तरेणेत्यत आह। नचाग्निरत्रेति कस्मात् न हीति मानामाग्निरग्न्यन्तरात् प्रका-शिष्टविज्ञानात् तु प्रकाशत इति न स्वयं प्रकाशत इति न व्यभिचार इत्यर्थः:प्रकाशा-व्यवच्छिनत्ति क्रियारूपः प्रकाश इति यावत् एतदुक्तं भवति या या क्रिया सा सा सर्व्वा कर्तृकरणकर्मसम्बन्धेन दृष्टा यथा पाको दृष्टश्चाग्नितण्डुलसम्बन्धेन तथा प्रकाशोऽपि क्रियेति तथापि तथा भवितव्यं सम्बन्धश्च भेदाश्रयो नाभेदे सम्भवति इत्यर्थः किञ्च स्वाभासं चित्तमित्यग्राह्यमेव कस्यचिदिति शब्दार्थः। स्यादेतत् माभूत् ग्राह्यं चित्तं न हि ग्रहणस्य कारणस्य व्यापकस्य च निवृत्तौ चित्तनिवृत्ति इत्यत आह। स्वबुद्धीति बुद्धिश्चित्तं प्रचारा व्यापाराः सत्त्वाः प्राणिनश्चित्तस्य वृत्तिभेदाः क्रोधलोभादयः स्वाश्रयेण चित्तेन स्वविषयेण च सह प्रत्यात्ममनुभूयमानाश्चित्तस्या-ग्राह्यतां विघटयन्तीत्यर्थः;स्वबुद्धिप्रचारप्रतिसंवेदनमेव विशदयति क्रुद्धोहमिति॥१९॥

वादिनो यद् भवनं सैव क्रिया तदेव च कारकमित्यभ्युपगमः ॥ २० ॥

**चित्तान्तरे दृश्ये बुद्धिबुद्धेरतिप्रसङ्गः स्मृतिसङ्करश्च ॥ २१ ॥**

स्यान्मतिः स्वरसनिरुद्धं चित्तं चित्तान्तरेण समनन्तरेणगृह्यत इति ।

एक—रणं। स्वाभासं विषयाभासंचित्तमिति ब्रुवाणोनतावत् येनैव व्यापारेणात्मानमवधारयति तेनैव विषयमपीति वक्तुमर्हति नह्यविलक्षणो व्यापारः कार्य्यभेदाय पर्य्याप्तः तस्माद्व्यापारभेदोऽङ्गीकर्त्तव्यः नच वैनाशिकानामुत्पत्तिभेदातिरिक्तः अस्ति व्यापारः नचैकस्याक्षणोत्पत्ते रविलक्षणायाः कार्य्यवैलक्षण्यसम्भवः तस्याकस्मिकत्वप्रसङ्गात् नचैकस्योत्पत्तिद्वयसम्भवः तस्मादर्थस्य च ज्ञानरूपस्य चावधारणं नैकस्मिन् समये इति तदेतद्भाष्येणोच्यते नचैकस्मिन् क्षणे इति तथाचोक्तं वैनाशिकैः "भूतिर्येषां क्रिया सैवकारकं सैवचोच्यते" इति तस्माद् दृश्यत्वमेतच्चित्तस्य सदातनं स्वाभासत्वमुपनयत् द्रष्टारञ्च द्रष्टुरपरिणामित्वञ्च दर्शयतीति सिद्धं ॥ २० ॥

पुनर्वैनाशिकमुत्थापयति। स्यान्मतिः माभूत् दृश्यत्वेन स्वसंवेदनं एवमप्यात्मा न सिध्यति। स्वसन्तानवर्त्तिना चरमचित्तक्षणे स्वरसनिरुद्धस्वजनकचित्तक्षणग्रहणादित्यर्थ समश्च तत्ज्ञानत्वेनानन्तरश्चाव्यवहितत्वेन समनन्तरं तेन। चि—त्त। बुद्धिरिति चित्तमित्यर्थः नागृहीता चरमाबुद्धिः पूर्व्वबुद्धिग्रहणसमर्था ह्यनवबुद्धबुद्ध्यासंबद्धा पूर्व्वा बुद्धिबुद्ध्याभावात मर्हति। नह्यगृहीतदण्डो दण्डिनमवगन्तुमर्हति तस्मादनवस्थेति विज्ञानवेदना संज्ञारूप संस्काराः स्कन्धाः साक्षा-

अथ चित्तं चेच्चित्तान्तरेण गृह्येत बुद्धिः केन गृह्यते सापि अन्यया सापि अन्ययेत्यतिप्रसङ्गः स्मृतिसङ्करश्च यावन्तो बुद्धिबुद्धीनामनुभवास्तावन्त्यः स्मृतयः प्राप्नुवन्ति तत्सङ्कराच्चैक स्मृत्यनवधारणञ्च स्यादित्येवं बुद्धिप्रतिसम्वेदिनं पुरुषमपलपद्भिः वैनाशिकैः सर्व्वमेवाकुलीकृतं ते तु भोक्तृस्वरूपं यत्र क्वचन कल्पयतोनन्यायेन संगच्छन्ते । केचित् सत्त्वमात्रमपि परिकल्प्यास्ति स सत्त्वो यएतान् पञ्चस्कन्धान्निक्षिप्यान्यांश्च प्रतिसन्दधातीत्युक्त्वा ततएव पुनस्त्रस्यन्ति तथा स्कन्धानां महन्निर्व्वेदाय विरागायानुत्पादाय प्रशान्तये गुरोरन्तिके ब्रह्मचर्य्यं चरिष्यामीत्युक्त्वा सत्त्वस्य पुनः सत्त्वमेवापह्नवते साङ्ख्ययोगादयस्तु प्रवादाः स्वशब्देन पुरुषमेव स्वामिनं चित्तस्य भोक्तारमुपयन्तीति ॥ २१ ॥

योगादयः प्रवादाः साङ्ख्यश्च योगाश्च तप्रवादयो येषां वैशेषिकादिप्रवादानान्ते साङ्ख्ययोगादयः प्रवादाः सुगममन्यत् ॥ २१ ॥

स्यादेतत् यदिचित्तं नस्वाभासं नापिचित्तान्तरवेद्यं आत्मनापिकथं भोज्यते चित्तं न खल्वात्मनः स्वयं प्रकाशस्याप्यस्ति काचित् क्रिया न तामन्तरेण कर्त्ता न चासम्बद्धश्चित्तेन कर्मणा तस्य भोक्ता अतिप्रसङ्गादित्याशयवान् पृच्छति कथमिति । सूत्रेणोत्तरमाह चि—नं । यत् तदवोचत् वृत्तिसारूप्यमितरत्रेति तदितः समुत्थितचित्तः स्वबुद्धिसंवेदनं बुद्धेस्तदाकारापत्तौ चिति प्रतिविम्बाधारतया तद्रूपतापत्तौ सत्यां यथाहि चन्द्रमसः क्रियामन्तरेणापि सङ्क्रान्तचन्द्रप्रतिविम्ब ममलं जलमचलं चलमिव चन्द्रमसमवभासयति एवं विनापि चिति व्यापारं उपसंक्रान्त चिति प्रतिविम्बं चित्तं स्वगतया क्रियया क्रियावती मसङ्गतामपि सङ्गतां चिति-

कथं ?—

**चितेरप्रतिसंक्रमायास्तदाकारापत्तौ स्वबुद्धिसंवेदनम् ॥ २२ ॥**

अपरिणामिनी हि भोक्तृशक्तिरप्रतिसंक्रमा च परिणामिन्यर्थे प्रतिसंक्रान्तेव तद्वृत्तिमनुपतति तस्याश्च प्राप्तचैतन्योपग्रहरूपाया बुद्धिवृत्तेरनुकारिमात्रतया बुद्धिवृत्त्यविशिष्टा हि ज्ञानवृत्तिराख्यायते तथाचोक्तं "न पातालं न च विवरं गिरीणां नैवान्धकारं कुक्षयो नोदधीनाम गुहा यस्यां निहितं ब्रह्मशाश्वतं बुद्धिवृत्तिमविशिष्टं कवयो वेदयन्ते इति ॥ २२ ॥





अतश्चैतदभ्युपगम्यते—

**द्रष्टृदृश्योपरक्तं चित्तं सर्व्वार्थं ॥ २३ ॥**

मनोहि मन्तव्येनार्थेनोपरक्तं तत्स्वयञ्च विषयत्वाद्विष-

शक्तिमवभासयत् भोग्यभावमासादयत् भोक्तृभावमापादयति तस्या इति सूत्रार्थः भाष्यमप्येतदर्थमसक्तत्तत्र तत्र व्याख्यातं इति न व्याख्यातमत्र बुद्धिवृत्त्यविशिष्टत्वे ज्ञानवृत्तेरागममुदाहरति । तथाचोक्तं न पातालमिति शाश्वतस्य शिवस्य ब्राह्मणो विशुद्ध स्वभावस्य चितिच्छायापन्नां मनोवृत्तिमेव चितिच्छायापन्नत्वाच्चितेरप्य विशिष्टां गुहां वेदयन्ते तस्यामेव गुहायां तद् गुह्यं ब्रह्मतदपनयितुं स्वयं प्रकाशमनावरणमनुपसर्गं प्रणीतते चरमदेहस्य भगवत इति तदेवं दृश्यत्वेन चित्तस्य परिणामिनस्तदतिरिक्तः पुमान् परिणति धर्म्मोपपादितः । संप्रति लोकप्रत्यक्षमप्यत्र

यिणा पुरुषेणात्मीयया वृत्त्याभिसम्बन्धं तदेतच्चित्तमेव द्रष्टृ-
दृश्योपरक्तं विषयविषयिनिर्भासं चेतनाचेतनस्वरूपापन्नं
विषयात्मकमप्यविषयात्मकमिवाचेतनं चेतनमिव स्फटिक-
मणिकल्पं सर्व्वार्थमित्युच्यते। तदनेन चित्तसारूप्येण
भ्रान्ताः केचित्तदेव चेतन मित्याहुः अपरे चित्तमात्रमेवेदं
सर्व्वं नास्ति। खल्वयं गवादि घटादिश्च सकारणो लोक
इति अनुकम्पनीयास्ते कस्मात् अस्ति हि तेषां भ्रान्तिवीजं
सर्व्वरूपाकार निर्भासं चित्तमिति समाधिप्रज्ञायां प्रज्ञे-

प्रमापयति। अतश्चैतदिति अवश्यं चेतदित्यर्थः। द्रष्टृ—र्थं। यथाहिनीलाद्यनुरक्तं
चित्तं नीलाद्यर्थं प्रत्यचेणैवावस्थापयति एवंद्रष्टृच्छायापत्यातदनुरक्तंचित्तं द्रष्टारमपि
प्रत्यचेणावस्थापयति अस्तिहि इत्याकारं ज्ञानं नीलमहं सम्प्रत्येमि इति तस्मात्
ज्ञेयवत् ज्ञातापि प्रत्यच सिद्धोपि न विविच्यावस्थापितो यथा जले चन्द्रमसो विम्बं
नत्वे तावता तदप्रत्यचं न चास्य जलगतत्वे तद प्रमाणमिति चन्द्ररूपेप्य प्रमाणं
भवितु मर्हति तस्माच्चित्ते प्रतिविम्बित तयाचैतन्यगोचरापि चित्तवृत्तिर्नं चैतन्यागोच-
रेति तदिदं सर्व्वार्थत्वं चित्तस्येति तदेतदाह मनोहीति न केवल तदाकारापत्या
मन्तव्ये नार्थेनोपरक्तं मनः अपितु स्वयं चेतिचकारो भिन्नक्रमः पुरुषेणेत्यस्यानन्तरं
द्रष्टव्यः तच्छायापत्तिः पुरुषस्य वृत्तिः इयञ्च चैतन्यच्छायापत्तिश्चित्तस्य वैनाशिकैः
रभ्युपेतव्या कथमन्यथाचित्ते चैतन्यमिते आरोपयाम्बभूवु रित्याह तदनेनेति केचिद्वै-
नाशिका वाह्यार्थवादिनः। अपरे विज्ञानमात्रवादिनः। ननु यदि चित्तमेव
द्रष्टाकारं दृश्याकारं चानुभूयते हन्त चित्तादभिन्नावेवास्तां द्रष्टृ दृश्यौ यथाहुः।
'अभिन्नोपि हि बुद्ध्यात्मा विपर्य्यासित दर्शनै'ग्राह्यग्राहक संवित्ति भेदवानिवलच्यते'

योऽर्थः प्रतिबिम्बीभूतस्तस्यालम्बनीभूतत्वादन्यः सचेदर्थ-श्चित्तमात्रं स्यात् कथं प्रज्ञयैव प्रज्ञारूपमवधार्य्येत तस्मात् प्रतिबिम्बीभूतोऽर्थः प्रज्ञायां येनावधार्य्यते सपुरुष इति एवं ग्रहीतृग्रहणग्राह्यस्वरूपचित्तभेदास्त्रयमप्येतज्जातितः प्रविभजन्ते ते सम्यग्दर्शिनस्तैरधिगतपुरुषः ॥२३॥

इतश्चैतत्—

**तदसङ्ख्येयवासनाभिश्चित्रमपि परार्थं संहत्य-कारित्वात् ॥ २४ ॥**

तदेतच्चित्तमसङ्ख्येयाभिर्वासनाभिरेव चित्रीकृतमपि परार्थं परस्य भोगापवर्गार्थं न स्वार्थं संहत्यकारित्वाद्गृह-



इति तत्कथमेतेऽनुकम्पनीया इत्यत आह । समाधिप्रज्ञायामिति ते खलूक्ताभि-रुपपत्तिभिश्चित्तातिरिक्तं पुरुषमभ्युपगमय्याप्य अष्टाङ्गयोगोपदेशेन समाधिप्रज्ञाया आत्मगोचरायामवतार्य्य बोधयितव्याः । तद्यथा समाधिप्रज्ञायां प्रज्ञे योऽर्थः आत्मा प्रतिबिम्बीभूतोऽन्यः कस्मात् तस्यात्मनः आलम्बनीभूतत्वात् अथ चित्तादभिन्नमेव कस्मान्नालम्बनं भवतीति यदि युक्तिबोधितोऽपि वैजात्याद्वदेत् तत्र हेतुमाह सचेदात्म-रूपोऽर्थः चित्तमात्रं स्यात् नतु ततो व्यतिरिक्तः ततः कथं प्रज्ञयैव प्रज्ञारूपमवधा-र्य्येत स्वात्म निवृत्ति विरोधात् उपसंहरति । तस्मादिति समीचीनोपदेशेनानु-कम्पिता भवन्तीति आह एवमेतदिति जातितः स्वभावः इत्यर्थः चित्तातिरिक्तात्म सद्भावे हेत्वन्तरमवतारयति इतश्चेति ॥ २२ ॥ २३ ॥

तद—त्वात् । यद्यप्यसङ्ख्येयाः कर्मवासनाः क्लेशवासनाश्च चित्तमेवाधिशेरते न तु पुरुषं तथाच वासनाधीनोऽपि विपाकाश्चित्तमाश्रयतया 'चित्तस्य भोक्तृता

वत् संहत्यकारिणा चित्तेन न स्वार्थेन भवितव्यं न सुखचित्तं सुखार्थं न ज्ञानं ज्ञानार्थमुभयमप्येतत् परार्थं यश्च भोगेनापवर्गेन चार्थेनार्थवान् पुरुषः स एव परो न परः सामान्यमात्रं यत्तु किञ्चित्परं सामान्यमात्रं स्वरूपेणोदाहरेद्वैनाशिकस्तत् सर्व्वं संहत्यकारित्वात् परार्थमेव स्यात् यस्त्वसौ परोविशेषः स न संहत्यकारी पुरुष इति॥ २४॥

मावहन्ति। भोक्तुरर्थं च भोग्यमिति सर्व्वं चित्तार्थं प्राप्तं तथापि तच्चित्तमसङ्ख्येय वासना विचित्रमपि परार्थं कस्मात् संहत्यकारित्वादितिसूत्रार्थः। व्याचष्टे तदेतदिति स्यादेतच्चित्तं संहत्यापि करिष्यति स्वार्थश्च भविष्यति कः खलु विरोध इति यदि कश्चित् ब्रूयात् तं प्रत्याह। संहत्यकारिणेति सुखचित्तमिति भोगमुपलक्षयति तेन दुःख चित्तमपि द्रष्टव्यं ज्ञानमित्यपवर्ग उक्तः एतदुक्तं भवति सुखदुःखचित्ते प्रतिकूलानुकूलात्मकेनात्मनि सम्भवतः स्वात्मनि वृत्तिविरोधात् न चान्योऽपि संहत्यकारी साक्षात् परम्परया वा सुखदुःखे विदधानस्ताभ्यामनुकूलनीयः प्रतिकूलनीयो वा तस्मादयं साक्षात् परम्परया वा न सुखदुःखयोर्व्याप्रियते स एवाथमनुकूलनीयः प्रतिकूलनीयो वा स च नित्योदासीनः पुरुषः एवमपवृज्यते येन ज्ञानेन तस्यापि ज्ञेय तन्त्रत्वात् स्वात्मनि च वृत्तिविरोधान्न ज्ञानार्थत्वं न चान्यविषयादन्यादपवर्ग सम्भवो विदेहप्रकृतिलयानामपवर्गासम्भवात् तस्मात्तत् ज्ञानमपि पुरुषार्थमेव न तत् स्वार्थं संहतपरार्थत्वे चानवस्था प्रसङ्गादसंहत परार्थ सिद्धिरिति तदेवं कैवल्यमूलवीजं समलमात्मदर्शनमुक्त्वा तदुपदेशाधिकृतं पुरुषमनधिकृत पुरुषान्तराद्व्यावृत्तमाह। विशेष निवृत्तिः यस्यात्मभावे भाव नास्ति तस्याष्टाङ्ग योगोपदेशादनुतिष्ठतो युञ्जानस्य तत्परिपाकात् चित्तसत्वपुरुषयो विशेष दर्शनादात्मभावना निवर्त्तते यस्यात्मभावभावनैव नास्ति नास्तिकस्य तस्योपदेशानधि-

विशेषदर्शिन आत्मभावभावनानिवृत्तिः ॥२५॥

यथा प्रावृषि तृणाङ्कुरस्योद्भेदेन तद्वीजसत्तानुमीयते तथा मोक्षमार्गश्रवणेन यस्य रोमहर्षाश्रुपातौ दृश्येते तत्राप्यस्ति विशेषदर्शनबीजमपवर्गभागीयं कर्म्माभिनिर्वर्त्तितमित्यनुमीयते तस्यात्मभावभावना स्वाभाविकी प्रवर्त्तते यस्याभावादिदमुक्तं स्वभावं मुक्त्वा दोषाद् येषां पूर्वपक्षे रुचिर्भवत्यरुचिश्च निर्णये भवति। तत्रात्मभावभावना कोऽहमासं कथमहमासं किंस्विदिदं कथंस्विदिदं के भविष्यामः कथं भविष्याम इति सा तु विशेषदर्शिनो निवर्त्तते कुतः चित्तस्यैवैष विचित्रः परिणामः पुरुषस्त्वसत्यामविद्यायां शुद्धश्चित्तधर्म्मैरपरामृष्ट इति ततोऽप्यात्मभावभावनाकुशलस्य निवर्त्तत इति ॥ २५ ॥

कृतस्यापरिनिश्चितात्मतत्परलोकभावस्य नोपदेशो न विशेषदर्शनं नात्मभावभावना निवृत्तिरिति सूत्रार्थः ॥ २४ ॥

नन्वात्मभाव भावनायाः चित्तवर्त्तिन्याः कुतोऽवगम इत्यत आह। यथा प्रावृषीति प्राग्भवीयं तत्वदर्शनबीजमपवर्गभागीयं यत्कर्म्माष्टाङ्गयोगानुष्ठानं तदेकदेशानुष्ठानं वा तदभिनिर्वर्त्तितमस्तीत्यनुमीयते तस्यचात्मभावभावनावश्यमेव स्वाभाविकी यत्नाभ्यासं विनापि प्रवर्त्तते अनधिकारिणमागमिनां वचनेन दर्शयति यस्याभावादिदमिति पूर्व्वपक्षःनास्तिकर्म्मफलं परलोकिनोभावात् परलोकाभाव इति तत्र रुचिररुचिश्च निर्णये पञ्चविंशति तत्व विषये आत्मभावभावना प्राग्व्याख्याता विशेष दर्शिनः परामर्शमाह। चित्तस्यैवेति तस्य विशेषदर्शनकुशलस्यात्मभावना विनिवर्त्तते इति ॥ २५ ॥

**तदा विवेकनिम्नं कैवल्यप्राग्भावं चित्तम् ॥ २६ ॥**

तदानीं यदस्य चित्तं विषय प्राग्भावमज्ञाननिम्नमासीत्तदस्यान्यथा भवति कैवल्यप्राग्भवं विवेकजज्ञाननिम्नमिति ॥ २६ ॥

**तच्छिद्रेषु प्रत्ययान्तराणि संस्कारेभ्यः ॥ २७ ॥**

प्रत्ययविवेकनिम्नस्य सत्वपुरुषान्यताख्यातिमात्रप्रवाहिनश्चित्तस्य तच्छिद्रेषु प्रत्ययान्तराण्यस्मीति वा ममेति वा जानामीति वा न जानामीति वा कुतः क्षीयमाणबीजेभ्यः पूर्व्वसंस्कारेभ्यः इति ॥ २७ ॥

**हानमेषां क्लेशवदुक्तम् ॥ २८ ॥**

यथा क्लेशा दग्धबीजभावना प्ररोहसमर्था भवन्ति तथा ज्ञानाग्निना दग्धबीजभावः पूर्व्वसंस्कारो न प्रत्ययप्रसूर्भवति

अथ विशेष दर्शिनः कीदृशं चित्तमित्यत आह । तदा—चित्तं । निगदव्याख्यातं ॥ २६ ॥ स्यादेतद्विशेष दर्शनं चेद्विवेक निष्ठं न जातु चित्तं व्युत्थितं स्याद्दृश्यते चास्यभिक्षामटतो व्युत्थित मित्यत आह । त—भ्यः । प्रत्ययेति प्रतीयते येनस प्रत्ययश्चित्त सत्वं तस्माद्विवेकस्थितेः । तेन निम्नस्य जानामीति साक्षात् मोक्षीविविच्य दर्शितो न जानामीति मोहस्तन्मूलावहङ्कार ममकारावहं मस्मीति वा ममेति दर्शितो क्षीयमाणानि च तानि बीजानि चेति समासः पूर्व्व संस्कारेभ्योः व्युत्थान संस्कारेभ्यः ॥ २७ ॥

स्यादेतत् सत्यपि विवेकज्ञाने व्युत्थान संस्कारा यदि प्रत्ययान्तराणि

ज्ञानसंस्कारास्तु चित्ताधिकारसमाप्तिमनुशेरत इति न चिन्त्यते ॥ २८ ॥

**प्रसङ्ख्यानेप्यकुसीदस्य सर्व्वथा विवेकख्याते र्धर्म्ममेघः समाधिः ॥ २९ ॥**

यदायं ब्राह्मणः प्रसङ्ख्यानेप्यकुसीदस्ततोपि न किञ्चित् प्रार्थयते तत्रापि विरक्तस्य सर्व्वथा विवेकख्यातिरेव भवतीति संस्कारवीजक्षयान्नास्य प्रत्ययान्तराण्युत्पद्यन्ते तदास्य धर्म्म-मेघोनाम समाधिर्भवति ॥ २९ ॥

प्रसुवते कस्तर्हि हानहेतवे तेषां यतः प्रत्ययान्तराणि न पुनः प्रसुवीरन्नित्यत आह। हान—क्तं। अपरिपक्व विवेकज्ञानस्याक्षीयमाणा व्युत्थान संस्कारा प्रत्ययान्तरं प्रसुवते न तु परिपक्व विवेकज्ञानस्य क्षीणाः प्रत्ययान्तराणि प्रसोतुमर्हन्ति यथा विवेकच्छिद्र समुत्पन्ना अपि क्लेशा न संस्कारान्तरं प्रसुवते तत्कस्य हेतोःतदेते क्लेशा विवेकज्ञान वह्निदग्धवीजभावा इति एवं व्युत्थान संस्कारा अपीति अव्युत्थान संस्कारा विवेकज्ञान संस्कारै निरोद्धव्याः विवेक संस्काराश्च निरोधसंस्कारैः निरोध संस्काराणान्त्व वाह्यविषयत्वं दर्शितं निरोध उपायः प्रायश्चित्तनीय इत्यत आह। ज्ञानसंस्कारा स्विति परवैराग्य संस्कारा इत्यर्थः ॥ २८ ॥

तदेवं सूत्रकारो व्युत्थान निरोधोपायं प्रसङ्ख्यानमुक्ता प्रसङ्ख्यान निरोधो-पाय माह। प्र—समाधिः ततःप्रसङ्ख्यानान्नकिञ्चित् सर्व्वभावाधिष्ठातत्वादि प्रार्थयते प्रत्युत तत्रापि क्लिश्नाति परिणामित्वदोषदर्शनेन विरक्तः सर्व्वथा विवेकख्यातिरेव भवति एतदेव विवृणोति तत्रापीति यद्यव्युत्थान प्रत्यया भवेयुः तदा नायं ब्राह्मणः सर्व्वथा विवेकख्यातिः यतस्तस्य न प्रत्ययान्तराणि भवन्ति ततः सर्व्वथा विवेकख्याति

**ततः क्लेशकर्म्मनिवृत्तिः ॥ ३० ॥**

तल्लाभादविद्यादयः क्लेशाः समूलकाषं कषिता भवन्ति कुशलाकुशलाश्च कर्म्माशयाः समूलघातं हता भवन्ति क्लेशकर्म्मनिवृत्तौ जीवन्नेव विद्वान विमुक्तो भवति·कस्मात् यस्माद्विपर्य्ययो भवस्यकारणं न हि चीणविपर्य्ययः कश्चित् केनचित् क्वचिज्जातो दृश्यते इति ॥ ३० ॥

**तदा सर्व्वावरणमलापेतस्य ज्ञानस्यानन्त्यात् ज्ञेयमल्पम् ॥ ३१ ॥**

सर्व्वैः क्लेशकर्म्मावरणैर्विमुक्तस्य ज्ञानस्यानन्त्यं भवति तमसाभिभूतमावृतं ज्ञानसत्वं क्वचिदेव रजसा प्रवर्त्तित मुद्घाटितं ग्रहणसमर्थं भवति तत्र यदा सर्वैरावरणमलै-रपगतमलं भवति तदा भवत्यस्यानन्त्यं ज्ञानस्यानन्त्या-



रिति तदास्यधर्म्ममेघःसमाधिर्भवति । एतदुक्तं भवति प्रसङ्ख्याने विरक्तः सन्निरोध-मिच्छन् धर्म्ममेघं समाधिमुपासीत तदुपासनेच सर्व्वथा विवेकख्यातिर्भवति ॥२९॥

तन्निरोधं पारयतीति तस्य च प्रयोजन माह । ततः। कस्मात् पुनर्जीवन्नेव विद्वान् विमुक्तीभवति उत्तरं यस्माविति क्लेशकर्म्म वासनेद्धः किलकर्म्माशयी जात्यादि निदानं न चासति निदाने निदानीभवितुमर्हति यथाहाव भगवानक्षपादः "वीतराग जन्मादर्शनादिति" ॥ ३० ॥

यथैवं धर्म्ममेघे सति कीदृशं चित्तमित्यत आह । तदासर्व्वा—ल्पं । आव्रियते चित्तसत्वमेभिरिति आवरणानि मलाः क्लेशकर्म्माणि सर्व्वं च ते आवरण मलाश्चेति

ज्ञेयमल्पं सम्पद्यते यथाकाशे खद्योतः यत्रेदमुक्तं 'अन्धोमणि मविध्यत्तमनङ्गुलिरावयत् अग्रीवस्तं प्रत्यमुञ्चत्त मजिह्वोभ्य पूजय'द्दिति ॥ ३१ ॥

ततः कृतार्थानां परिणामक्रमसमाप्तिर्गुणानाम् ॥ ३२ ॥

तस्य धर्म्ममेघस्योदयात् कृतार्थानां गुणानां परिणामक्रमः परिसमाप्यते नहि कृतभोगापवर्गाः परिसमाप्तक्रमाः क्षणमप्यवस्थातु मुत्सहन्ते ॥ ३२ ॥

सर्व्वावरणमलाः तेभ्योपेतस्य चित्तसत्वस्य ज्ञानस्य ज्ञायते नेनेति अनया व्युत्पत्त्या आनन्त्यादपरिमेयत्वात् ज्ञेयमल्पम्। यथा हि शरदि घनपटल मुक्तस्य चन्द्रार्च्चिषः परितः प्रद्योतमानस्य प्रकाशानन्त्यात् प्रकाश्याः घटादयोल्पाः प्रकाशन्ते एवमपगत रजस्तमसश्चित्तसत्वस्य प्रकाशानन्त्यादल्पं प्रकाश्यमिति तदेतदाह। सर्व्वैरिति एतदेव व्यतिरेक मुखेन स्फोरयति आवरकेण तमसाभिभूतमिति क्रियाशीलेन रजसा प्रवर्त्तित मतएवोद्घाटितं प्रदेशादपनीतं तमइत्यर्थः अतएव सर्व्वान् धर्म्मान् ज्ञेयान् मेहति वर्षति प्रकाशनेनेति धर्म्ममेघ इत्युच्यते नन्वयमस्तु धर्म्ममेघः समाधि सवासन क्लेशकर्म्माशय प्रशमहेतुः अथ सत्यप्यस्मिन कस्मात् न जायते पुनर्जन्तुः इत्यत आह। यत्रेदमुक्तमिति कारणसमुच्छेदोपिचेत् कार्य्यं क्रियते हन्त भोः मणिवेधादयोन्धादिभ्यो भवेयुः प्रत्यक्षाः तथाचानुपपन्नार्थतायामाभाणको लौकिक उपपन्नार्थः स्यात् अविध्यदन्धोमणिमिति आवयत् ग्रथितवान् प्रत्यमुञ्चत् पिनद्धवान् अभ्यपूजयत् स्तुतवानिति ॥ ३१ ॥

ननु धर्म्ममेघस्य परा काष्ठा ज्ञानप्रसादमात्रं परं वैराग्यं समूलघातमपहन्तु व्युत्थान समाधिः संस्कारान् स क्लेशकर्म्माशयान् गुणास्तु, स्वतएव विकार

अथ कोयं क्रमोनामेति—

**क्षणप्रतियोगीपरिणामापरान्तनिर्ग्राह्यः क्रमः॥३३**

क्षणानन्तर्य्यात्मा परिणामस्यापरान्तेनावसानेन गृह्यते क्रमः नह्यननुभूतक्रमक्षणा पुराणता वस्त्रस्यान्ते भवति नित्येषु च क्रमोदृष्टः द्वयी चेयं नित्यता कूटस्थ नित्यता परिणामनित्यताच तत्र कूटस्थ नित्यता पुरुषस्य परिणामनित्यता गुणानां यस्मिन् परिणम्यमाने तत्त्वं

करणशीलाः कस्मात्तादृशमपि पुरुषं प्रति देहेन्द्रियादिनारभन्त इत्यत आह। ततो—गुणानां। शीलमिदं गुणानां यदमीयं प्रतिक्रियार्थास्तं प्रति न प्रवर्त्तन्ते इति भावः॥ ३२॥

अत्रान्तरे परिणामक्रमं पृच्छति। अथ कोयमिति क्षण—क्रमः। परिणाम क्षण-प्रति योगीक्षणः प्रतिसम्बन्धी यस्य स तथोक्तः क्षण प्रचयाश्रय इत्यर्थः न जातु क्रमः क्रमवन्तमन्तरेण शक्योनिरूपयितुं नचैकस्यैव क्षणस्य क्रमः तस्मात् क्षणप्रचयाश्रयः परिशिष्यते तदिदमाह क्षणानन्तर्य्येति। परिणामक्रमे प्रमाणमाह परिणामस्येति नवस्यहि वस्त्रस्य प्रयत्न संरक्षितस्यापि चिरेण पुराणता दृश्यते सोयं परिणाम-स्यापरान्तः पर्य्यवसानं तेन हि परिणामस्य क्रमः ततः प्रागपि पुराणतायाः सूक्ष्म सूक्ष्मतर सूक्ष्मतम स्थूल स्थूलतर स्थूलतमत्वादीनां पौर्वापर्य्यमनुमीयते एतदेव व्यति-रेक मुखेन दर्शयति नहीति अननुभूतोऽप्राप्तः क्रमक्षणो यया सा तथोक्ता नन्वेष क्रम प्रधानस्य न सम्भवति तस्य नित्यत्वादित्यत आह। नित्येषु चेति बहुवचनेन सर्व्वनित्यव्यापितां क्रमस्य प्रतिजानीते तत्र नित्यानां प्रकारभेदं दर्शयित्वा नित्य-व्यापितां क्रमस्य उपपादयति॥ द्वयीति ननु कूटस्थं स्वभावादप्रच्युतमस्तु नित्यं यदि परिणामि सदैव स्वरूपात् च्यवमानं कथं नित्यमित्यत आह। यस्मिन्निति

न विहन्यते तन्नित्यं उभयस्य च तत्वानभिघातान्नित्यत्वं तत्र गुणधर्म्मेषु बुद्ध्यादिषु परिणामापरान्तनिर्ग्राह्यः क्रमोलब्धपर्य्यवसानो नित्येषु धर्म्मिषु गुणेष्वलब्धपर्य्यवसानः कूटस्थनित्येषु स्वरूपमात्रप्रतिष्ठेषु मुक्तपुरुषेषु स्वरूपास्तिता क्रमेणैवानुभूयत इति तत्राप्यलब्धपर्य्यवसानः शब्दपृष्ठेनास्ति क्रियामुपादाय कल्पित इति अथास्य संसारस्य स्थित्या गत्याच गुणेषु वर्त्तमानस्यास्ति क्रमसमाप्तिर्नवेति अवचनीयमेतत् कथं अस्ति प्रश्न एकान्तवचनीयः

धर्म्मलक्षणावस्थानामुदयव्ययधर्म्मत्वं धर्म्मिणस्तु तत्वादविघात एवेति अथ किं परिणामापरान्तनिर्ग्राह्यता सर्व्वक्रमस्य नेत्याह तत्र गुणधर्म्मेषु बुद्ध्यादिष्विति यतो लब्धपर्य्यवसानः धर्म्माणां विनाशात् प्रधानस्य तु परिणामक्रमोनलब्धपर्य्यवसानः। ननु प्रधानस्य धर्म्मरूपेण परिणामादस्तु परिणामक्रमः। पुरुषस्यत्वपरिणामिनः कुतः परिणामक्रम इत्यतआह कूटस्थेति तत्र बद्धानां चित्ताव्यतिरेकाभिमानात् तत्परिणामेनपरिणामाध्यासः मुक्तानान्त्वास्तिक्रियामुपादायावास्तवोपिपरिणामक्रमोहकल्पितः शब्दस्य पुरःसरतया तत् पृष्ठोविकल्पोऽस्ति क्रियामुपादत्त इति गुणेष्वलब्धपर्य्यवसानः परिणामक्रमइत्युक्तम् तदसहमानः पृच्छति अथेति। स्थित्येति महाप्रलयावस्थायां गत्येति सृष्टौ एतदुक्तम्भवति यद्यानन्तान्नपरिणामसमाप्तिः संसारस्य हन्त भोः कथं महाप्रलयसमये सर्व्वेषामात्मनां सह संसारसमुच्छेदोत कथञ्च सृष्टादौ सहसोत्पद्येत संसारः तस्मादेकैकस्यात्मनोमुक्तिक्रमेण सर्व्वेषां विमोक्षादुच्छेदः सर्व्वेषां संसारस्य क्रमेणेति प्रधान परिणाम क्रम परिसमाप्तिः एवञ्च प्रधानस्याप्यनित्यत्व प्रसङ्गः न चापूर्व्वसत्व प्रादुर्भाव इष्यते येनानन्त्यं स्यात् तदसत्यनादित्वव्याहतेः सकलशास्त्रार्थ भङ्गप्रसङ्ग इतिभावः। उत्तरमाह अवचनीयमनुत्तरार्हमेतत् एकान्ततएव तस्यावचनीयतां दर्शयितुमेकान्तवचनीयं प्रश्नं दर्शयति।

सर्व्वोजातो मरिष्यति ओं भो इति अथ सर्व्वो मृत्वा जनिष्यत इति विभज्य वचनीयमेतत् प्रत्युदितख्यातिः क्षीणतृष्णः कुशलो न जनिष्यते इतरस्तु जनिष्यते। तथा मनुष्यजातिः श्रेयसी न वा श्रेयसीत्येवं परिपृष्टे विभज्य वचनीयः प्रश्नः पशूनधिकृत्य श्रेयसी देवानृषींश्चाधिकृत्य नेति अयन्त्ववचनीयः प्रश्नः संसारोयमन्तवानथानन्त इति कुशलस्यास्ति संसारक्रमपरिसमाप्तिर्नेतरस्येति अन्यतरावधारणे दोषः तस्माद्व्याकरणीयएवायं प्रश्न इति ॥३३॥

अस्ति प्रश्न इति सर्व्वोजातो मरिष्यतीति प्रश्न उत्तरं ओं भोः इति स सत्यं भो इत्यर्थः अविभज्य वचनीयमुक्त्वा प्रविभज्यवचनीयं प्रश्नमाह। अथ सर्व्व इति विभज्य वचनीयतामाह विभज्येति विभज्य वचनीयमेव प्रश्नान्तरं विस्पष्टार्थमाह तथा मनुष्येति अयन्त्ववचनीय एकान्ततः न हि सामान्येन कुशलाकुशल पुरुष संसार सान्तत्वमनन्तत्वं वा शक्यमेकान्ततो वक्तुं यथा प्राणभृन्मात्रस्य श्रेयस्त्वमश्रेयस्त्वं वानेकान्ततः शक्यमवधारयितुं यथा जातमात्रस्य मरणमेकान्ततो विभज्य पुनः शक्यावधारणमित्याह। कुशलेति अयमभिसन्धिक्रमेण मोक्षे सर्व्वेषां मोक्षात् संसारोच्छेद इत्यनुमानं तच्चागमनुसिद्ध मोक्षाश्रयं तथा वाभ्युपगत मोक्ष प्रतिपादकागम प्रमाणभावः कथं तमेवागमं प्रधान विकार नित्यतायामप्रमाणी कुर्य्यात् तस्मादागमावधित विषयमेतदनुमानं न प्रमाणं श्रूयते हि श्रुति स्मृति इतिहास पुराणेषु सर्गप्रतिसर्ग परम्परायां अनादित्वमनन्तत्वं चेति अपिच सर्व्वेषामेवात्मनां संसारस्य न तावद् युगपदुच्छेदः सम्भवी न हि पण्डितरूपानामप्यनेक जन्मपरम्पराभ्यास परिश्रमसाध्या विवेकख्याति प्रतिष्ठा किं पुनः प्राणभृन्मात्रस्य स्थावर जङ्गमादेरेकदाऽकस्मात् भवितुमर्हतीति न च कारणायौगपद्ये कार्य्ययौगपद्यं युज्यते

गुणाधिकारक्रमसमाप्तौ कैवल्यमुक्तं तत्स्वरूपमवधार्य्यते—

**पुरुषार्थशून्यानां गुणानां प्रतिप्रसवः कैवल्यं स्वरूपप्रतिष्ठा वा चितिशक्तिरिति ॥ ३४ ॥**

कृतः भोगापवर्गाणां पुरुषार्थशून्यानां यः प्रतिप्रसवः कार्य्यकारणात्मनां गुणानां तत् कैवल्यस्वरूपप्रतिष्ठा पुनर्बुद्धिसत्वानभिसम्बन्धात् पुरुषस्य चितिशक्तिरेव केवला तस्याः सदा तथैवावस्थानं कैवल्यमिति ॥ ३४ ॥



क्रमेण तु विवेकख्यातावसंख्येयानां क्रमेण मुक्तौ न संसारोच्छेदः अनन्तत्वाज्जन्तुनामसङ्ख्येयत्वादिति सर्व्वमवदातम् ॥ ३३ ॥

कैवल्यरूपावधारणपरस्य सूत्रस्यावान्तरसङ्गतिमाह गुणाधिकारेति पुरुषार्थशून्यानां गुणानां प्रतिप्रसवः कैवल्यं स्वरूप प्रतिष्ठा वा चिति शक्तिरिति। कृतः करणीयतया पुरुषार्थशून्यानां यः प्रतिप्रसवः स्वकारणे प्रधाने लयः तेषां कार्य्यकारणात्मनां गुणानां व्युत्थान समाधिनिरोध संस्कारा मनसि लीयन्ते मनोऽस्मितायां अस्मिता लिङ्गे लिङ्गमलिङ्गे इति योयं गुणानां कार्य्यकारणात्मकानां प्रतिसर्गः तत्कैवल्यं यं कञ्चित् पुरुषं प्रति प्रधानस्य मोक्षः स्वरूप प्रतिष्ठा पुरुषस्य व मोक्ष इत्याह। स्वरूपेति। अस्ति हि महाप्रलयेपि स्वरूप प्रतिष्ठा चितिशक्तेर्न चासौ मोक्ष इत्यत आह। पुनरिति सौत्र इतिशब्दः शास्त्रपरिसमाप्तौ ॥ ३४ ॥

इति श्रीपातञ्जले योगशास्त्रे साङ्ख्यप्रवचने कैवल्यपाद-
श्चतुर्थः सम्पूर्णः ॥

॥ ग्रन्थश्चायं समाप्तः ॥

मुक्त्यर्हं चित्तं परलोकमेय प्रसिद्धयी धर्म्मो घनः समाधिः ।
द्वयी च मुक्तिः प्रतिपादितास्मिन् पादे प्रसङ्गादपि चान्यदुक्तम् ॥
निदानं तापानामुदितमथ तापाश्च कथिताः
सहाङ्गैरष्टाभिर्विहितमिह योगद्वयमपि ।
कृतीमुक्तेरध्वा गुणपुरुषभेदः स्फुटतरो
विविक्तं कैवल्यं परिगणिततापा चितिरसौ ॥ ४ ॥

इति श्रीवाचस्पतिमिश्रविरचितायां पातञ्जलभाष्यव्याख्यायां कैवल्य-
पादश्चतुर्थः समाप्तः ।

॥ ग्रन्थश्चायं समाप्तः ॥



